॥ श्रीरस्तु ॥

॥ द्राविडाम्नाय दिव्यप्रबन्धटीका-संस्कृत और हिन्दी ॥

॥ श्रीपराङ्कुशपरकालयतिवरवरमुनीन्द्रेभ्यो नमः ॥

द्राविडाम्नायचतुस्सहस्रदिव्यप्रबन्धवर्गे

# * चतुर्थं सहस्रम् - सहस्रगीतिः *

तत्र प्रथमशतकम् [द्वितीयशतकं च ॥]

---

श्रीकाञ्ची प्रतिवादिभयङ्कर जगदाचार्यसिंहासनाधीश
श्रीमदण्णङ्गराचार्य विलिखितया संस्कृतटीकया

श्रीमद्यादवाद्रि· अक्कारक्कनि· संपत्कुमाराचार्य विलिखितया
हिन्दीटीकया च सनाथम्

राजस्थानमौलासरवास्तव्य· परमभागवत
श्रीयुत सेठजी· रामदयाळ सोमाणी महात्मनो द्रव्यसाहाय्येन



* मदरास. लिबर्टि मुद्रणालये सम्मुद्रितम् *

प्राप्तिस्थानम्—
Jagadacharya P. B. ANNANGARACHARYA,
L. KANCHEEPURAM.

—***—

समग्रचतुस्सहस्रगाथाटीकाद्वयमूल्यम् अग्रिमं पञ्चाशन्मुद्रामात्रम्.

1963.

# * अप्यदिव्यप्रबन्धटीकासूची *

१९६३ संवत्सरीय-आगस्टमासावसानपर्यन्तं संमुद्रय प्रकाशितानां दिव्यप्रबन्धटीकापुस्तकानां सूची ।

१. श्रीभट्टनाथसूरिवरानुगृहीत-तिरुप्पल्लाण्डु-पेरियाऴ्वार्तिरुमोऴिनाम्नोः दिव्यप्रबन्धयोस्संस्कृतटीका

२. „ „ हिन्दीटीका

३. श्रीगोदादेव्यनुगृहीत-तिरुप्पावैदिव्यप्रबन्धस्य संस्कृतटीका

४. „ हिन्दीटीका

५. श्रीगोदादेव्यनुगृहीत-नाच्चियार्तिरुमोऴि, श्रीकुलशेखरसूर्यनुगृहीत-पेरुमाळ्तिरुमोऴि, श्रीमक्तिसार-मुनीन्द्रानुगृहीतं तिरुच्चन्दविरुत्तम्, श्रीमक्ताङ्घ्रिरेणुसूरिवरानुगृहीतौ तिरुमालै. तिरुप्पळ्ळियेऴुच्चिदिव्य प्रबन्धौ, श्रीपाणसूरीन्द्रानुगृहीत अमलनादिपिरान्, श्रीमधुरकविसूर्यनुगृहीतः कण्णिनुण्शिरुत्ताम्बु. इत्येते प्रबन्धा एकसम्पुटात्मकाः ( सम्पुटेऽस्मिन् तिरुप्पावैप्रबन्धोऽपि घटितोऽस्ति.)

६. „ हिन्दीटीका

७. श्रीपरकालसूरीन्द्रानुगृहीते पेरियतिरुमोऴि (बृहत्सूक्त) समाख्ये द्वितीयसहस्रे प्रथमं द्वितीयं चेति शतकद्वयम् संस्कृतटीकया हिन्दीटीकया च समेतम्

८. उपरि निर्दिष्टे बृहत्सूक्ते दशममेकादशं चेति शतकद्वयम्-संस्कृतटीकान्वितम्

९. „ हिन्दीटीकान्वितम्

१०. तृतीयसहस्रे श्रीपरकालसूरीन्द्रानुगृहीताः तिरुवेळुक्कूत्तिरुक्कै, शिरियतिरुमडल्, पेरियतिरुमडल् समाख्याः त्रयो दिव्यप्रबन्धाः संस्कृतटीकया हिन्दीटीकया च समन्विताः

११. चतुर्थसहस्रे-सहस्रगीत्याम् प्रथमं शतकम् संस्कृतटीकया हिन्दीटीकया च सनाथम् ॥ आहत्य एकादश सम्पुटानि अद्यावधि मुद्रितानि. प्रकाशितानि च ॥

क्रमश उपर्युपरि उभयटीकामुद्रणं च वेगेन प्रचलति। प्रतिमासं प्रतिमासद्वयं वा नियतमेकैकं सम्पुटं प्रकाशयेम । सकृदेव पश्चात्सन्मुद्रासमर्पकाणां चतुस्सहस्रप्रबन्धा अप्युभयटीकासमेता स्सुलभास्स्युः क्रमेण।

इति.

प्र. अण्णङ्गराचार्यः

20—8—1963.

॥ श्रीः ॥

# भूमिका

यह तो निर्विवाद है कि प्रपंच के भक्तिसाहित्यों का अग्रस्थान, द्राविडदेश में अवतीर्ण "आळ्वार" शुभनाम से प्रसिद्ध दिव्यसूरियों के गाये हुए दिव्यप्रबंधों को मिलता है। जिस समय, नाना कारणों से हमारे देश में भक्तिमार्ग बहुत क्षीण हो गया था, तब श्रीमन्नाथमुनिस्वामीजी, श्रीयामुनाचार्यस्वामीजी, श्रीरामानुजाचार्य स्वामीजी इत्यादि महान आचार्यों ने इन दिव्यप्रबंधों के सहारे ही उसका पुनरुद्धार किया।

ऐसे दिव्यप्रबंधों के लगभग चार हजार द्राविडी गाथाओं से युत होने से, इन्हें चारहजार दिव्यप्रबंध कहने की रूढि है। इनमें से, श्रीशठकोपसूरि (नम्माळ्वार) की गायी हुई तिरुवाय्‌मोऴि नामक सहस्रगीति (जिसमें ११०२ गाथाएं हैं) मुख्य मानी जाती है; क्योंकि इसमें ही भक्तितत्व का एवं तदुपयुक्त दूसरे अनेक तत्वार्थों का बडा सुंदर व रोचक वर्णन किया गया है। अत एव श्रीवैष्णव-संप्रदाय के प्राचीन आचार्यों ने इसका खूब प्रचार किया, इस पर अनेक टीकाएं लिखी, विस्तृत विवेचन भी किया। अतः इस ग्रंथ का माहात्म्य वाचामगोचर है।

ऐसे महान ग्रंथ का प्रचार इस सारे देश में होना अत्यावश्यक है। परंतु अभी तक यह प्रचार पर्याप्त मात्रा में नहीं हुआ है। इसका मुख्य कारण यही है कि इस ग्रंथ का स्पष्ट शब्दार्थ व भावार्थ बतानेवाला ग्रंथ, संस्कृत वा हिंदी में अभीतक नहीं लिखा गया। अब इस न्यूनताके परिहारार्थ यह ग्रंथ प्रकाशित किया जा रहा है। इसमें (१) मूल द्राविडी गाथा, (नागरी अक्षरों में)। (२) उसका अनुवाद, (३) और पूर्वाचार्यों की परंपरा से प्राप्त अनेक विशेषार्थ—इतने विषय शामिल हैं। अनुवाद व व्याख्यान संस्कृत तथा हिंदी भाषा में लिखे गये हैं।

यह ग्रंथ तैयार करने की प्रेरणा, तथा छपाने का खर्च देकर प्रोत्साहित करनेवाले मौलासर के निवासी धर्मपरायण सेठजी रामदयाल सोमानी जी को भगवान की कृपा से आयुरारोग्यैश्वर्यादि समस्त सन्मंगल हो, यह समस्त आस्तिकजनता का मंगलाशासन है।

हमारी आशा है कि भक्तिमार्ग में चलना चाहने वाली जनता हमारे इस प्रयत्न का परिपूर्ण लाभ उठावेगी।

२५-१२-१९६३ श्रीकाञ्ची-प्रतिवादि भयंकर अण्णंगराचार्य स्वामीजी.



श्रीयुत. सेठजी. परम-भागवत श्रीविष्णुदास
रामदयाळ सोमाणी (बम्बई) मालासर. राजस्थान.

॥ श्रीरस्तु ॥

श्रीहस्तिशैलशिखरोज्ज्वलपारिजाताय नमः ॥



श्रीपराङ्कुशपरकालयतिवर वरवरमुनीन्द्रेभ्यो नमः ॥

# द्राविडाम्नायदिव्यप्रबन्ध विवर्तं चतुर्थसहस्रम्

# तिरुवाय्मोळीति प्रथिता

## सहस्रगीतिः

—: प्रपन्नजनकूटस्थश्रीशठकोपमुनीन्द्रदिव्यसूक्तिः :—

(श्रीकाञ्चीप्रतिवादिभयङ्कर - अण्णङ्गराचार्यकृतानुवाद - तद्विवरणसमेता)

[ सर्वदिव्यप्रबन्धसाधारणस्तुतिपद्यानि ]

—: भगवता श्रीरङ्गनाथेनानुगृहीत श्रीवरवरमुनीन्द्रस्तुतिपद्यम् :—

श्रीशैलेशदयापात्रं धीभक्त्यादिगुणार्णवम् ।
यतीन्द्रप्रवणं वन्दे रम्यजामातरं मुनिम् ॥

—: श्रीकूरेशगुरुवरानुगृहीत गुरुपरम्परास्तुतिपद्यम् :—

लक्ष्मीनाथसमारम्भां नाथयामुनमध्यमाम् । अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

— श्रीकूरेशगुरुवरानुगृहीत भगवद्रामानुजस्तुतिपद्यम् .—

यो नित्यमच्युतपदाम्बुजयुग्मरुक्मव्यामोहतस्तदितराणि तृणाय मेने ।
अस्मद्गुरोर्भगवतोऽस्य दयैकसिन्धोः रामानुजस्य चरणौ शरणं प्रपद्ये ॥

—: भगवद्यामुनमुनीन्द्रैरनुगृहीतं श्रीशठकोपमुनीन्द्रस्तुतिपद्यम् :—

माता पिता युवतयस्तनया विभूतिः सर्वं यदेव नियमेन मदन्वयानाम् ।
आद्यस्य नः कुलपतेर्वकुलाभिरामं श्रीमत्तदङ्घ्रियुगलं प्रणमामि मूर्ध्ना ॥

—. श्रीपराशरभट्टार्यैरनुगृहीत सकलदिव्यसूरि स्तुतिपद्यम् :—

भूतं सरश्च महदाह्वय भट्टनाथ श्रीभक्तिसार कुलशेखर योगिवाहान् ।
भक्ताङ्घ्रिरेणु परकाल यतीन्द्रमिश्रान् श्रीमत्पराङ्कुशमुनिं प्रणतोऽस्मि नित्यम् ॥

॥ सर्वदिव्यप्रबन्धसाधारणस्तुतिपद्यानि समाप्तानि ॥

॥ श्रीरस्तु ॥

## * सहस्रगीतेरसाधारण मुखपद्यानि *

( संस्कृतपद्यमेकम्, द्राविडपद्यानि पश्चेति षट् पद्यानि प्रथन्ते; तत्र प्रथमं संस्कृतपद्यम् । )

**भक्तामृतं विश्वजनानुमोदनं सर्वार्थदं श्रीशठकोपवाङ्मयम् ।**
**सहस्रशाखोपनिषत्समागमं नमाम्यहं द्राविडवेदसागरम् ॥**

(विवरणम्.) सहस्रगीतिस्सागरत्वेन रूप्यत इह । सागरसाधर्म्यमस्या पञ्चभिर्विशेषणैरुपपाद्यते । प्रसिद्धस्सागरस्तावत् भगवति भक्तानाममराणाम् अमृतप्रदायकोऽभूदिति हेतुना भक्तामृतमय आसीत् स । सहस्रगीतिस्तावत् वस्तुतो भक्तानां श्रीवैष्णवानाममराणां भौमम् अथापि दिव्यममृतमिति नातिशयोक्तिः । [विश्वजनानुमोदनम्] जगति सागरदर्शनेन अप्रहृष्यन् जनो न कोऽप्यस्ति । सागरं सर्वेऽप्यसकृदवलोक्य मोदन्ते । सहस्रगीतिरपि भक्तिभाजां, गानकलाकुशलानां, नित्यमुक्तानां, किं बहुना? सर्वेश्वरस्यापि च मनोहरप्रदेति विश्वजनानुमोदनत्वमस्या अव्याहतम् । [सर्वार्थदम्] सागरो हि रत्नाकरस्सन् सर्वार्थदानसमर्थः । सहस्रगीतिश्च * वेदार्थरत्ननिधिरिति श्रीवत्साङ्कमिश्रोपश्लोकितमुनिवरदिव्यमुखारविन्दविनिर्गतत्वेन सर्वार्थदा । तदिदमनुभवैकवेद्यं विदुषाम् । [श्रीशठकोपवाङ्मयम्] सागरः कदाचिदगस्त्यमहामुनिमुखं प्रविश्य विनिर्गत इत्यतो मुनिवरवाङ्मय प्रथितस्स । सहस्रगीतिस्तु श्रीशठकोपदिव्यसूरिवाङ्मयी । उभयोरप्यनयोर्मुनिवर्यो द्राविडवाक्प्रवर्तकत्वेन साधर्म्यं बोध्यम् । [सहस्रशाखोपनिषत्समागमम्] सागरस्तावत् * नदीनां सागरो गतिरित्युक्तरीत्या स्वात्मनि प्रविशन्तीभिर्नदीभिरुत्खाताद्भुतानां शाखिशाखानां समागमविशिष्टस्स्यात् । सहस्रगीतिस्तु सहस्रशाखोपनिषदिति प्रसिद्धेन सामवेदेन सह सम आगम इति प्रथितम् । एतादृशं द्राविडवेदसागरं विगाहे इत्यनुक्त्वा नमामीति कथनम् * वन्दे रामायणार्णवमिति वचनं स्मारयति । विश्वपुमर्थमार्थनमूले सुमहति दिव्यशास्त्रेऽस्मिन् अवगाहनाधिकारिणोऽत्यन्तदुर्लभाः, श्रीकोशनमस्कारे केवलमधिकारिणोऽस्मादृशा इति स्फोर्यते इव ॥ *

### अथ द्वितीयं मुखपद्यम्

(गाथा.) तिरुवळुदिनाडेन्नुम् तेन्कुरुहूरेन्नुम् * मरुविनिय वण्पोरुनलेन्नुम्—अरुमरैहळ् ।
अन्दादि शेय्दानडियिणैये येप्पोळुदुम् * शिन्दियाय् नेञ्जे तेळिन्दु ॥

(छाया.) पाण्ड्यमण्डलमिति मण्डलं ध्यात्वा, श्रीकुरुकापुरीति दिव्यदेशमनुसन्धाय, स्पृहणीयोदारताम्रपर्णीति दिव्यनदीमनुचिन्त्य च, सुदुर्लभवेदार्थप्रकाशकशठकोपमुनीन्द्रस्य पादद्वन्द्वमेव सततमनुचिन्तय भो हृदय ॥

(विवरणम्.) श्रीशठकोपमुनीन्द्रपादारविन्दचिन्तनात्प्राक् तदवतारस्थलभूतकुरुकापुर्याः, तन्मण्डलस्य, शठकोपमुनेः पौराणिकनिरूपकभूतताम्रपर्णीसरितश्चानुसन्धानं कर्तव्यमिति शिक्षितं भवति पद्येनानेन ॥ *

### अथ तृतीयं मुखपद्यम्

(गाथा) मनत्तालुम् वायालुम् वण्कुरुहूर् पेणुम् * इनत्तारैयल्लादिरैञ्जेन्—धनत्तालुम् ।
एदुम् कुरैविलेन् एन्दै शठकोपन् * पादङ्गळ् यामुडैय पत्तु ॥

(छाया.) मनसा वाचा च श्रीकुरुकापुरीप्रशंसनैकनिरतानां गोष्ठीष्वन्तर्गतेभ्यो व्यतिरिक्तानहं नैव नमस्कुर्याम् । धनेनाप्यहं पुष्कलो भवामि, यतो ह्यस्मत्स्वामिनश्शठकोपमुनेः दिव्यपादौ मम मदन्वयानां च शरणम् ॥

(विवरणम्.) श्रीशठकोपमुनीन्द्रावतारस्थलभूतकुरुकापुरीप्रशंसनैकनिरतकरणग्रामानेवाहं प्रणमेयं नान्यानिति कथनेन भगवति श्रीशठकोपमुनौ भक्त्यतिशयः प्रकाशितो भवति । अस्यैव मुनेः पादारविन्दे एव स्वस्य सर्वस्वमिति प्रख्यापितं भवत्युत्तरार्धेन । * धनं मदीयं तव पादपङ्कजम् * इति स्तोत्ररत्नगीरिहानुसन्धेया ॥ *

अथ चतुर्थं मुखपद्यम्

(गाथा.) एयुन्द पेरुङ्कीर्त्ति यिरामानुशमुनितन् * वायुन्द मलर्प्पादम् वणङ्गुहिन्रेन्—आयुन्दपेरुम् ।
शीरार् शठकोपन् शेन्दमिऴ् वेदम् धरिक्कुम् * पेराद वुळ्ळम् पेर ॥

(छाया.) (संप्रतिपन्नमहायशसो भगवतो रामानुजमुनीन्द्रस्य दिव्यपादारविन्दे प्रणमामि; (किमर्थमिति चेत्) निरवद्यमहागुणनिवेशशठकोपमुनीन्द्रस्य दिव्यसूक्तीनां धारणे समर्थं सुदृढं हृदयं लब्धुम् ॥

(विवरणम्.) भगवद्रामानुजार्यपादारविन्दपरिसरे तद्भक्तिप्रेमभरेण श्रीशैलानन्तार्यनाम्ना गुरुवरेण प्रार्थना काचन क्रियते गाथयाऽनया । श्रीमत्पराङ्कुशमुनीन्द्रप्रख्यापिताया द्रमिडोपनिषदो ग्रहणं यद्यपि सुशकं भवति, तथाऽपि धारणं दुष्करमेव भृशम्; हे रामानुजमुने ! तस्या दृढधारणसामर्थ्यं भवदनुग्रहभूम्ना भूयादिति । वस्तुत एषा प्रार्थना श्रीशठकोपमुनेः पादारविन्दयोः अथवा सकलफलप्रददिव्यदम्पतिपादयोर्वा कर्तव्या । तद्विसृज्य भगवद्रामानुजमुनीन्द्रपादारविन्दयोः प्रकृतप्रार्थनाकरणेन तस्य मुनीन्द्रस्य सुदृढकण्ठगृहीतद्रमिडोपनिषत्कत्वं व्यञ्जितं भवति । आचार्यानुग्रहबलादेव दिव्यप्रबन्धानां धारणं शक्यमिति च सूचितं भवति । श्रीपरकालमुनीन्द्रानुगृहीतबृहत्सूक्तस्य मुखबन्धेष्वन्तिमेनापि पद्येन श्रीगोविन्दभट्टारकप्रणीतेन एवमेव प्रार्थना कृता विराजत इति प्रतिपत्तव्यम् ॥ .. .... .... .... *

अथ पञ्चमं मुखपद्यम्

(गाथा.) वान् तिहऴुम् शोलै मदिळरङ्गर् वण् पुगऴ्मेल् * आन्र तमिऴ् मरैहळायिरमुम्—ईन्र ।
मुदल् ताय् शठकोपन् * मोय्म्बाल् वळर्त्त हितत्तायिरामानुशन् ॥

(छाया.) व्योमतलव्यापिभिर्महोद्यानैः प्राकारैश्च परिवृतस्य श्रीरङ्गक्षेत्रस्याधीशितुः श्रीरङ्गिणः कल्याणगुणकीर्तनवैभवप्रेरणावतीर्णायाः द्राविडश्रुतिरूपसहस्रगीतेः प्रसवित्री माता श्रीपराङ्कुशमुनिवरः, महता सम्भारोहेण तद्वर्धननिरता उपमाता तु भगवान् रामानुजः ॥

(विवरणम्.) अयमपि स्तुतिपद्यमेव विवरणात्मकमिदं स्तुतिपद्यमिति प्रतिपत्तव्यम् । भगवतो रामानुजमुनेः द्रमिडोपनिषदा सह कीदृशोऽनुबन्धो वर्तत इति सुगममनेन पद्येन । लोके शिशूनां द्वे मातरौ प्रसिद्धे-जननी धात्री चेति । जननी तावत् प्रसवमात्रमेव जानाति । धात्री तु नक्तंदिवं परिश्रम्य सर्वविधान्यपि पोषणान्यातनोति । कृष्णकिशोरस्य मातरौ देवकीयशोदे अत्र स्मर्तव्ये । एवं सहस्रगीत्याख्यप्रजायाः प्रसवमातृत्वमनुत शठकोपमुनीन्द्रः । भगवान् रामानुजस्तु तदध्यापन तद्व्याख्यानानुसारणाज्ञापनादिभिरुचारवैः प्रयत्नैः अतितरामभिवर्धनमातनोतीति सोऽयं धात्रीपदे न्यवीविशतेति सुसमञ्जसमेतत् ॥

ननु सहस्रगीत्यां श्रीरङ्गक्षेत्रमिव अन्येऽपि बहवो दिव्यदेशाः कीर्तितास्सन्ति । एकमेव दशकमत्र श्रीरङ्गस्थलप्रशंसापरमवतीर्णमवलोक्यते । तत्कथं "श्रीरङ्गनाथगुणकीर्तनच्यप्रायास्सहस्रगीतेः" रिति कथ्यते ? इति केचिदाशङ्केरन् । श्रीशठकोपमुनीन्द्रहृदयमर्मविदां पूर्वाचार्याणामेवं तावत्सिद्धान्तः—श्रीशठकोपमुनीन्द्रो रङ्गनाथमुद्दिश्यैव सहस्रगीतिं समर्पितवान्; ततः अन्येभ्योऽपि दिव्यदेशाधिपतिभ्यो भगवद्भ्यः काश्चन गाथास्समुद्धृत्य समार्पिपत्— अतो नात्र काचिदनुपपत्तिः ॥ ... .... .... *

अथ षष्ठं मुखपद्यम्

(गाथा.) मिक्कविरैनिलैयुम् मेय्यामुयिर् निलैयुम् * तक्क नेरियुम् तडैयाहि—त्तोक्कियलुम्
ऊऴ्विनैयुम् वाऴ्विनैयुमोदुम् कुरुहैयर्कोन् * याऴिनिशै वेदत्तियल् ॥

(छाया.) श्रीकुरुकानगरनिवासभाजां श्रीवैष्णवानां स्वामिना मुनीन्द्रेणानुगृहीता वीणागानसनाभिगानविशिष्टा सहस्रगीतिः प्राप्यस्य ब्रह्मणो रूपं प्राप्तुः प्रत्यगात्मनो रूपं प्राप्त्युपायस्वरूपं प्राप्तिविरोधिस्वरूपं प्राप्तिफलस्वरूपं च प्रतिपादयति ॥

(विवरणम्.) सहस्रगीत्या प्रतिपाद्यमानानामर्थविशेषाणां प्रकाशनमपि मुखपद्यकर्तॄणां कर्तव्यं भवतीति तदत्र निबद्धम् । इदमेव ह्यर्थपञ्चकं सेतिहासपुराणकानां वेदानां प्रमेयमामनन्ति महर्षयः ॥ .... *

इति तनियन्नामक मुखपद्यविवृतिस्समाप्ता ॥

---

## ॥ अथ श्रीशठकोपमुनीन्द्रवैभवम् ॥

### वृषे मासि विशाखर्क्षेऽवतीर्णस्य महात्मनः । -शठारातिमुनीन्द्रस्य वैभवं प्रतिपाद्यते ॥

पाण्ड्यमण्डले गङ्गायमुनासरस्वतीप्रभृतिसकलसरिदपेक्षयाऽपि समुत्तुङ्गवैभवशालिन्यास्ताम्रपर्णीसरितस्तटे कुरुकापुरी नाम विलसति महानगरी । तत्र च वंशपरम्परया श्रीमन्नारायणैकसमाराधनसंसक्तचेतस्कपरमभागवतमहाकुले कारिनामा महनीयो महाभागवतस्समुत्पन्नो व्यराजत । केरलमण्डलीये तिरुवण्परिशारमिति नाम्ना सुप्रसिद्धे दिव्यदेशे उडैयनङ्गैयारनाम्नीं सहधर्मचरीमुपयेमे स महान् । तत्रैव कियन्तञ्चन कालमतिपाल्य अथ सह च दयितया कुरुकापुरीमधिगत्य यथाविधि गृहस्थाश्रमधर्मनिर्वर्तनधुरन्धरो विरेजे । सोऽयं सह दयितया कदाचित्तिरुक्कुरुङ्गुडिनामकं दिव्यदेशमुपेत्य तत्र भगवतः प्रार्थितार्थपरिदानदीक्षितात्मभूमानमवगत्य तस्य सन्निधाने सप्रश्रयं प्रार्थयतेस्म स्वस्य पुत्रसन्तत्यनुग्रहम् । प्रार्थितश्च भगवान् परमकृपापेशलहृदयस्सुप्रसन्नवदनस्सन् "अहमेव समागत्य युवयोस्तनयात्मना । प्रादुर्भवेयमचिराद्विषादो वां विलीयताम् ॥" इत्यर्थकमुखेनानुगृह्य तीर्थमालादि च प्रासादयत् । एवमनवधिकातिशयमप्रमेयमनुग्रहमासादयन् कारिर्महात्मा यथापुरं कुरुकापुरमुपेत्य निवसन् कालक्रमेण पत्नीमन्तर्वत्नीमद्राक्षीत् । सा च समये प्रासूत दिव्यं शिशुं वृषभमासि विशाखोडुनि शुभे । दिव्यशिशोरस्य प्रभावातिशयस्सर्वथा वाचा दवीयान् । अयं साक्षाद्भगवान् एवावतारभूतो वा । नित्यमुक्तेष्वन्यत-

मस्य, तेषां बहूनां मिलितानां वाऽवतारभूतो वा ! विलक्षणभगवत्कृपामूला निस्समाभ्यधिकवैभवं प्रापितस्संसारिष्वन्यतम एव वा ! इत्येवं बहुधा शङ्कितुं योग्योऽयं अप्रमेयप्रभावमहापुरुषः । निर्दिष्टरीतिककुरुकुडिदिव्यदेशाधिपतिभगवत्सूक्त्यनुरोधेन स एव भगवानेवमवततारेति प्रतीतुं योग्यम् ॥

यत्र भगवानवतरितुमिच्छति, तत्र पुरस्तादेव * निवासशय्यासनपादुकांशुकोपधानवर्षातपवारणादिभिश्शरीरभेदैर्विविधपरिचर्याविरचनविशारद आदिशेषः स्वयमुपसर्पतीति वृद्धसम्प्रदायः । अत एव सोऽयं फणिपुङ्गवो भगवदवतारभूतस्यास्य दिव्यशिशोर्वर्षातपादिवारणमुखेन परिरक्षणाय दिव्यतिन्त्रिणीवृक्षात्मना प्रागेवावतीर्ण आसीत्तत्रैव ॥

आजननात् रोदनस्तन्यपानादिलौकिकव्यापारगन्धविरहेण विराजमानस्य ग्लानिलेशविधुरस्य चास्य शिशोरतिशयं प्रेक्षमाणौ मातापितरौ विस्मयपरवशान्तरङ्गौ सर्वथा भगवति न्यस्तभरौ निर्विकारौ द्वादशे वासरे श्रीनगरीदिव्यदेशाधीशस्य भगवत आदिनाथस्य सन्निधानं प्रापय्य शिशुं तद्दर्शनधन्यमाधाय सन्निहितस्य दिव्यतिन्त्रिणीतरोर्मूले सौवर्णडोलिकातल्पमधिशाय्य समभ्यर्चयताम् ॥

गर्भवासावसरे ज्ञानशालिनोऽपि शिशून् जननसमनन्तरक्षण एव स्वस्पर्शेन अज्ञानभागिनः कृत्वा रोदनक्रन्दनादिलौकिकव्यापारपरवशान् कर्तुं प्रभविष्णुः शठो नाम वायुः एनमपि दिव्यशिशुं जननकाले स्वयममिभवितुमयतत, तदासौ तमसो हुङ्कारेण प्रसह्य निरस्यतिस्मेति हेतुना शठकोप इति नाम्ना पप्रथे । शठरिपुः, शठारिः, शठारातिरित्यादीन्यपि नामानि तत्पर्यायभूतानि प्रथन्ते ॥

तिन्त्रिणीमूलधामा मुनिवरोऽसौ आषोडशाद्वयसो नयनोन्मीलनविरहित एव सन् मौनावलम्बी विश्वतो विसृत्वरविलक्षणतेजःपुञ्जोऽवर्तत । पितरौ तु 'किमेतत्? कथमेवमभूत्?' इति विमृशन्तौ, आवयोः प्रामादिकेन केनापि भगवदपचरितेन किमेवं समभूदिति चिन्ताविह्वलौ विषण्णावास्ताम् । तदा परमपदनाथस्य शासनेन विष्वक्सेनोऽत्र रहसि समागत्य मुनिवरं पञ्चभिस्संस्कारैस्संस्कृत्य सकलार्थांश्चोपदिश्य प्रययौ ॥

षोडशकलापरिपूर्णचन्द्रवत् परिपूर्णषोडशहायनोऽसौ मुनिसार्वभौमस्तिन्त्रिणीतरुच्छायायां पद्मासनोपविष्टः परतत्त्वैकनिध्यानतत्परो ज्ञानमुद्राञ्चितपाणिपद्मः प्रचकाशे ॥

तदात्वे मधुरकविर्नाम महीसुरोत्तमो महान् क्षेत्रतीर्थयात्राकुतूहलेन पर्यटन्नुत्तरभारते, शठकोपमुनेरस्य प्रभावमाकर्ण्य दिव्यतेजःप्रसरमभिवीक्ष्य च श्रीमदयोध्यानगरीतस्सत्वरमुपगम्य तमिममासेवत । अस्य चैतन्यमस्ति न वेति शोधयितुमिच्छन् स एष मधुरकविः कञ्चिदश्मखण्डं चिक्षेप समया मुनिवरम् । तन्निनदनिशमनेन चक्षुषी समुदमीलयच्छठारिः । अथ च व्यवहारशक्तिरस्य विद्यते न वेति विज्ञातुकामस्स कमप्यनुयोगमाततान । सद्यः प्रत्युत्तरं च लेभे समञ्जसम् । अथ मधुरकविर्महानन्दसागरमग्नस्वान्तः सर्वज्ञममुं मुनिवरमेवाश्रित्य कृतार्थो भूयासमित्यभिनिवेशमुद्वहन् साष्टाङ्गं तस्य पादारविन्दे प्रणिपत्य भृशमभिष्टुत्य बद्धाञ्जलिपुटः प्रार्थयतस्म 'भगवन् मुनिसार्वभौम! तत्त्वहितपुरुषार्थेषु वैशद्यमुत्पादयतु कृपया दासस्यास्य तत्रभवान्' इति । स च करुणया स्वीचकारैनमन्तरङ्गकिङ्करम् ॥

अथ कदाचित् श्रीवैकुण्ठनाथो भगवान् सह च श्रीभूमिनीलाभिर्विहगाधिराजमधिरुह्य समागत्य मुनेरस्य ज्ञानसाक्षात्कारगोचरो भूत्वा सर्वज्ञतां द्रढयतिस्म । एवमन्ये च सर्वे दिव्यदेशाधीशा भगवन्तः श्रीरङ्गनाथ श्रीवेङ्कटाद्रिनाथ श्रीहस्तिगिरिनाथादयः स्वयमुपगम्य दिव्यदर्शनं प्रदाय स्वस्वदिव्यगुणगणानन्वभावयन् । तदनु तादृशानुभवपरीवाहरूपतया दिव्यसूक्तीर्बहिराविर्भावयितुमावश्यकता समजनि तत्त्ववेदप्रेमसरस्यास्य । ऋग्यजुस्सामाथर्वणाख्यवेदचतुष्टयपर्यायभूताश्चत्वारो दिव्यप्रबन्धा द्राविडभाषामहिताःसमाख्याः १. तिरुविरुत्तम्, २. तिरुवाशिरियम्, ३. पेरियतिरुवन्दादि, ४. तिरुवाय्मोळि नामभिः प्रथिताः क्रमेणावतरितुमारभन्त । मधुरकविरेव पार्श्वे निषण्णस्सन् परमया भक्त्या प्रबन्धानिमान् दिव्यतालपत्रारूढानकार्षीत् ॥

एतेषु चतुर्षु दिव्यप्रबन्धेषु चरमस्य सामवेदसारभूतस्य सहस्रगीतिसमाख्याविख्यातस्य प्रबन्धरत्नस्य सततगानमेव मधुरकवेर्नित्यकालक्षेपपर्याप्तमासीत् । श्रीमन्नाथमुनि श्रीयामुनमुनि श्रीरामानुजमुनि श्रीपराङ्कमिश्र भट्टपादप्रभृतयो वेदवेदान्तवेदाङ्गसागरपारदृश्वानो विद्वन्मणयो महान्तोऽपि तयैव द्रमिडोपनिषदा तत्त्वहितपुरुषार्थेषु विमलं विशदं विपुलं विज्ञानमुपलभ्य स्वयमाचार्यपदवीं निरवहन् ॥

दिव्यवकुळमालाभूषणभूषितत्वेन हेतुना मुनिवरोऽयं वकुळाभरणो वकुळभूषण इत्यपि नाम बिभर्तिस्म । परमतस्थरूपमत्तमातङ्गानामसावङ्कुशात्मा विरराजेति हेतुना पराङ्कुश इत्यप्यप्रथत । "शठरिपुरेक एव कमलापतिदिव्यकवि" रित्युक्तरीत्या भगवद्भक्तेष्वप्ययमेव मुनिराडग्रगण्योऽभूदिति आचन्द्रार्कं विश्वतः प्रसिद्धये भगवतः पादुका सर्वेष्वपि देवालयेष्वस्यैव नाम्ना व्यपदिश्यमाना विलसन्ति यतदिदमेकमेव पर्याप्तं महामुनेरस्य वैभवमसमाभ्यधिकं मिलयवबोधयितुम् ॥ ... ... .... .... *

इत्थं शठकोपमुनेर्वैभवमतिभोग्यमप्रमेयं च । अनुसंदधतां सुधियामत्रामुत्र च भवेन्महानन्दः ॥

---

श्रीमते रामानुजाय नमः श्रीमद्वरवरमुनये नमः ॥

## ॥ अथ सहस्रगीतिव्याख्यानावतारिका ॥

श्रीवैष्णवसंप्रदायप्रवर्तनधुरंधरेषु आळ्वार पदवाच्येषु सरोयोगिप्रभृतिषु श्रीवरकालसूरिपर्यन्तेषु दिव्यसूरिषु प्रधानतमः श्रीशठकोपमुनीन्द्र इति प्रथितमेतत् । अयमेव वकुळाभरण-वकुळभूषण-पराङ्कुशमुनि कारिसूनुप्रभृतिभिश्च नामभिः प्रथते । असावेव प्रपन्नजनकूटस्थ इति च प्रशस्यते । अमुना मुनिसार्वभौमेन (१) तिरुविरुत्तम् (२) तिरुवाशिरियम्, (३) पेरियतिरुवन्दादि, (४) तिरुवाय्मोळीति चत्वारो दिव्यप्रबन्धाः प्राकाशिषत । तिरुवाय्मोळीति प्रसिद्धश्चरमप्रबन्ध एव सहस्रगीतिसंज्ञया व्यपदिश्यते । तदिदं दिव्यं नाम श्रीपराशरभट्टपादोपज्ञमिति विज्ञायते । त एव ह्याहुः श्रीरङ्गराजस्तवे पुन्नागतरुतळवर्णनपरे पद्ये * अजस्रसहस्रगीतिसेकोत्थदिव्यनिजसौरभम् * इति ॥

निर्दिष्टाश्चत्वारोऽमी दिव्यप्रबन्धाः क्रमेण चतुर्वेदसारभूता इति प्राचामाचार्याणामनुसरणम् । द्राविडवेदस्य व्यासपदवीमलंकुर्वाणेन श्रीमता नाथमुनिना सहस्रचतुष्कत्वेन विभक्ते दिव्यप्रबन्धवर्गे सहस्रगीतिरेषा चतुर्थसहस्रत्वेन परिगण्यतेस्म । सामवेदस्थानीया चैषा ॥

तिरुविरुत्ताख्ये प्राथमिके प्रबन्धे स्वकीयज्ञानदृष्टिगोचरीभूतं भगवन्तं श्रियःपतिमुद्दिश्य "भो भगवन्! त्वदनुभवविरोधिपाञ्चभौतिकहेयशरीरसंबन्धं वियोजय कृपया" इति सांसारिकसकलदुरितनिवर्तनपूर्वकमोक्षप्रापण-मर्थयते स्म सोऽयं मुनिवरः। सर्वज्ञोऽपि सर्वशक्तोऽपि स भगवान् नैव तां प्रार्थनां सद्यः फलेग्रहिमादधे। मुनि-वरस्यास्य मुखात् स्वभक्तानामिव स्वस्यापि परमभोग्यान् कतिपयान् दिव्यप्रबन्धानवतारयितुं संसारिणो विनेतुं च कामयमानस्स भगवान् अस्यामेव विभूत्यां मुनिवरमवस्थापयितुमैच्छत्। "संसारान्मुक्तोऽयं मुनिः दिव्यं धाम विगाह्य तत्रास्मदीयगुणगणानुभवमेव खलु चिकीर्षति; तदस्यामेव जगत्यां वर्तयतु कामम्; तथा नामास्य करणा-करणाय; अनुभवपरीवाहरूपेणावतरिष्यद्भिर्दिव्यप्रबन्धैर्विलक्षणं जगदुपकारं च कृतवान् भवतु" इत्यभिसंदधानः स्वकीयस्वरूपरूपगुणविभूतिचेष्टितानि परमभोग्यानि प्राचीकशत्स भगवान्। ततश्च परमानन्दतुन्दिलस्वान्तोऽय सूरिवरो दिव्यप्रबन्धचतुष्टयेन विलक्षणमनुभवमुपबृंहयन् अर्थात् असमाभ्यधिकमुपकारं च जगत आततान। अदसीयास्सर्वेऽप्यमी दिव्यप्रबन्धा भगवद्गुणगणानुभवपरीवाहरूपा इत्यनेनैव हेतुना आर्षप्रबन्धानप्यतिशेरते।

तिरुवाय्मोळीति प्रबन्धसंज्ञा श्रीमुखसूक्तमित्यर्थमिव अभ्यर्हितयथार्थसूक्तिरित्यर्थमपि बिभर्ति। सेयं संज्ञा मुनिवरेण स्वेनैव न कृता। द्राविडवेदसमुद्धारकाम्रायेण श्रीमता नाथमुनिना प्रथमाचार्यप्रवरेण समुल्लिखितेति संप्रदायविदस्संगिरन्ते। श्रीमधुरकविसमुल्लिखितेत्यपि वदन्ति॥

सोऽयं दिव्यप्रबन्धो दशभिश्शतकैः शतेन दशकैः ११०२ संख्याकाभिर्गाथाभिश्च समेतोऽन्तादिरूपः। यत्र पूर्वगाथाया अन्तिमं पदम् अक्षरं वा उत्तरगाथाया आदिमं भवति, तत्रान्तादित्वव्यवहारः। समग्रा सेयं सहस्रगीतिरन्तादिक्रमेणैव निबद्धेति वेदितव्यम्॥

सकलदिव्यसूरिमध्ये श्रीशठकोपमुनेरिव सकलदिव्यप्रबन्धमध्ये सहस्रगीतेरस्या अभ्यर्हितत्वमर्थगौरव-निबन्धनम्। महाभारतं प्रशंसमाना * यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित् * इत्याचक्षते। वस्तुत-स्तादृशी प्रथा सहस्रगीत्या एव संप्रतिपन्नेति सुवचम्। * प्राप्यस्य ब्रह्मणो रूपं प्राप्तुश्च प्रत्यगात्मनः। प्राप्त्युपायं फलं प्राप्तेः तथा प्राप्तिविरोधि च। वदन्ति सकला वेदास्सेतिहासपुराणकाः। मुनयश्च महात्मानो वेदवेदार्थ-दर्शिनः॥ * इत्याद्युक्तरीत्या स्वस्वरूप-परस्वरूपोपायस्वरूप-विरोधिस्वरूप-पुरुषार्थस्वरूपाभिधानाः पञ्चैवार्थास्स-कलशास्त्रसारसर्वस्वभूताः। ते खलु दिव्यप्रबन्धेऽस्मिन् संक्षेपविस्तराभ्यां निस्सन्देहविपर्ययं प्रतिपाद्यन्त इति सर्वार्थपौष्कल्यमस्याश्चितम्॥

पूर्वाचार्यैर्बहुभिरस्यैव दिव्यप्रबन्धस्य विशेषतो व्याख्यातत्वात्, प्रथम-द्वितीय-तृतीयसहस्राणामिवास्य सहस्रस्य वीथीषु पारायणं नैव क्रियत इति संप्रदायप्रथाचास्य सर्वातिशायित्वं सुगमम्। सहस्रगीत्या अस्याः पूर्वाचार्यैः पञ्चभिरनुगृहीतानि पञ्च व्याख्यानानि संक्षिप्तानि विस्तृतानि च प्रथन्ते। भगवद्रामानुजदिव्याज्ञया तत्पुत्र-रत्नविशेषः तिरुक्कुरुहैप्पिरान् पिळ्ळान् समाख्यः श्रीकुरुकेशसूरिरतिसंक्षिप्तामतिमधुरां च षट्सहस्रिकाख्यां व्याख्यां विनिर्ममे। श्रीपराशरभट्टार्यपदपङ्कजचञ्चरीकः अस्मद्यतिः (नञ्जीयर) प्रथाप्रधानो वेदान्तिमुनिर्नवसहस्रिकां निर्ममे। श्रीकलिवैरिगुरुचरण (नम्पिळ्ळै) चरणयुगलैकदैवतं पेरियवाच्चान् पिळ्ळैनामा श्रीमत्कृष्णसमाह्वयो गुरुवरश्चतु-र्विंशतिसहस्रिकां निरमिमीत। तत्सब्रह्मचारी वडक्कुत्तिरुवीधिप्पिळ्ळैनामा श्रीकृष्णपादगुरुवरः * ईडुनाम्नीम् षट्त्रिंशत्सहस्रिकामन्वगृह्णात्। अन्ततश्च वादिकेसरिविरुदभूषितसुन्दरजामातृमुनिः द्वादशसहस्रिकां प्रतिपदार्थ-रूपिणीमलेखीत्। श्रीमान् वेङ्कटनाथार्यो वेदान्ताचार्यवर्यस्तु दशकसारार्थसंग्रहरूपिणीं द्रमिडोपनिषत्तात्पर्यरत्नावलीं

शतकसारार्थसंग्राहकं द्रमिडोपनिषत्सारं च श्लोकमयं निबन्धं । श्रीमद्वरवरमुनीन्द्रो दशकार्थसंग्राहकं तिरुवाय्मोळिनूत्तन्दादिनामानमतिमधुरदिव्यप्रबन्धमचमप्रणीत् । पश्चात्तो वादिकेसरिसुन्दरजामातृमुनि द्रमिडोपनिषत्संगतिनामानं दशकार्थसाराचतुर्थ्लोकं शतादिशश्लोकमयं ग्रन्थं न्यबध्नात् । तावदिह प्रतिदशकावसानं क्रमश प्रकाशयिष्यते ।

एवमनेकैराचार्यसार्वभौमैर्व्याख्यानादिप्रणयनेन नित्यकालक्षेपार्थमादरेण च प्रख्यापितप्रभावातिशयरसोऽयं दिव्यप्रबन्धसंरक्षणभावमिताना विदुषां हर्षप्रकर्षाय दासदासेन श्रीवैष्णवदासेन व्याख्यानवावदूकविरुदभाजा श्रीकाञ्ची प्रतिवादि भयङ्कराण्णङ्गराचार्यनाम्ना नातिसंक्षिप्तविस्तृतं व्याख्यायते ॥

---

## ॥ अपरा चेयमवतारिका पूर्वाचार्यव्याख्यानुसारिणी ॥

श्रियःपतिरवाप्तसमस्तकामः समस्तकल्याणगुणामृतसमुद्रेश्वरः जननपदवीजघालतेन स्वात्मानं स्वयमेव [सहस्रगीत्याम् २-६ ८] कथितवन्त श्रीशठकोपमुनीन्द्र * त्वदीयपादौ संश्रित्य प्रसन्नहृदयो ह्यहम् । अप्रमेय महानन्दसिन्धौ मग्नो भवाम्यहो ॥ * इति स्ववाचा [तदनन्तरार्धे] कथनसमर्थं कृत्वा विशेषकटाक्षलक्ष्यतामनैषीत् । * बृन्दावनं भगवता कृष्णेनाक्लिष्टकर्मणा । शुभेन मनसा ध्यातं गवां वृद्धिमभीप्सता ॥ (विष्णुपु ५-६-२८) इत्युक्तरीत्या वन्दनपुञ्जदन्तुरस्य बृन्दावनस्य * उपवनयशष्पाङ्ग्यतामगादननिर्विशेषं स्नेतकर्म सत्यमकल्पस्य भगवन । तत्वहितपुरुषार्थेष्वतिविशदविज्ञानशालिनामग्रगण्यमाततान भगवान् मुनिवरमेनम् ।

लोके सन्ति नाम बाह्यकुदृष्टिदर्शनानि भूयांसि * या वेदबाह्यास्स्मृतयो याश्च काश्च कुदृष्टय । सर्वास्ता निष्फला प्रेत्य तमोनिष्ठा हि ताः स्मृता ॥ * (मनुस्मृ-१२-९५) इति मनुना महर्षिणाऽधिक्षिप्तानि तानि सन्तु नाम दूरे । आपादचूडमनवद्यपरमपवित्रस्य दर्शनस्य प्रवर्तकेष्वप्रमरो हि मुनिसार्वभौमोऽसौ । चिदचिदीश्वरतत्स्वभावभोगापवर्गतदुपायगतिषु निष्कल्मषा शेमुषी भगवतैव कारुणिकेन स्वकीयनिर्हेतुककृपाबलेन लम्भितोऽयं मुनिवरः प्रपन्नजनकूटस्थः प्रथते । * सञ्ज्ञायते येन तदस्तदोषं शुद्धं परं निर्मलमेकरूपम् । संदृश्यते वाऽप्यधिगम्यते वा तज्ज्ञानमज्ञानमतोऽन्यदुक्तम् ॥ * (विष्णु पु ६-५ ८७) * तत्कर्म यन्न बन्धाय सा विद्या या विमुक्तये । आयासायापरं कर्म विद्याऽन्या शिल्पनैपुणम् * ॥ (विष्णु-पु १-१९-४१) इत्याद्यनेकप्रमाणप्रतिपन्नेष्वर्थेषु सुदृढाध्यवसायगरिमा हि स एष मुनीश्वर । दिव्यधामनिकेतनस्य श्रियःपत्युर्भगवतश्चरणारविन्दयुगलैकान्तिकात्यन्तिकानवधिकातिशयप्रीतिकारितात्रेषावस्थोचिताशेषशेषतैकरतिरूपनित्यकैङ्कर्यप्राप्तियोग्यतायां सत्यामपि * अनेकजन्मसाहस्रीं संसारपदवीं व्रजन् । मोहश्रमं प्रयातोऽसौ वासनारेणुकुण्ठित ॥ * (विष्णुपु ६ ॥ १९) इत्युक्तरीत्या व्याधकुलसंवर्धितराजकुमारन्यायेन अनादिकालप्रवृत्तप्रकृत्यात्मभ्रमसंनश्यन् संसृतिचक्रे परिभ्राम्यतां तत्वहितपुरुषार्थचिन्तावैदेशिकानां भविनां मनुजिघृक्षया दुस्तरकलिसागरसंतारणकर्णधारस्स एष मुनिवरोऽवततार ।

* कलौ खलु भविष्यन्ति नारायणपरायणाः । क्वचित्क्वचिन्महाभाग द्रमिडेषु च भूरिश ॥ ताम्रपर्णी नदी यत्र कृतमाला पयस्विनी । कावेरी च महाभागा प्रतीची च महानदी ॥ ये पिबन्ति जलं तासां मनुजा मनुजेश्वर । प्रायो भक्ता भगवति वासुदेवेऽमलाशयाः ॥ * इत्युक्तरीत्या परमभागवतानामवतारस्थलनिर्देशे प्रथमं स्थानमासेदुष्या ताम्रपर्ण्यास्तीरे श्रीकुरुकापुर्यां * ततोऽखिलजगत्पद्मबोधायाच्युतभानुना । देवकीपूर्वसन्ध्यायामाविर्भूतं महात्मना ॥ (विष्णुपु ५-३-१) इतिवत् वकुलभूषणभास्करोऽयमाविरभूत् ।

* हसितं भाषितं चैव गतिर्या यच्च चेष्टितम् । तत्सर्वं धर्मवीर्येण यथावत्संप्रपश्यति ॥ (रामा. बा. ३-४) इत्यनुगृहीतो वाल्मीकिरिव, * इमं स्वधर्मनिगममवेत्य मदनुष्ठितम् । अदान्मे ज्ञानमैश्वर्यं स्वस्मिन्भावं च केशव * इत्यूचिवान् नारद इव च 'संशयविपर्ययविस्मृतिविधुरं दिव्यज्ञानमनुगृहीतवान्मे' इति स्ववाचैव (प्रथमगाथाद्वितीयपादे) प्रोक्तवानेष मुनिसार्वभौमो भगवदनुभवप्राहितवत्वहेतुपुरुषार्थयाथार्थ्य * ज्ञानी त्वात्मैव मे मतम् * (गीता. ७-१८.) * स महात्मा सुदुर्लभः (गी. ७ १९) * मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये । यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः * (गी ७ ३) इत्यादिभगवद्वचनप्रधानलक्ष्यभूत, परमभागवताग्रेसरः; * बाल्यात्प्रभृति सुस्निग्धो लक्ष्मणो लक्ष्मिवर्धनः । रामस्य लोकरामस्य भ्रातुर्ज्येष्ठस्य नित्यशः ॥ सर्वप्रियकरस्तस्य रामस्यापि शरीरतः । लक्ष्मणो लक्ष्मिसंपन्नो बहिः प्राण इवापरः ॥ (रामा बा. १८-३०,३१.) * न च सीता त्वया हीना न चाहमपि राघव । मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ ॥ ( ,, अयो. ५३-३१.) * न देवलोकाक्रमणं नामरत्वमहं वृणे । ऐश्वर्यं वाऽपि लोकानां कामये न त्वया विना । ( ,, अयो. ३१-५) * अहं तावन्महाराजे पितृत्वं नोपलक्षये । भ्राता भर्ता च बन्धुश्च पिता च मम राघवः ॥ ( ,, अयो. ५८-३१.) इत्युक्तरीत्या सीतासौमित्रिवत् भगवत्संश्लेषविश्लेषैकसुखदुःख भगवदनुभवैकधारक, भगवत्येव सकलबन्धुताबुद्धिमान् * धर्मात्मा सत्यशौचादिगुणानामाकरस्तथा । उपमानमशेषाणां साधूनां यस्सदाऽभवत् ॥ (विष्णुपु १-१५-१५६) इत्युक्तरीत्या साधुजनोपमानमात्रे प्रह्लादसाम्यमानस्थितवान्, अ यैश्च बहुभि प्रकारैर्दशरथनन्दगोपभरतशत्रुघ्नमारुतिविभीषणधनञ्जयादीनामपि साम्यमदनुमानस्य एष मुनिप्रवरः श्रीमान् सद्यो भगवद्भक्तिवर्धकान् सांसारिकसकलतापदावानलनिर्वापणसरसामृतप्रवाहपूरमयांश्चतुरो दिव्यप्रबन्धाननुजग्राह ।

* आद्ये स्वीयप्रबन्धे शठजिदभिदधे संसृतेर्दुस्सहत्वं
द्वैतीयीके स्वरूपाद्यखिलमथ हरेरन्वभूत् स्पष्टदृष्टम् ।
तार्तीयीके स्वकीयां भगवदनुभवे स्फोरयामास तीव्रामाशाम्,
तुर्ये यथेष्टं भगवदनुभवादाप मुक्तिं शठारिः ॥

इत्युक्तरीत्या प्रथमे तिरुविरुत्तदिव्यप्रबन्धे संसारदुस्सहतां प्रत्यपादयत्, द्वितीये तिरुवाशिरियदिव्यप्रबन्धे तत्प्रदर्शितस्वरूपरूपादिकं संक्षिप्तमप्यतिविशदमन्वभूत् । तृतीये पेरियतिरुवन्दादिप्रबन्धे भगवत्यनुरागातिशयमनुक्षणमभिवर्धमानं प्रादर्शयत् । तिरुवाय्मोऴिनाम्यस्मिंश्चरमप्रबन्धे सकलशास्त्रसारार्थभूत-अर्थपञ्चकतत्त्वत्रयलक्षणसर्ववेदितव्यार्थप्रकाशनमुखेन यथेष्टं भगवन्तमनुभूयान्ततो मुक्तिं च लेभे । वेदाध्ययनेन ब्राह्मण्यसिद्धिवत् सहस्रगीत्यध्ययनेनैव श्रीवैष्णवत्वसिद्धिरिति आचार्यवर्याणामनवद्यसिद्धान्तः । ब्राह्मणेतरप्रणीतत्वं द्रमिडभाषामयत्वं चादाय कुचोद्यानि कुर्वन्तो दुर्वादिनः आचार्यहृदयादिग्रन्थरत्ननिरस्ता इति नात्र तद्विस्तरः ।

ननु, * तस्माद्ब्राह्मणेन न गेयम् * न भोजयेच्छ्राद्धे नृत्तगीतशीलानिति गानस्य निन्दिततया गानरूपस्यास्य प्रबन्धस्य कथमादरणीयतेति चेदवधीयताम् । * हरिकीर्तिं विनैवान्यत् ब्राह्मणेन नरोत्तम । भाषागानं न कर्तव्यं तस्मात्पापं त्वया कृतम् ॥ इति मत्स्यपुराणे हरिविषयकभाषागानं कुर्वन्तं ब्राह्मणं सौराष्ट्रदिवासिनं तं राजानं प्रति यमवचनदर्शनेन भगवद्विषयकभाषागानस्यानिषिद्धत्वात्, * अहो देवर्षिर्धन्योऽयं यत्कीर्तिं शार्ङ्गधन्वनः ।

गायन्माधविदं तन्त्र्या रमयत्यातुरं जगत् ॥ इति वीणागायकस्य नारदस्य धन्यत्वप्रतिपादनात्, * वीणावादनतत्त्वज्ञः श्रुतिजातिविशारदः। तालज्ञश्चाप्रयासेन मोक्षमार्गं निगच्छति ॥ इति याज्ञवल्क्यस्मरणात्, तथा—* शृण्वन्ति गायन्ति गृणन्त्यभीक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः। त एव पश्यन्त्यचिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम् ॥ * इति गायतामेव भगवच्चरणारविन्दसाक्षात्कारसामर्थ्यप्रतिपादनाच्च नेदृशाः क्षुद्रशङ्काया मनागप्यवकाशः। अत एव प्राहुर्वेदान्ताचार्याः—

भाषागीतिः प्रशस्ता भगवति वचनाद्राजवच्चोपचारात्
सा चागस्त्यप्रसूता त्विति परिजगृहे भूमिकाभेदयोग्या।
यत्तत्कृत्यं श्रुतीनां मुनिगणविहितैस्सेतिहासैः पुराणैः
तत्रासौ सत्त्वसीमश्शठमथनमुनेस्संहिता सार्वभौमी ॥

इति। अस्यार्थः—भगवद्विषये भाषागानं प्रशस्तम्, मात्स्यपुराणवचनात्, भगवत्सन्निधौ भाषागानविधायक-श्रीपाञ्चरात्रवचनाच्च। * यथा युवानं राजानं यथा च मदहस्तिनम्। यथा प्रियातिथिं योग्य भगवन्तं तथा-ऽर्चयेत् ॥ * इति राजोपचाराणां भगवत्सन्निधौ विहितत्वया राजसन्निधाविव भगवत्सन्निधावपि भाषागानस्य कर्तव्यत्वाच्च भाषागानं युज्यत एव; तासु भाषासु द्राविडी भाषा अगस्त्यप्राक्तेति हेतुना प्रपन्नैरस्य योग्येति श्रीमन्नाथयामुनयतिवरादिभिः परिगृहीता। तस्मात् मुनिजनप्रणीतेतिहासपुराणादिभिः क्रियमाणे श्रुत्यर्थविशदीकरणात्मके श्रुतिविषयकिंचित्कारलक्षणकृत्ये सत्त्वनिवेशशठरिपोर्मुनिवरस्य द्राविडी ब्रह्मसंहिता मूर्धाभिषिक्तेति ॥

अन्ये च वक्तव्या भूयांसो विषयास्तेषु तेषु स्थलेषु प्रकरणवशात् प्रपञ्च्येरन्नित्यलमधुना ॥

इत्यवतारिका समाप्ता ॥

---

॥ श्रीरस्तु ॥

श्रीपराङ्कुशपरकालयतिवरवरवरमुनीन्द्रेभ्यो नमः ॥

श्रीशठकोपमुनीन्द्रानुगृहीता

# ॥ सहस्रगीतिः प्रारभ्यते ॥

## तत्र प्रथमशतके प्रथमदशकम् - उयर्वरवुयर्नलम्।

**अवतारिका**—इदं दशकं भगवतः परत्वमुपपादयितुं प्रवर्तते। भगवानेव परात्पर इत्यमुं विषयमवधारयितुं किमस्ति साधनं नः? भगवान् हि न प्रत्यक्षगोचरः। न वाऽप्यनुमानगम्यः। केवलं शास्त्रैकवेद्यः। अतीन्द्रियेष्वर्थेषु शास्त्रैकावसेयत्वमेव निर्धारयन्त्यास्तिकाः परमवैदिकाः। दशकेऽस्मिन् सप्तमगाथायाम् "आस्ते विष्णुः परमप्रकाशवत्यां श्रुत्याम्" इत्यनुजग्रहुषा मुनिवरेणायमेवार्थोऽवबोधितो भवति। तथा नाम श्रुतिशिरसि विदीप्तस्य परस्य ब्रह्मण. परत्वं दशकेऽस्मिन् बहुभिर्विशेषैर्निरूप्यते। निरस्तातिशयसमुन्नतिशालिकल्याणगुणविशिष्ट

इत्यर्थकेन 'उयर्वरवुयर्नलमुडैयवन्' इति वाक्येनोपक्रम्यते सेयं सहस्रगीतिः। वेदान्तेषु सगुणश्रुतय इव निर्गुण-श्रुतयोऽपि विराजन्ते। भगवतो गुणवत्ताप्रतिपादिका श्रुतिः सगुणश्रुतिः। तस्यैव गुणशून्यताप्रतिपादिका श्रुतिः निर्गुणश्रुतिः। प्रमाणमूर्धन्यस्य वेदस्य व्याहतभाषित्वं नैव घटेत। हेयगुणशून्यताप्रतिपादनपरत्वावधारणेन निर्गुणश्रुतिनिर्वाहः, कल्याणगुणवत्ताप्रतिपादनपरत्वावधारणेन सगुणश्रुतिसमन्वयश्च क्रियते प्रामाणिकैः। यदाहुः श्रीवत्साङ्कमिश्राः—

* दूरे गुणास्तव तु सत्त्वरजस्तमांसि तेन त्रयी प्रथयति त्वयि निर्गुणत्वम्।
नित्यं हरे निखिलसद्गुणसागरं हि त्वामामनन्ति परमेश्वरमीश्वराणाम्॥ ४२॥ इति श्रीवैकुण्ठस्तवे।

भगवतस्सद्भावमात्रमप्यनभ्युपगच्छद्भ्यः तत्सद्भावाभ्युपगन्तारो विशिष्यन्त इति सत्यमेतत्। अभ्युप-गम्यमानो भगवान् गुणशून्यः, विग्रहविधुरः, विभूतिदरिद्रः इति मायावादिनां प्रलापः। ईदृशभगवदभ्युपगमा-पेक्षया भगवतः असत्ताभ्युपगम एव वरमिति प्राचामाचार्याणां व्याहारः। गुणविभूतिविग्रहवैशिष्ट्यं प्रथमगाथायामेव सुस्पष्टमाचष्टे मुनिवरः। द्वितीयादिषु च गाथासु क्रमेणैकैकं विशेषं प्रतिपादयति परत्वौपयिकम्। तथा च प्रथम-दशकमिदं भगवत्परत्वप्रतिपादनप्रवणमिति ध्येयम्॥ .... .... .... *

—: अथ सहस्रगीतिदिव्यप्रबन्धोपक्रमः :—

(गाथा.) उयर्वरवुयर्नल मुडैयवन् यवनवन् * मयर्वर मदिनल मरुळिनन् यवनवन् *
अयर्वरुममरर्हळधिपति यवनवन् * तुयररु शुडरडि तोऴुदेऴेन् मनने॥ १॥

उदस्तातिशयं यथा तथा अतिशयितान् कल्याणगुणान् बिभर्ति यः, अज्ञानगन्धवर्जम् भक्तिरूपापन्नं ज्ञानम् (मह्यम्) अनुगृहीतवान् यः, अज्ञानात्यन्ताभाववताम् नित्यसूरीणाम अधिपतिश्च यः, तस्य (परमपुरुषस्य) दुःखापनोदनशीलौ (अतएव) जाज्वल्यमानौ चरणौ हे मामकीन मानस। प्रणिपत्य समुज्जीव।

(विवरणम्.) अपरिच्छिन्नगुणगणसमृद्धस्य, अज्ञानगन्धासहभक्तिरूपापन्नज्ञानप्रदायकस्य, नित्यसूरि-नाथस्य च परस्य पुंसः पादयोः प्रणिपतनमेव समुज्जीवनसाधनमित्युक्तं भवति॥

स्वस्मै महत्तरानुपकारान् कृतवतो भगवतः पादारविन्दप्रणिपतनमनुशास्ति मुनिवरः स्वकीयहृदयं प्रति। गाथायां तृतीयपादप्रतिपाद्यमानम् अज्ञानगन्धासहभक्तिरूपापन्नज्ञानप्रसादकत्वमात्रं न भगवत्कृत उपकारः; अपितु प्रथमतृतीयचतुर्थपादेषु प्रतिपादितानां कल्याणगुणवत्त्व-नित्यविभूतिनायकत्व-दिव्यमङ्गलविग्रहवत्त्वानां प्रदर्शनमपि भगवतैव कृतमित्यनुसंदधानो मुनिः कृत्स्नगाथयाऽप्युपकारकत्वातिशयमेव प्रतिपादयतीति प्रतिपत्तव्यम्।

उदस्तातिशयं यथा तथाऽतिशयितत्वं नाम गुणानाम्—असमाभ्यधिकत्वमेव। लोके अस्मादृशामपि केचन गुणास्सन्ति नाम। एते हि सातिशयाः; तत्तद्गुणापेक्षया उपर्युपरि अतिशयितगुणवतां भूयसां सत्त्वात्। भगवदपेक्षया अतिशयितगुणशालिनोऽन्यस्य कस्याप्यभावेन तस्य गुणाः उदस्तातिशयं यथा तथा अतिशयिताः कीर्त्यन्ते। मूलगाथायां गुणवाचिनि (नलम् इति) शब्दे सुस्पष्टबहुवचनाभावेन आनन्दाख्यो गुण एक एवात्र विवक्षित इत्यपि व्याचक्षते। तैत्तिरीयोपनिषदि तावदानन्दवल्ल्यां परस्य ब्रह्मण आनन्दगुणं परिच्छेत्तुमुपक्रम्य

* मर्त्योत्पाय गिरिशयावपि मुपरि चोत्प्रेक्ष्य मीमांसमाना रुद्रेन्द्रानन्दयत्री तत्र गुणनिवहं यौवनानन्दपूर्णम्। न स्वार्थं स्पष्टुमीष्टे स्खलति पथि परं मूकलायं निलिल्ये .........* इति (श्रीरङ्गराजस्तोत्रशतके) भट्टपादोक्तरीत्या, * यतो वाचो निवर्तन्ते * इत्यौपनिषदोक्तिरीत्या च विश्रान्ताऽभूत्। अपहाये तादृशप्रयासे सोऽयं मुनिवरोऽप्रवृत्तस्सन् अपरिच्छिन्नगुणगणाढ्य इति एकयोक्त्या चाहरमाह। सुनिपुणफणितिरीदृशी हि भवितुमर्हति। * समस्तकल्याणगुणात्मकोऽसौ * वक्ष्यो नृप! कल्याणगुणाः पुत्रस्य सन्ति ते * धातूनामिव शैलेन्द्रो गुणानामाकरो महान् * स्वाभाविकानवधिकातिशयासंख्येयकल्याणगुणगणः * इत्यादीनि प्रमाणानीह भाव्यानि।

अथ द्वितीयपादेन मुनिवरः स्वविषये असाधारणतया कृतमुपकारमनुसंधत्ते। ज्ञानानुदयः, संदेहः, अन्यथाज्ञानं, विपरीतज्ञानं, विस्मृतिरित्येवंरूपाणामज्ञानमिदाना गन्धमप्यसहमानं सुसमृद्धज्ञानसाम्राज्यं भक्तिं चानुगृहीतवानित्युच्यते। मूलगाथाया ज्ञान भक्तिश्चेत्युभयमनुगृहीतवानित्यर्थग्राहकसुस्पष्टशब्दविन्यासो नास्ति। एतादृशमर्थमिव भक्तिरूपापन्नं ज्ञानमनुगृहीतवानि-येवंवेधमर्थमपि ग्राहयति मूलस्थशब्दसंदर्भः। अतश्च केचिदाचार्याः ज्ञानं भक्तिं च ददावित्यर्थमाहुः। भट्टपादास्तु भक्तिरूपापन्नज्ञानमददादिति निरैहन्ति स्म। किमत्र स्वारस्यमिति चेत्, श्रीशठकोपमुनेः ज्ञान भक्तिरिति द्वितयं न स्ति; उत्पन्नं ज्ञानं भक्तिरूपमेव सत् संजातमिति स्फोरणमतिचारु। तदिदं ज्ञानं कस्मै कृतमिति तु मूले नास्ति। स्वस्मै कृतमित्येव विवक्षा। अथापि मह्यमिति कण्ठतोऽनुक्तिः भगवद्विषयीकारात्पूर्वं स्वस्य असत्कल्पतानुसंधानेनेति अतिचारु गृणन्त्याचार्याः। * यो ब्रह्माणं विदधाति पूर्वमित्यादिश्रुतिवाक्ये, "तं ह देवमात्मबुद्धिप्रसाद" मित्याम्नायते। आत्मविषयिणी या बुद्धिस्तां प्रसादयति देवदेव इति तदर्थः। तादृशः प्रसादः कलियुगोपक्रमे स्वविषये कृतो भगवतेति सानन्दमनुसंधीयते मुनिवरेण। कृतज्ञताप्रकाशनपरेऽस्मिन् वचसि आत्मस्तुतिरूपमवद्यं न मनागप्याशङ्कनीयम्। अन्यथा कृतघ्नता हि स्यादस्य।

अथ तृतीयपादेन नित्यविभूतिनाथत्वमनुसंधीयते। शेषशेषाशनगरुडप्रमुखानन्तनित्यसूरिपरिचरितनिजपादारविन्दयुगलस्य भगवान् संसारकान्तारसंचरणैकनिरत मा स्मर्तुमपि नार्हति; अथापि सार्वभौमो घटीचेट्यामपि कामुको भवति यथा, तथा नाम स परात्परो जघन्ये मयि निर्हेतुकमनुरक्तस्सन् एवमनुग्रहमाविश्चकारेत्युक्तं भवति। परमसाम्यापन्नैस्सूरिवरैः परिवृतस्स भगवान् मामपि तेषां परिषदि विन्यसितुकाम एवमनुजग्राहेत्युक्तं भवति। स्वस्मै कृतेनानेनानुग्रहेण संसारिणां सर्वेषामपि प्रायस्समुज्जीवनसंभवेन लीलाविभूतिमपि नित्यविभूतिनिर्विशेषां चिकीर्षतीव स भगवानित्यपि व्यञ्जितं भवति।

अथ चतुर्थपादेन, पादत्रयोदितप्रभावशालिनस्तस्य परमपुरुषस्य पादारविन्दप्रणिपतनमेव श्रेयसे भूयसे कल्पेतेति निगद्यते। पादप्रस्तावेन भगवतो विग्रहवैशिष्ट्यमभिहितं भवति। विग्रहसत्त्वे हि तदवयवैकदेशभूतपादसद्भावप्रसक्तिः। स्तनन्धयस्य शिशोः मातुर्वपुषि स्तनमात्रे यथा दृष्टिराभिमुख्यं च, तथा प्रपन्नसंततेर्भगवतो दिव्यमङ्गलविग्रहे पादारविन्दमात्रे रुचिरसंप्रतिपन्नेति द्योतयितुमिह पादमात्रोक्तिः। तयाऽपि कृत्स्नोऽपि दिव्यमंगलविग्रह उपलक्षित एव स्यात्। तेन च विग्रहशून्यतावादिनः अर्थात्प्रतिक्षिप्ता भवन्ति। स्वानुभवमात्रे निष्णातस्य

मुनिसार्वभौमस्यास्य यद्यपि परमतप्रत्याख्याने रुचिः प्रवृत्तिर्वा मनागपि नास्ति, तथाऽपि दीपारोपणे सति स्वतस्तिमिरविलयवत् इह स्वानुभवपरसूक्तेः दुर्मता-यर्थाः प्रतिक्षिप्तानि भवन्तीति प्रतिपत्तव्यम् ।

दुःखापनोदनशीलत्वं यदस्ति पादविशेषणम्, तत्राय प्राचामाचार्याणां निर्वाहविशेषः—कस्य दुःख-मपनुन्नं भवतीति तु मूले विशिष्य नोक्तम् । भगवतः प्रणतार्तिहरत्वप्रसिद्धिप्राचुर्यतः भक्तदुःखापनोदकत्वं ग्रहीतुं योग्यमिति केचिदाचार्या आशेरत । भगवान् रामानुजमुनिस्तत्र एवमनुजग्राह—'तुयररुक्कुम् शुडरडि' इति न, 'तुयररुम् शुडरडि' इति नामद्वक्तुर्मुनेर्विवक्षा, परकीयदुःखनिवर्तकत्वं नात्र विवक्षितम्, अपि तु स्वस्यैव निवृत्तदुःखत्वम् । * अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम् । कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह ॥ * इति श्रीरामायणसूक्तिः (बालकाण्डे १-८५) प्रसिद्धा ननु, अत्र विज्वरत्वं प्रमुदितत्वं च विभीषणे वक्तव्यमपि नोक्तम् । भक्ते निर्दुःखे सति भगवत्येव तत् भृशं प्रकाशत इति गम्यते । * व्यसनेषु मनुष्याणां भृशं भवति दुःखितः * इति यो भृशं दुःखितत्वेन कथ्यते तस्यैव हि दुःखनिवृत्त्या भवितव्यम् । तथा च भक्तदुःखनिवर्तन-मुखेन स्वस्य निवृत्तदुःखत्वं भविष्णु, तदेवात्र कथितमिति ग्रहणं चारुतरमिति भगवद्रामानुजहृदयम् । शठकोप-मुनेरस्य अज्ञानविध्वंसनेन भगवान् स्वयं दुःखाद्विमुक्तो जाज्वल्यमानतनुश्चासीदिति सुशोभनोऽयं निर्वाहः ।

ननु शासनानर्हस्य अचेतनस्यान्तःकरणस्य कथमत्र नमस्कारशासनमिति चेत्, मनसि चेतनत्वमारोप्य * जिह्वे ! कीर्तय केशवं मुररिपुं चेतो भज श्रीधरं पाणिद्वन्द्व समर्चयाच्युतकथाः श्रोत्रद्वय त्वं शृणु * इत्यादाविव कविसंप्रदायतः क्रियमाणं शासनं नानुपपन्नमिति वेद्यम् । अन्तरङ्गापदेशेन अन्तरङ्गपर्यायभूता भक्ताः एवात्र संबोधिताः शासिताश्चेत्यपि सुवचम् । अत्यन्तप्रियाणाम् अन्तरङ्गत्वेनैव व्यपदेशो व्यवहारदृष्टो हि ।

'हे मानस ! नमस्कुरु' इत्येतावन्मात्रमनुक्त्वा 'नमस्कृत्य समुज्जीव' इति कथनात् कैङ्कर्यपर्यन्त-पुरुषार्थप्रेप्सा सूचिता भवति । तथाच गाथयाऽनयाऽश्रियःपतिरेव परं तत्त्वम्, तच्चरणारविन्दसमाश्रयणमेव परमं हितम्, कैङ्कर्यमेव परमः पुरुषार्थ इति तत्त्वहितपुरुषार्थनिष्कर्षः कृतो भवति । मुनिवरोऽसौ पुस्त्वं विहाय स्त्रीत्वमाश्रित्य नायिकावाचा सखीगिरा मातृवचसा च उपरि [चतुर्थदशकात्प्रभृति तत्रतत्र] गाथा अवतार-यिष्यति, तत्र च कारणमस्यामेव गाथायां निबद्धमस्ति, भक्तिरूपापन्नज्ञानप्रदानं हि स्वस्मै भगवता कृतमिति कथितमिह, भक्तिरेव शृङ्गारवृत्त्या परिणमतीति, भक्तिभूम्नैव अन्यापदेशगिरा [स्त्रीभावनया] प्रादुर्भाव इति च परमार्थः ॥ ... (१)

(गाथा) मननहमलमर मलर्मिशै येल्लदरुम् * मनतुणर्वळविलन् पोरियुणर्वैयिलन् *
इननुणर् मुळुनलम् एदिर् निहळ्कळिविलुम् * इननिलनेननुयिर् मिहुनरैयिलने ॥ २ ॥

मनोगतकामक्रोधादिमलमपेतु प्रनष्टेषु विकस्वरता प्रासेन उपर्युपरि जृम्भमाणेन मानसज्ञानाख्ययोग-ज्ञानेन परिच्छेद्याज्जीवात्मनो व्यतिरिक्तः, बाह्येन्द्रियज्ञानगोचरात् अचिद्वस्तुनोऽपि विलक्षणः, इत्थंभूतः, कार्त्स्न्येन ज्ञानानन्दघनः, भविष्यद्वर्तमानभूतरूपे कालत्रितयेऽपि स्वसदृशदरिद्रः, साम्याधिकरहितश्च (परमपुरुषः) ममान्तरात्मा ॥

* * * परमात्मस्वरूपं तावत् अन्तरिन्द्रियपरिच्छेद्यजीवात्मतुल्यं न; बाह्येन्द्रियपरिच्छेद्य-अचित्तुल्यं च न; किं तु समाभ्यधिकरहितं ज्ञानानन्दघनं चेति तद्वैलक्षण्यम् अस्यां गाथायां कथितं भवति ॥

मूले परब्रह्मणो जीवात्मतौल्यनिषेधो वा अचित्तौल्यनिषेधो वा न कण्ठतः कृतः; अन्तरिन्द्रिया-परिच्छेद्यत्वं बाह्येन्द्रियापरिच्छेद्यत्वं चेति एतावदेव व्यक्तं प्रतिपादितम्। चेतनाचेतनविसजातीयत्वकथनमेवात्राभिसंहितमिति मर्मविद आचार्या व्याचक्षते। तथा च षट्सहस्रिकायां श्रीकुरुकेशार्यसूक्तिः—"योगाभ्यासपरिशुद्धान्तःकरणजन्यज्ञानैकविषयात् परिशुद्धात्मस्वरूपाद्विसजातीयः, बाह्येन्द्रियजन्यज्ञानविषयादचेतनाद्विलक्षणः" इति।

अथ, यदि चेतनाचेतनविलक्षणत्वमेवात्र परमपुरुषस्य प्रतिपिपादयिषितम्, तर्हि तत् कण्ठत एव वक्तुं योग्यं शक्यं च। किमर्थमिदम् आभ्यन्तरबाह्येन्द्रियापरिच्छेद्यत्वकथनमुखेन तदवबोधनप्रयास ऊरीकृत इति केचिदाशङ्केरन्। अत्रोच्यते। काञ्चनकरीषयोः पिपीलिकापञ्चाननयोः महति वैषम्ये सत्यपि एकेन्द्रियग्राह्यत्वेन साम्यमप्यस्ति। करीषं पिपीलिकां च येन चक्षुषा पश्यामस्तेनैव हि चक्षुषा काञ्चनं पञ्चाननं च पश्यामः; एवं-विधमेकेन्द्रियग्राह्यत्वरूपं साम्यमपि चिदचितोरीश्वरस्य च नेति प्रतिपादनार्थमेव एवं कथितमिति वेदितव्यम्।

ननु एकेन्द्रियग्राह्यत्वरूपसाम्याभावेन परमात्मनः क उत्कर्षः? तादृशसाम्यवतोः काञ्चनकरीषयोश्च तावता का क्षतिः? न खलु तावता तयोस्स्वाभाविकावुत्कर्षापकर्षौ हीयेते। एवं च भगवत एकेन्द्रियग्राह्यत्वरूप-साम्याभावकथनं निष्फलमिति शङ्का जायेत। अत्रोच्यते। एकेन्द्रियग्राह्यत्वाभावकथनेन तन्निमित्तस्य साजात्यस्य द्रव्यैक्यस्य वा अभावः फलति। सजातीययोर्हि पदार्थयोः केनचिदाकारेण सुमहति वैषम्ये सत्यपि आकारान्तरेण साम्यं च सम्भवति। यथा पिपीलिकापञ्चाननयोः लघिष्ठत्वगरिष्ठत्वाभ्यां महति वैषम्ये सत्यपि जन्ममरणादिभाक्त्वेन साम्यम्। यथा च काञ्चनकरीषयोरनर्घत्वाल्पत्वाभ्यां वैषम्यसत्त्वेऽपि क्रयलभ्यत्वादिना साम्यम्। एवं भगवतोऽपि तादृशाकारान्तरेण साम्ये सति तद्गतकतिपयस्वभावानां वा तस्मिन् प्रसञ्जनं भवेत्। तच्चावद्ये पर्यवस्येत्। तादृशावद्य-प्रसक्तिसहसाजात्यनिषेधेन भगवतोऽति विलक्षण वैलक्षण्यं सिध्यतीति बोध्यम्। *अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽय-मुच्यते * (२-२५.) इत्यत्र गीताभाष्यश्रीसूक्तिरिहानुसन्धेया—"छेदनादियोग्यानि वस्तूनि यैः प्रमाणैर्व्यज्यन्ते तैः अयम् आत्मा न व्यज्यत इत्यव्यक्तः। अतः छेद्यादिविसजातीयः। अचिन्त्यश्च—सर्ववस्तुविसजातीयत्वेन तत्तत्स्वभावयुक्ततया चिन्तयितुमपि नार्हः। अतश्च अविकार्यः-विकारानर्हः-" इति।

ननु, यद्यपि भगवतो बाह्येन्द्रियग्राह्यत्वमसंभवीति सुवचम्; तथाऽपि निष्कल्मषान्तःकरणग्राह्यत्वमपि नेति दुर्वचं खलु। सर्वथा ज्ञानस्यैव अगोचरस्स इति सिद्धे वन्ध्यासुतशशविषाणादिवत् तुच्छता खलु प्रसज्येत; बहवो महायोगिनो भगवन्तमन्तःकरणेन वीतकल्मषेण प्रेक्षमाणाः श्रूयन्ते च। सोऽयं शठकोपसूरिश्च तादृशेष्वग्र-गण्यो हि विराजते। एवं च सति कथं परस्य पुंसो वीतकल्मषेणान्तःकरणेनाप्यग्राह्यत्वमभिधीयते? इति चेत्; उच्यते; * दृश्यते त्वग्र्यया बुद्ध्या, * मनसा तु विशुद्धेन * इत्यादिप्रमाणप्रतिपन्नं विशुद्धमनोग्राह्यत्वं परमात्मनो नापलप्यते। इदन्तया, इयत्तया ग्राह्यत्वासंभवमात्रमिहाभिप्रेतमिति वेदितव्यम्। एतदुक्तं भवति—परमात्मनश्शुद्धमनो-ग्राह्यत्वेऽपि तत्स्वरूपस्यापरिच्छिन्नत्वात् शुद्धमनसाऽपरिच्छिन्नत्वमेव तस्येति वैलक्षण्यसिद्धिरिति। * नित्यमिन्द्रिय-पथातिग महो योगिनामपि सुदूरगं प्रिय. * इति श्रीकूरनाथसूक्तिरिहानुसन्धेया।

(पोरियुणर्वैर्यविलन्.) इत्यनेन बाह्येन्द्रियजन्यज्ञानविषयादचेतनवस्तुनो वैलक्षण्यमुच्यते। जीवात्म-वैलक्षण्यकथनेन अचिद्वैलक्षण्यस्य सिद्धवत्त्वात् पुनरस्य पृथक्कथनमनपेक्षितमेव। अथापि कथनं सुष्ठ्वाय। अथवा, बाह्येन्द्रियगोचरादचितत्त्वाद्यथा विलक्षणः परः पुमान्, तथा परिशुद्धान्तःकरणज्ञानैकविषयात्परिशुद्धात्मस्वरूपादपि विसजातीय इति दृष्टान्तविधयोपादानमित्यपि सुवचम्। * न तत्समश्चाभ्यधिकश्च दृश्यते * इति श्रुतिवाक्यनिर्वाहे, यथा तस्मादभ्यधिको नास्ति, तथा तत्समोऽपि नास्तीति योजना स्मर्तव्याऽत्र। ननु, राम-कृष्णादिविभवावतारेषु अर्चावतारेषु च बाह्येन्द्रियग्राह्यत्वं भगवतोऽस्त्येव खलु। कथं तदभाव इहोच्यत इति चेत्, तत्र दिव्यमङ्गल विग्रहस्यैव बहिरिन्द्रियग्राह्यता, न दिव्यात्मस्वरूपस्य; दिव्यात्मस्वरूपमभिप्रेत्यैवात्रोच्यत इति समाधेयम्।

तृतीयपादादौ [इनन्] इत्थंभूत इत्यर्थः। उक्तस्यानुभाषणमिदम्। अनुभवाम्बुधिमग्नानां विस्मय-विवशानामयं व्याहारः। अथ [उणर्मुलुनलम्] कार्त्स्न्यवाचकं मुलु इत्येतन्मध्यवर्ति पदं काकाक्षिन्यायेन पूर्वत्रोत्तरत्र चान्वितं सत् ज्ञानघन आनन्दघनश्चेत्यर्थमभिदधाति। * सत्यं ज्ञानमनन्तं ब्रह्म * आनन्दो ब्रह्म * इत्यादि प्रमाणजालमिहानुसन्धेयम्। अथ [एदिर्निहल्द् कलिविनुम् इननिलन्] कालत्रयेऽपि स्वसदृशरहित इत्यर्थः। नन्वस्मदीये सिद्धान्ते तत्त्वत्रयमेव स्वीकृतम्। चिदचिद्वैलक्षण्यं प्रथमद्वितीयपादाभ्यामुक्तमेव। सादृश्य-शङ्कास्पदवस्त्वन्तराभावात् पुनरपीह स्वसदृशरहित इति कथनं निरर्थकमेव खलु, इति चेत्, उच्यते। सामा-न्यतस्सदृशराहित्यं पूर्वमुक्तम्। इह तु विशिष्य कालत्रयेऽपि तद्राहित्यमुच्यत इति भेदोऽस्त्येव इति केचिदाचार्या ऊचुः। भट्टपादास्तु, साधर्म्यदृष्टान्ताभाव. पूर्वमुक्तः, वैधर्म्यदृष्टान्तस्याप्यभाव इहोच्यत इत्याहुः। तदिदं विविच्यते। मुखं न कमलसदृशमित्युक्ते मुखस्य साधर्म्यदृष्टान्तत्वं सिध्यति; मुखं न कमलसदृशमित्युक्ते साधर्म्यदृष्टान्तविरहेण सह वैधर्म्यदृष्टान्तसद्भावस्सिध्यति। कमलस्य न साधर्म्ये दृष्टान्तता, अपि तु वैधर्म्ये इति। अथ प्रकृतेऽवतरामः। भगवान् चिदचित्सदृश इत्युक्ते भगवतस्साधर्म्यदृष्टान्तत्वं सिद्धयेत्। भगवान् न चिद-चित्सदृशः, अपि तु तद्विसजातीय इत्युक्ते वैधर्म्यदृष्टान्तसत्ता सिध्यति। तादृशवैधर्म्यदृष्टान्तसत्ताऽपि चतुर्थपादे इननिलनेत्यनेन अपनुद्यत इति भट्टपादानां सूक्तिः। अनया किमुक्तं भवतीति विमर्शनीयम्। भगवान् चिद-चिद्विलक्षण इति कथनमप्यसाधु—इत्युक्तं भवति। तर्हि, स चिदचिद्विलक्षणो न, चिदचित्सदृश एव; इति खलु साधितं भवेदिति नाशङ्कनीयम्। प्रसज्यप्रतिषेधमात्रमपि अस्थाने इत्येव कथितं भवेत्। बुद्ध्यारोहार्थं पुनरुपपाद्यते। 'वसिष्ठो न चण्डालतुल्य' इति कश्चिदाह। अपरः कश्चिदाह, मूर्ख! मैवं वादीरिति। किमेतावता वसिष्ठं चण्डालतुल्यं ब्रूहीति कथितं सिध्येत्? नैव सिध्येत्। वसिष्ठो न चण्डालतुल्य इति प्रति-षेधोऽप्यत्यन्तमचाररीति हि सिध्येत्। एवम्, 'ईश्वरश्चिदचित्सदृशो नेति कथनमप्ययथार्थम्' इत्येव भट्टपाद-हृदयमवसेयम्। यत्र साम्यप्रसक्तिस्तत्रैव खलु तत्प्रतिषेध उपपद्येत। सर्वथाऽपि तदप्रसक्तिस्थले तत्प्रतिषेधोऽनुपपन्न. अवधावदस्थेति विपश्चितो विदन्ति। इत्यलम्।

चतुर्थपादे [एनतुयिर्] इत्यस्य ममान्तरात्मा इत्यर्थः। तथा च, चिदचिद्विलक्षणस्समाधिकरहितश्च परमपुरुषः ममात्मा इति समापनं बोध्यम्। अथवा, समाधिकरहितो ममात्मा च यः परमपुरुषः तस्य पादौ नमस्कृत्य समुज्जीव भो मम मानसेति पूर्वगाथया संयोज्यतामित्यप्याचार्या व्याचख्युः॥ .... (२)

(गाथा.) इलनदु उडैयनिदु एन निनैवरियवन् * निलनिडै विशुम्बिडै उरुविननरुविनन् *
पुलनोडु पुलनलन् ओळिविलन् परन्द * अन्नलनुडैयोरुवनै नणुहिनम् नामे ॥ ३ ॥

'तद्वस्तुरहित' 'एतद्वस्तुविशिष्ट' इत्येवं चिन्तयितुमशक्य ; सर्वेषु लोकेषु सर्वेषु चोर्ध्वलोकेषु वर्तमानानि अचिद्वस्तूनि चिद्वस्तूनिव स्वशरीरतया बिभ्राण , इन्द्रियग्राह्यवस्तुभिस्सह वर्तमानोऽपि इन्द्रियैरग्राह्य , कालपरिच्छेदरहित ; देशपरिच्छेदरहितश्च (स परमात्मा), तत्तादृशकल्याणगुणविभूतिमन्तमद्वितीयं भगवन्तं वयमाश्रिता ॥

* * * परिच्छिन्नविभूतिकेषु वक्तव्यां वाचमसहमानम्, पृथिव्यन्तरिक्षादिसकललोकवर्तिचेतनाचेतनात्मकसमस्तवस्तुशेषिणम्, सर्वजगदात्मभूतेऽपि तद्गतदोषैरसंस्पृष्टमद्वितीयं सर्वेश्वरमाश्रिता वयमित्युक्तं भवति ॥

प्रथमपादेन सर्ववस्त्वाश्रयत्वमभिधीयते । लोके परिच्छिन्नविभूतिकव्यक्तिषु सर्वपदार्थवत्त्वं वक्तुं न शक्यम् । वस्तुतो यानि सन्ति कानिचन वस्तूनि, तान्युपादाय एतान्यत्र सन्तीति कथ्येत । वस्तुतो यानि न सन्ति तान्युद्दिश्य एतान्यत्र न सन्तीति कथ्येत । सतां वस्तूनामल्पत्वम् असतां वस्तूनामनल्पत्वं च भगवदितरव्यक्तिषु सिध्येत् । भगवति तु सर्ववस्त्वाधारत्वेन एतदस्त्वनेनेति नास्तीति वा कथनं चिन्तनं च नैव प्रसक्तिमदिति प्रथमपादतात्पर्यम् । अपरिच्छिन्नविभूतिको भगवानित्युक्तं भवति । अथ द्वितीयपादेन सर्वलोकवर्तिचिदचिच्छरीरकत्वमुच्यते । संस्कृते रूपि अरूपि इति पदद्वयं प्रथते । तदेव द्राविड्या क्रमेण उरु, अरु इति संशब्द्यते । अचिद्वस्तूनां रूपित्वम्, चिद्वस्तुनः अरूपित्वं च सप्रतिपन्नम् । अधोलोकेषु ऊर्ध्वलोकेषु च यावन्ति सन्ति चिदचिद्वस्तूनि, तानि सर्वाणि भगवति सन्तीति कथनं मूले वर्तते । एतेन चिदचिद्वस्तुशरीरकत्वं [सकलचेतनाचेतनान्तर्यामित्वपर्यवसितम्] भगवतस्सिद्धम् । * जगत्सर्वं शरीरं ते * (रामा यु ११०-२५) इत्यादिभि प्रमाणैरुपबृंहितो ह्ययमर्थ ।

अथ तृतीयपादे [पुलनोडु] इत्यनेन, * यच्च किंचिज्जगत्यस्मिन् दृश्यते श्रूयतेऽपि वा । अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित ॥ * इति श्रुत्यर्थोऽनुसन्धीयते । इन्द्रियग्राह्यैस्सर्वैरपि पदार्थैस्सह वर्तमानो भगवानित्युक्तं भवति, वर्तनं च व्याप्त्या । एवं सर्ववस्तुषु वर्तमानोऽयं किं तद्गतदोषैस्संस्पृश्येत? इत्यत्राह [पुलनलन्] इति । न तद्धर्मा । * द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्य पिप्पलं स्वाद्वत्ति अनश्नन्नन्यो अभिचाकशीति * इति श्रुतिरिह व्याख्याता भवति । शारीरकमीमांसायां * संभोगप्राप्तिरिति चेन्न वैशेष्यात् * इति सूत्रमिहानुसन्धेयम् । जीवस्येव परस्यापि ब्रह्मणश्शरीरान्तर्वर्तित्वमभ्युपगतं चेद्, तद्वदेव शरीरसम्बन्धप्रयुक्तसुखदुःखोपभोगप्रसङ्ग इति चेन्न, हेतुवैशेष्यात् । न हि शरीरान्तर्वर्तित्वमेव सुखदुःखोपभोगे हेतु, अपि तु पुण्यपापरूपकर्मपरवशत्वम् । तच्च अपहतपाप्मन परमात्मनो न सम्भवतीति सूत्रार्थ ॥ (३)

(गाथा) नाममवनिवनुवन् अवळिवनुवनेवर् * तामवरिवरुवर् अदुविदुवुदुवेदु *
वीमवैयिवैयुवै अवै नलन्तीङ्गवै * आमवैयायवै आयू निन्रवरे ॥ ४ ॥

वयम्, दूरस्थ, सन्निहित, अदूरविप्रकृष्ट, दूरवर्तिनी, सन्निकृष्टा, अदूरविप्रकृष्टा, का खिदियमिति पृच्छ्यमाना पूज्यत्वविशेषिना त एव (पूर्वोक्ता) पदार्था पूर्वोक्तदूरस्थत्वादिगुणयुक्ता अचित्पदार्था दूरस्थत्वादि-गुणेन सह नश्वरत्वगुणेनापि युक्तास्त एव पदार्था समीचीना असमीचीनाश्च पदार्था भविष्यत्कालिकपदार्था भूतकालिकपदार्था वर्तमानकालिकपदार्थाश्च (इत्येतत्सर्वं) भगवदायत्तमेव ।

* * *—विविधैर्निर्देशैर्निर्दिश्यमानाना समस्तानामपि वस्तूना स्वरूपं भगवदधीनमेवेत्युक्त भवति ॥ अत्र नाम् अयन् इत्यादयश्शब्दास्तत्तच्छरीरकपरमात्मपरा, शरीरवाचिना शब्दाना शरीरिपर्यन्तत्वस्य अपर्यवसानवृत्ति-सिद्धत्वात् । * सर्वेन्द्रियान्त करणपुरुषाख्य हि यज्जगत् । स एव सर्वभूतात्मा विश्वरूपो यतोऽव्यय * इति पराशर, 'यतोऽसौ विश्वशरीरक ततो जगत् स एव' इत्युक्तवान् । तथाच सामानाधिकरण्यनिर्देशे शरीरा-त्मभावस्य हेतूकरणात् इहापि शरीरात्मभावनिबन्धनमेव सामानाधिकरण्यम्, न तु स्वरूपाभेदनिबन्धनमिति द्रष्टव्यम् । वक्ष्यते च सुस्पष्टमिद मुनिवरेणैव उपरि सप्तमगाथायाम् 'उडन्मिशै युयिरेन' इति ।

जगति वर्तमानानि सर्वाण्यपि वस्तूनि भगवदायत्तस्वरूपाणीति विवक्षुर्मुनिवर जागताना सर्वेषामपि वस्तूना प्रत्येकश उपादान दुश्शकमिति म यते स्म । विवेचनमन्तरेण 'सर्वाण्यपि वस्तूनि' इति सहसा कथने रसो नास्तीति चामयत । सुबहु विमृश्य अतिचारुतरप्रक्रियया गाथामिमा निबबन्ध । लघीयस्यामपि गाथायामस्या-मेकस्या लीलाविभूतिवर्तीनि सर्वाण्यपि पदार्थवृन्दानि चातुर्यभूम्ना निर्दिष्टान्यभूवन्निति पश्यत । उत्तमपुरुषनिर्देश्या, प्रथमपुरुषनिर्देश्या, एकवचननिर्देश्या, बहुवचननिर्देश्या, दूरस्थत्वेन निर्देश्या, सन्निकृष्टत्वेन निर्देश्या, अदूर-विप्रकृष्टत्वेन निर्देश्या, चित्त्वेन निर्देश्या, अचित्त्वेन निर्देश्या, पूज्यत्वेन निर्देश्या, पुन्नपुंसकस्त्रीत्वै निर्देश्या, प्रष्टव्यत्वेन निर्देश्या भगुरत्वेन निर्देश्या, सद्गुणवत्त्वेन असद्गुणवत्त्वेन च निर्देश्या, भूतभविष्यद्वर्तमानकाल-वर्तित्वेन निर्देश्या पदार्था इति, एव नाम कथनभिदया सर्वमपि पदार्थजात सगृहीतमिह गाथायामहह । अति-विस्तरमतिसक्षेप च विहाय लघुशब्दशरीरेण जागतसर्वपदार्थप्रतिपादनफक्किका सैषा मुनिवरेऽस्मिन्नसाधारणी दृश्यते । प्रदर्शितेष्वेतेषु निर्देशेषु अन्तर्भावमनश्नुवान वस्तु नैकमपि विद्यते लीलाविभूत्याम् । तथा च सर्वाण्यपि वस्तुजातानि निरवशेष निर्दिष्टान्यभूवन् । निर्दिश्य किमुक्तमत्र तत ? [अवरे] स एव-इत्युक्तम् । सर्वं स एवे-त्यमेद उक्त । * सर्वं खल्विद ब्रह्मेत्यादिश्रुतिवाक्येष्वद्वैतिना निर्वाहप्रकारोऽय । श्रीशठकोपमुनीन्द्रसूक्त्युप-जीविभगवद्रामानुजसप्रदायस्थाना निर्वाहप्रकारस्त्वन्य । शरीरशरीरिभावनिबन्धन ऐक्यव्यपदेश इति अत्र सक्षेप । * तत्सर्वं ध हरेस्तनु * इत्युक्तमिति ध्येयम् ॥ (४)

(गाथा) अवरवर् तमतमदु अरिविरिवहैवहै * अवरवरिरैयवर् एनवडियडैवहर्द्द *
अवरवरिरैयवर् कुरैविलरिरैयवर् * अवरवर् विदिवळि अडैयनिन्नरे ॥ ५ ॥

सत्वरजस्तम प्रकृतिकास्ते ते पुमास स्वस्वज्ञानानुकूलप्रकारभेदै तांस्तान् देवताविशेषान् ईश्वरत्वेन मत्वा तत्तद्देवताचरणसमाश्रयणप्रवणा भवति, तैस्तैराश्रितास्तास्ता देवता फलप्रदानाशे सामर्थ्यविकला न भवन्ति, (कुत इति चेत्,) ते ते समाश्रयितार स्वस्वभाग्यानुसारेण यथा फल लभेरन्, तथा सर्वस्वामी भगवान् (तत्तद्देवतान्तर्यामी) तिष्ठति ।

* * * अग्नीन्द्रादिदेवताशरीरकतया तत्तद्देवतोद्देश्यकफलकर्मसमाराध्यः, तत्तत्कर्मफलप्रदाता च स एव परमः पुमानित्युक्तं भवति ॥

भगवान् गीतायां तृतीयाध्याये (११) * देवान् भावयतानेन ते देवा भावयन्तु वः । .... इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः * इत्याह । अयमर्थः—देवताराधनभूतेन कर्मणा मच्छरीरभूतान् मदात्मकान् देवानाराधयत ; यज्ञेनाराधितास्ते देवा मदात्मकाः स्वाराधनापेक्षितान्नपानादिभिर्युष्मान् पुष्णन्तु । यज्ञेनाराधिता मदात्मकास्ते देवा इष्टान् भोगान् [उत्तरोत्तराराधनापेक्षितान् सर्वान् भोगान्] वो दास्यन्तीति । एवं नाम तृतीयाध्याये गूढमुक्तमनुसारेण उपरि नवमाध्याये, * येऽप्यन्यदेवताभक्ता यजन्ते श्रद्धयाऽन्विताः । तेऽपि मामेव कौन्तेय यजन्त्यविधिपूर्वकम् ॥ अहं हि सर्वयज्ञानां भोक्ता च प्रभुरेव च * इति स्फुटमाचष्ट । मच्छरीरभूतानामिन्द्रदेवतानामाराधनं तदन्तर्यामिभूतमदाराधनरूपमेव भवति । सर्वेषां यज्ञानां भोक्ता अहमेव—तैस्तैर्यज्ञैराराधितोऽहमेव भवामि । प्रभुरेव चाहम्—तत्र तत्र फलप्रदाता चाहमेव इत्यर्थः । एवंविधां भगवदुक्तिं हृदये कृत्वा गाथामिमामन्वग्रहीन्मुनिवर इति ध्येयम् ।

अधस्तनगाथया सर्वेषां स्वरूपं भगवदायत्तमिति कथितम् । अनया गाथया सर्वेषां स्थितिश्च भगवदधीनेति कथ्यते । स्थितिर्नाम रक्षणम् । तच्चापेक्षितफलप्रदातृत्वरूपम् । एवंविधं रक्षणं परमपुरुषादन्यत्र न संभवितुमर्हति । यदाहुर्महर्षयः—* न संपदां समाहारे विपदां विनिवर्तने । समर्थो दृश्यते कश्चित्तं विना पुरुषोत्तमम् ॥ * न हि पालनसामर्थ्यमृते सर्वेश्वरं हरिम् * इति । उपनिषच्च * इष्टापूर्तं बहुधा जातं जायमानं विश्वं बिभर्ति भुवनस्य नाभिः । तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः ॥ * इति । सैषा विव्रियते मनाक् । इष्टम्—यागादिलक्षणं श्रौतं कर्म ; पूर्तम्—खातादिलक्षणं स्मार्तं कर्म ; विश्वम्—अग्नीन्द्रादिदेवताकं कालत्रयवर्ति सर्वं बहुविधं कर्म । बिभर्ति—स्वीकरोति । सर्वकर्मसमाराध्यः स्वयं भवतीत्यर्थः । स क इति चेत्, भुवनस्य नाभिः— सर्वजगदीश्वरो यस्स एवेत्यर्थः । अथ * तदेवाग्निरित्यादिकमुत्तरार्धमेतत्समर्थनपरम् । ननु अग्नीन्द्रादिदेवतोद्देश्यककर्मसमाराध्यत्वमग्नीन्द्रादीनामेव युक्तम् ; कथं नु तत् परमात्मन इत्याशङ्क्य स एवाग्न्यादिशरीरकतया तत्तच्छब्दवाच्य इत्याह * तदेवाग्निरित्यादिना ।

इदमादिश्रुतिस्मृतिप्रथितोऽर्थः गाथयाऽनया सुस्पष्टं प्रतिपाद्यते । लोके तावदधिकारिण उच्चावचाः । प्रायश्शुद्धसात्त्विका मृग्याः । राजसास्तामसा रजस्तमोमिश्रसत्त्ववन्तश्च बहुलाः । ते खलु स्वस्वरुच्यानुगुण्येन 'ममेयं देवता उद्देश्या, ममैषा देवता उद्देश्या' इत्याकलय्य, तास्ता देवतास्संश्रित्याराधयन्ति । अथ तासां देवतानामुत्तमोत्तमफलदानशक्तिविरहेऽपि आश्रितसामान्याधिकारिकाङ्क्षितफलप्रदाने शक्तिरक्षता । सा च शक्तिः परमपुरुषानुप्रवेशकृता—इति तात्पर्यम् ।

गाथा सैषा वाक्यत्रयात्मिका । ते तेऽधिकारिणस्तास्ता देवता यजन्तीति प्रथमवाक्यम् । तेभ्यस्ता देवताः फलप्रदानशक्ता भवन्तीति द्वितीयं वाक्यम् । तादृशफलप्रदानौपयिकतया भगवांस्तासु देवतास्वन्तरात्म-

भावमवितिष्ठनीति चरम वाक्यम् । ननु भगवान् सर्वदा सर्वत्रैव ह्यन्तरात्मा सन्नवतिष्ठते । अत्र विशिष्य कथन किमर्थमिति चेत्, सर्वदा सर्वत्र सती व्याप्तिस्साधारणी, अत्र तु 'समाश्रितजनकाङ्क्षितफलप्रदान कारयेयम्, इति सङ्कल्पविशिष्टा व्याप्तिरिति विशेषो वेदितव्य । * विष्णुरात्मा भगवतो भवस्यामिततेजस * इत्येव । यदि भगवान् देवतान्तरेष्वन्तरात्मा सन् फल प्रददाति, तर्हि तद्देवताद्वारैव मोक्षमपि प्रदातु प्रभवति खलु' इति न मन्तव्यम् । तदनुकूलमनल्प तत्र न करोति स इति शास्त्रहृदयम् ।

अत्र द्वितीयपादे 'तत्तद्देवताचरणसमाश्रयणप्रवणा भवन्ति' इति यदुक्तम्, तत्रामु विचारमाचार्या: कुर्वन्ति—चरणसमाश्रयणमिति व्यवहारस्तावत् केवल श्रीमति नारायणे, "श्रीमन्नारायणचरणौ शरण प्रपद्ये" इति हि मन्त्ररत्नशरीरावतार । देवतान्तराणि तु चरणसमाश्रयण नैव कामयन्ते, तेन न तृप्यन्ति च । दुराराधदेवतास्ता प्रजापशुहिंसाभिरेव ह्याराध्यन्ते । तत्कथमिह चरणसमाश्रयणशब्दप्रयोग इति । समादधते चैवम्—नैतन्न जानाति शठकोपमुनि , तिरुवाशिरियाख्ये द्वितीयप्रबन्धे पष्ठगाथाया कण्ठरवेण कथयति च देवतान्तरदुराराधत्वम् । अथापि चरणसमाश्रयणमात्रेण स्वाराधे भगवति लक्ष्मीनाथे स्वकीयप्रावण्यदार्ढ्यबलेन स्वगोष्ठीप्रसिद्धिमनुसृत्य अवशादिदमुक्तवानिति । श्रीगोदाप्रबन्धे चतुर्दश्या गाथया "तङ्गळ् तिरुक्कोयिल्" इति यदुक्त तदिह दृष्टान्ततया ध्येयम् । तत्र तावत् परमैकान्तिनामुत्तमाश्रमिणा चर्या निदर्शयत इत्येको निर्वाह । केवल काषायवाससा शैवद्विजाना चर्या निदर्शयत इत्यपरो निर्वाह , द्वितीये निर्वाहे 'तिरुक्कोयिल्' इति व्यवहृतेस्तेषा सम्प्रदाये विरहेऽपि स्वसम्प्रदायवासनया तथा प्रोक्तमित्याचार्या उशन्ति । तथैवात्रापीति ।

एतद्गाथाव्याख्यानावसाने, "शास्तृमन्दिरवर्तिगजाना युद्धसामर्थ्ये सति हि देवतान्तराणा स्वत फलदानसामर्थ्यमभव " इत्यर्थकद्राविडसूक्तिरस्ति । अय भाव —शास्तृमन्दिर नाम—शास्तेति प्रसिद्धस्य देवतान्तरस्यालय , तत्र द्वारे कुशलनिर्मिता महत्तरा गजास्तुरगाश्च स्थाप्यन्ते प्रतिदेशम् । तेषा कृत्रिमजन्तूना केवल दर्शनीयता, नतु युद्धादिरूपकार्योपयोगितेति सर्वे जानन्ति । यदि प्राणविधुराणा तेषा युद्धसामर्थ्यं स्यात्, तर्हि भगवदनुप्रवेशशून्याना देवतान्तराणामपि फलप्रदानशक्तिस्स्यादिति ॥ (५)

(गाथा ) निन्ननरिरुन्दनर् किडन्दनर् तिरिन्दनर् * निन्निलर् इरुन्दिलर् किडन्दिलर् तिरिन्दिलर् * एन्नुमोरियल्विनर् एन निनैवरियर् * एन्नुमोरियल्वोडु निन्नवेम् तिडरे ॥ ६ ॥

तिष्ठन्त, आसीना, शयाना, सचरन्तश्च स्थित्युपवेशनशयनसचरणविधुराश्च अस्मदीयो दृढप्रमाणसिद्धो भगवानेव, (स पुन कीदृश इति चेत्,) सततमेकप्रकारप्रकृतिक इति चिन्तनानर्ह , सदैकस्वभावतया स्थितश्च ॥

* * * चेतनाचेतनात्मकसमस्तवस्तूना समस्तप्रवृत्तिनिवृत्तयश्च परमपुरुषाधीना एवेत्युक्त भवति ।

गाथायामस्या प्रथमपादे स्थित्युपवेशनशयनसचरणरूपकार्येषु प्रवृत्ताश्चेतना उक्ता , द्वितीयपादे तु तादृशप्रवृत्तितो निवृत्ताश्चेतना उक्ता , एते सर्वेऽपि भगवदधीना इति गाथावसानस्थितेन [एम् तिडरे] इत्यनेन

सिध्यति । तदिदं सिद्धसाधनं भवति । कथमिति चेत्, अधस्ताच्चतुर्थगाथायाम् * नामवनिनिरनुनन् * इत्यस्यां सर्वमपि धर्मिजातं सगृहीतमभूत, सर्वस्यापि तस्य भगवदधीनता च तत्रैवोक्ता । अधुनाऽस्यां गाथायां प्रतिपाद्यमानास्तिष्ठन्त आसीना इत्यादयः, अतिष्ठन्त अनासीना इत्यादयश्च तस्यामेव चतुर्थगाथायामुक्तप्राया एव भवन्ति । अधुना किमपूर्वमभिधीयत इति द्रष्टव्यम् । एवं तावद्ग्रहीतव्यम् । यद्यपि गाथायामस्यां प्रवृत्तिशालिनो निवृत्तिशालिनश्चैव स्पष्टमुक्ता, तथाऽपि तत्तद्व्यक्तिगता प्रवृत्तयो निवृत्तयश्चैवात्र विवक्षिताः । तत्तद्वस्तुगतप्रवृत्तिनिवृत्तीनामपि तादधीन्यमुच्यतेऽनया गाथया । एतत्तु चतुर्थगाथया नैवोक्तमिति अपूर्वकथनमेव, न सिद्धसाधनम् । वेदे यागसाधनभूतायास्सोमलतायाः क्रयणं गवा कर्तव्यमिति "गवा ते क्रीणानीत्येव ब्रूयात् गोअर्घमेव सोमं करोति" इति वाक्यतो विहितम् । अन्यत्र तु "अरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्याम्नातम् । अत्र तावदारुण्यगुणविशिष्टया गवा सोमक्रयणमुच्यते, तथाच आरुण्यविशिष्टबोधने सत्यपि आरुण्यमात्रे तात्पर्यं ग्राह्यम् । कुतः ? सोमक्रयणकरणभूतविशेष्यांशस्य (गो) पूर्वमेव प्राप्तत्वात्, प्राप्तस्य पुनः प्रापणानवसरात्, अप्राप्तपूर्वे आरुण्यमात्रे इह विधितात्पर्यमिति गृह्यते । एवं "लोहितोष्णीषा ऋत्विजः प्रचरन्ती"ति वेदवाक्यमस्ति । अभिचारकर्मणि श्रूयत इदम् । ऋत्विजां सोष्णीषाणां सञ्चरणस्य अन्यतः प्राप्तत्वात्, प्राप्ते तस्मिन्नंशे नात्र विधिः प्रवर्तते । अप्राप्ते (उष्णीष) लौहित्यमात्रे अत्र विधिगोचरता स्वीक्रियते । एवमेव प्रवृत्तानां निवृत्तानां च पुंसां भगवदधीनतायाः प्रागेव प्राप्तत्वात्, अत्र प्रवृत्तिनिवृत्तितादधीन्यमात्रं तात्पर्यविषयभूतमिति ग्रहीतव्यम् । अत एव षट्सहस्रिकासूक्तिः—"चेतनाचेतनात्मकसमस्तवस्तूनां समस्तप्रवृत्तिनिवृत्तयोऽपि परमपुरुषसङ्कल्पाधीना इत्युच्यते" इति । चिदचित्स्वरूपतादधीन्यस्य प्रागेवोक्तत्वात्, चिन्तितनिमिषितादिलक्षणसर्वव्यापारतादधीन्यमिह कथितं भवतीति सङ्क्षेपः ।

अत्र केषाञ्चिदाशङ्का समजनि प्रवृत्तिस्तदधीना काममस्तु । किं निवृत्तिरपि तदधीनेत्यभ्युपगन्तव्यमिति । अत्र गोविन्दभट्टारक एवमूचे—"स्वर्गात्पतन्तं त्रिशङ्कुमुद्दिश्य शक्तिमान् कश्चन मुनिरुवाच तत्रैवावतिष्ठस्वेति, सद्य एव तथा स्थातव्यमभूत्तस्य । एवमेव निवृत्तानपि भगवत्सङ्कल्पसापेक्षता" इति ।

अथ तृतीयपादे-सततमेकविधस्वभाव इति परिच्छेत्तुमशक्य इत्युक्त्वा, चतुर्थपादे सततमेकविधेन स्वभावेन समन्वित इति प्रोक्तम् । तदिदं व्याहतमेव ननु ? इति चेत्, नैव व्याहतम् । अत्र द्वेधा समाधेयम् । सततमेकविधस्वभाव इति परिच्छेत्तुमशक्यस्वरूपो योऽयं स्वभावो वर्तते, सोऽयं सततमेकविध एवेति चतुर्थपादतात्पर्यमिति समाधानप्रकार एकः । अथवा, "समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभं भक्तजनैरदुर्लभम्" (वरदराजस्तवे) इतिवत् अभक्तानामपरिच्छेद्यस्वभाव इति सुवचम् । * नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये" इत्यत्र, "यद्वा, स्वप्रसादभाजां गोपगोपिकादीनामपि वाङ्मनसयोरेकविषयभूतायेत्यर्थः" इति स्तोत्रभाष्योक्तमिह स्मर्तव्यम् ।

गाथान्ते [एम् तिडर् ] इत्यनेन दृढप्रमाणसिद्धोऽस्मत्प्रभुरित्युच्यते । नित्यनिरवद्यापौरुषेयवेदप्रमाणं हि भगवतस्साधकम्, तच्च सर्वथा सुदृढमिति ज्ञेयम् । अत्र श्लोकं सामानाधिकरण्य वेदसिद्धमित्यपि सूचितं भवति ॥

भगवान् रामानुजः स्वकीयेषु श्रीभाष्यादिदिव्यप्रबन्धेषु श्रीशठकोपमुनेर्द्रविडसूक्तिभ्यः सादिष्टान् भूयसोऽर्थविशेषान् न्यबीबन्धदिति पूर्वाचार्याः प्रतिजानते । तस्याः प्रतिज्ञाया विपुलमुपपादनं द्रमिडोपनिषत्प्रभाव सर्वस्वनाम्नि अस्मदीये ग्रन्थे विशदम् । तत्रायमन्यतमो विषयः—अधस्तात् चतुर्थपञ्चमषष्ठगाथाभिः सकल-

चेतनाना स्वरूपम्, स्थिति (रक्षणम्), प्रवृत्तिभेदाश्च भगवदधीना इति ताव प्रतिपादितम । इदमेवानुसृत्य भगवान् रामानुज, "स्वाधीनत्रिविधचेतनाचेतनस्वरूपस्थितिप्रवृत्तिभेदम्" इति श्रीसूक्ति भगवद्विशेषणरूपा तत्रतत्र प्रयुङ्क्ते । [श्रीरङ्गगद्यश्रीवैकुण्ठगद्ययोरुपक्रमे सूक्तिरेषा द्रष्टव्याम् ।] गाथात्रयेणापि क्रमेण योऽर्थस्सिद्ध स एव हि सूक्तयामत्र निबद्ध । ननु, अयमर्थ उपनिषदादिसिद्धश्च स्यादेव खलु । ग्रन्थान्तरेषु नास्त्ययमर्थ इति न हि प्रतिज्ञातु शक्यम् । सहस्रगीतित एव भगवता रामानुजेन तद्विशेषणमुपनिबद्धमिति कथमिदमुच्यते? इति चेत्, उच्यते । नैष विषय उपनिषदादिग्रन्थान्तरेषु एव क्रमेण निबद्ध । चेतनाचेतनाना स्वरूप भगवदधीनमिति कचित्कोणे कथित स्यात् । तेषा स्थितिश्च तदधीनेति कोणान्तरे कथित स्यात् । प्रवृत्तिनिवृत्तिविषयेऽपि तथा । त्रितयस्यापि क्रमेण चारुफक्किकया प्रतिपादन सहस्रगीत्यामेवेति प्रतिज्ञातु शक्यम् । उपनिषत्सु प्रनीणा मन्त्रान्तरस्था अपि भगवतो विशेषणानि निर्दिशन्ति खलु । तेष्वेवंविधम्, एतत्समानाकारक वा विशेषण दृश्यते वेति निभृयताम् । कथ दृश्येत? नैव दृश्येत । श्रीशठकोपमुनीन्द्रदिव्यसूक्तिशरण नामेव सैषा वेखरी सपद्यत इति सर्वं समञ्जसम ॥ (६)

(गाथा) तिडविशुम्बेरि वळि नीर् निलमिवैमिशै * पडर् पोरुळ् मुळुवदुमाय् अवैयवैदोरुम् * उडल्मिशै युयिरेन करन्देङ्गुम् परन्दुळन् * शुडर्मिहुशुरुदियुळ् इवैयुण्ड शुरने ॥ ७ ॥

दृढ आकाश, अग्नि, वायु, आप, पृथीवी इत्येतत्पञ्चभूताश्रितभौतिकपदार्थास्सर्वेऽपि स्वय भूत्वा, तेषु तेषु पदार्थेषु शरीरान्तर्गतजीवन्यायेन तत्तदविदिततया सर्वत्रान्त प्रविश्य बहिश्च व्याप्य स्थित, एतत्सर्वं प्रलये संहृतवाश्च देव (अपौरुषेयवल्क्षण) तेजसा अतिशयितायां श्रुत्या प्रतिपाद्यतया वर्तते ॥

* * * सकलभूतभौतिकपदार्थेष्वन्त प्रविश्य नियन्तृतया सर्वशरीरक सर्वसंहर्ता च देव अपौरुषेयश्रुति-तात्पर्यगोचर इत्युक्त भवति । अधस्तनगाथासु सामानाधिकरण्येनैव निर्देश कृत, तच्च सामानाधिकरण्य जगदीश्वरयोश्शरीरशरीरिभावप्रयुक्तमिति गाथयाऽनया प्रतिपाद्यते । अस्मदीय शरीर यथा ह्यात्मा नियन्तृतया व्याप्यावतिष्ठते, तथा भगवानपि पृथिव्यादिभूतपञ्चक तदारब्धसमस्तवस्तुजात च नियन्तृतया व्याप्यावतिष्ठते । शरीरस्यात्मनश्च वस्तुतो भेदसत्त्वेऽपि यथा 'श्यामो देवदत्तो बुद्धिमान्, उन्नतो यज्ञदत्तो विद्वान्' इत्यादिव्य वहारेषु शरीरात्मनोरभेदप्रतिसन्धानम्, तथैव शरीरभूतयोश्चेतनाचेतनयो शरीरिण परमात्मनश्च वस्तुतो भेद-सत्त्वेऽपि "ज्योतींषि विष्णुर्भुवनानि विष्णु" इत्यादिष्वभेदप्रतिसन्धानमपि शरीरात्मभावनिबन्धनमेवेति प्रतिपादन गाथाया अस्या परमतात्पर्यविषयभूतम् ।

गाथोपक्रमे दृढार्थक यद्विशेषणपदमस्ति तत् अनुपदवर्तिनम पदमाले अन्वेतीति स्वीकारे, वाय्वादि-भूतान्तरापेक्षया आकाशस्य चिरकालस्थायित्वाद्दार्ढ्यमुक्तमिति मन्तव्यम् । उपरितनेषु सर्वेष्वपि पदेषु तदन्वय स्वीकारे, अबाधितप्रमाणसिद्धस्वरूपदार्ढ्यमुक्तमिति विभावनीयम् । चकारार्थेन भूतानीति आकाशवर्जं भूतचतुष्टय स्वीकर्तृमतनिरासाय आकाशे दार्ढ्यं विशेषितमित्यप्याहुराचार्या ।

[उडल्मिशै उयिरेन] शरीरस्य आत्मा धारको नियामकश्शेषी च यथा वर्तते, तथा चिदचितो धारको नियामकश्शेषी च परमपुरुष इति यावत्। "यस्य चेतनस्य यद्द्रव्य सर्वात्मना स्वार्थे नियन्तु धारयितु च शक्य तच्छेषतैकस्वरूप च, तत्तस्य शरीरम्" इति भगवद्भाष्यकृदनुगृहीत शरीरलक्षण कृत्स्नप्रपञ्चे समवैतीति द्रष्टव्यम्। [करन्दु] * य पृथिव्या तिष्ठन्नित्याद्यौपनिषदवाक्यसमुदाये, * य पृथिवी न वेद, यमापो न विदु, यमात्मा न वेद * इत्याम्नातमिहानुसधेयम्। व्याप्यपदार्थैरविदितस्सन् अन्तर्बहिश्च सर्वं व्याप्य वर्तते इत्युक्त भवति।

[शुडर्मिहु शुरुदियुळ् उळन्] अर्थापत्त्यनुमानादिभि प्रमाणान्तरे पर ब्रह्म साधयन्त परे * तर्काप्रतिष्ठानादित्यादिब्रह्मसूत्रनिरस्ता भवन्ति। प्रमाणमूर्धन्यश्रुत्येकसमधिगम्य पर ब्रह्मेत्यभ्युपगच्छता परमवैदिकानामग्रेसरोऽयं मुनिवर इति ध्येयम्। केवल श्रुत्यामित्युक्ति, अपौरुषेयत्वनित्यत्वनिरवद्यत्व अविच्छिन्नपरम्पराप्राप्तत्वादिविशेषद्योतनार्थमिति भाव्यम्। अत एव हि वेदस्य प्रमाणमूर्धन्यता।

[इवैयुण्डशुरने] सृष्टिस्थित्योर्भगवदधीनत्व पुरस्तादेवोक्तम्, सहृतिरपि तदधीनेति अत्रोक्त वेदितव्यम्॥ (७)

(गाथा) शुररिवरुनिलै विण्मुदल् मुऴुवदुम् * वरन् मुदलायवै मुऴुदुण्ड परपरन् *
पुरमोरु मून्ररिंदु अमरर्कुमरिवियन्दु * अरनयनेन उलहळित्तमैदुळने॥ ८॥

ब्रह्मादिदेवानामपि दुरवबोधस्थितिकस्य मूलप्रकृत्यादिसमस्तपदार्थवर्गस्य असहायहेतुर्भूत्वा तत्सर्वं प्रलये सहृतवान् परात्पर (सर्वेश्वर) रुद्ररूपधरो भूत्वा त्रिपुरसहारकर्ता, (अन्तत) लोकसहार च कुर्वाण ब्रह्मसज्ञको भूत्वा देवेभ्यो ज्ञानप्रदाता लोकसृष्टिकर्ता च सन् विराजते॥

* * * कृत्स्नप्रपञ्चाना निरपेक्षकारणभूतो भगवानेव चतुर्मुखान्तर्यामी सन् सृष्ट्यादिनिर्वाहक, रुद्रान्तर्यामी सन् त्रिपुरदहनादिनिर्वाहकश्च भवतीति प्रतिपादनमुखेन विधिरुद्रयो परमशङ्कानिवारणपूर्वकमवरत्व तयोर्द्वयनि गाथयाऽनया मुनिवर।

मूले प्रथमपादे आकाशार्थको (विण्) शब्दो योऽस्ति, स तावदिह वदान्तप्रक्रियया मूलप्रकृतिमाचष्ट इति पूर्वाचार्या आशेरते। गार्गिविद्याया * कस्मिन्नु खल्वाकाश ओतश्च प्रोतश्च * इत्यत्राकाशशब्दार्थो मूलप्रकृतिरिति * अक्षरमम्बरान्तधृतेरिति सूत्रभाष्ये निर्णीतम्। द्राविड्याम् आकाशवाचिनो विण्शब्दस्यापि तादृशार्थकत्वमुपपद्यत इति, उभयोरपि वेदान्तयोरैककण्ठ्यान्नात्र विप्रतिपत्ति कार्या। आकाशवाचकत्वमात्राङ्गीकारेऽपि कार्यवाचिशब्द कारणेऽपि वर्तत इति ग्राह्यम्। मूलप्रकृते स्वरूपस्वभावादिक देवा अपि न जानन्तीति प्रथमपादतात्पर्यम्। तादृशप्रकृतिमूलकाना सर्वेषामपि कार्यवर्गाणा वरिष्ठो हेतुर्भगवानेवेति कथ्यते। लोके कार्यसामान्य प्रति त्रिविधकारणमपेक्षितम्। घटजनने मृदुपादानकारणम्, दण्डचक्रादि सहकारिकारणम्, कुलालो निमित्तकारणम्। पटजनने तन्तुरुपादानकारणम्, तुरीवेमादि सहकारिकारणम्। तन्तुवायो निमित्तकारणम्। एवं

सर्वत्र द्रष्टव्यम् । इत्थं त्रिविधकारणमन्तरा कार्यानुपपत्तिदर्शनेन प्रपञ्चरूपकार्यस्यापि एवं त्रिविधकारणसद्भावा-वश्यकता मन्वानाः सर्वेश्वरस्य निमित्तकारणतामात्रं स्वीकृत्य, उपादानकारणं सहकारिकारणं च किमन्यदिति पृच्छन्ति । वेदान्तिनस्तु सर्वेश्वर एव त्रिविधकारणमपीत्युशन्ति ।

* पुरिमपद्दाणसरीरो भुवणाणं होसि अच्चुअ उवायाणम् ।
णिअसंकप्पमणाहो वहसि णिमित्तत्तणं वि अब्भुअसत्ती ॥

(छाया.) पुरुषप्रधानशरीरो भुवनानां भवस्यच्युतोपादानम् ।
निजसंकल्पसनाथो वहसि निमित्तत्वमप्यद्भुतशक्तिः ॥ *

इत्यच्युतशतकश्लोकस्तत्सिद्धान्तसन्धेयम् । गाथायां तृतीयपादोपक्रमे प्रयुक्तं वरिष्ठत्वरूपं कारणविशेषणम् एतदेव कथयति । एकास्मिन् सर्वस्यैव त्रिविधकारणत्वमेव वरिष्ठत्वमिति वेदितव्यम् ।

[अरं मुलुदुण्ड परपरन्] * यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः, मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः * इत्याम्नातरीत्या * अत्ता चराचरग्रहणादितिसूत्रसिद्धान्तरीत्या च सकलसंहारकश्च स एव परमः पुमान् । तृतीयपादे [पुरमोरु मून्नेरित्तु] इत्यनेन त्रिपुरदाहकत्वमपि परमपुरुषस्यैवेत्युच्यते । हन्त ! कथमिदं संघटते ? इतिहासपुराणादिषु रुद्रस्यैव हि त्रिपुरदाहकत्वं पठ्यत इति केचिदाशङ्केरन् । महाभारते कर्णपर्वणि— * विष्णुरात्मा भगवतो भवस्यामिततेजसः । तस्माद्धनुर्ज्यासंस्पर्शं स विषेहे महेश्वरः ॥ * इति सुस्पष्टमुक्तम् । अमिततेजसोऽपि रुद्रस्य त्रिपुरदहनकाले विष्णुर्विशिष्य आत्मा बभूव, तस्मादेव स कार्यकुशलोऽभूदिति वस्तु-स्थितिः प्रतिपादिता । तैत्तिरीययजुष्यपि षष्ठकाण्डे द्वितीयप्रपाठके * तेषामसुराणां तिस्रः पुरः आसन् * इत्युपक्रम्य त्रिपुरसंहारकथा आम्नाता । तत्र च, * विष्णुं तेजनम् * इत्युक्तम् । तथाच विष्णोरेव तेजसा त्रिपुरदहनकार्यं रुद्रेण सपादितमिति प्रमाणगणप्रतिपन्नं एतार्थं इह मुनिवरेण प्रत्यपादीति प्रतिपत्तव्यम् ।

अथ विरिञ्चस्य कृत्यमपि भगवदधीनमेवेति प्रतिपाद्यते [अमरर्कुमरिवियन्दु] इत्यनेन । चतुर्मुखो देवानां ज्ञानमदिशदिति काचन प्रथा वर्तते । अत्रापि कृते विमर्शे श्वेताश्वतरोपनिषदि * यो ब्रह्माणं विदधाति पूर्वं यो वै वेदांश्च प्रहिणोति तस्मै * इत्याम्नानात् भगवानेव ब्रह्माणं निजनाभीकमले समुत्पाद्य तस्मै वेदानप्युपा-दिशदित्यवगमात् वेधसस्स्वतन्त्रकृत्यं न किमपीत्यवधार्यते । * एतौ द्वौ विबुधश्रेष्ठौ प्रसादक्रोधजौ स्मृतौ । तदादर्शितपन्थानौ सृष्टिसंहारकारकौ ॥ * इति मोक्षधर्मप्रमाणच्छायैव गाथेयमनुगृहीता मुनिवरेणेति सुगमम् । * यस्य प्रसादादहमच्युतस्य भूतः प्रजासृष्टिकरोऽन्तकारी । क्रोधाच्च रुद्रः स्थितिहेतुभूतो यस्माच्च मध्ये पुरुषः परस्मात् ॥ * इत्यादीनि बहूनि प्रमाणानि षट्सहस्रिकायामुपात्तान्यत्रानुसन्धेयानि । तथाच "श्रुतिप्रसिद्धस्सर्वेश्वरः जगत्सृष्टिक्षमत्वेन प्रसिद्धो ब्रह्मा स्यात्, जगत्संहारक्षमत्वेन प्रसिद्धो रुद्रस्स्या"दिति कथयन्त कुदृष्टयो गाथयाऽनया निरस्ता वेदितव्या ॥ .... .... .... ... .... (८)

(गाथा.) ऊळनेनिलुळन् अवनुरुवमिव्वुरुवुहळ् * उळनलनेनिल् अवनरुवमिव्वरुवुहळ् *
उळनेन विलनेन इवैगुणमुडैमैयिन् * उळनिरुतहैमैयोडु ओळिविलन् परन्दे ॥ ९ ॥

(ईश्वरः) अस्तीति चेदुच्येत, ईश्वरोऽस्त्येव; (ईश्वरे सिद्धे सति) परिदृश्यमानानि सर्वाण्यपि स्थूलवस्तूनि भगवतः स्थूलशरीराणीति सिध्यति। (ईश्वरो) नास्तीत्युक्तेऽपि ईश्वरसत्तैव सिद्धा भवति; (तदानीम्) सर्वाण्यपि सूक्ष्मवस्तूनि भगवतस्सूक्ष्मशरीरभूतानीति सिध्येत्। (तथाच) अस्तित्वनास्तित्वरूपेण धर्मद्वययोगे वर्ण्यमाने स्थूलप्रपञ्चशरीरकतया, सूक्ष्मप्रपञ्चशरीरकतया च सिद्धसत्ताको भगवान्; सिध्यन् स भगवान् सर्वान्तरात्मा सन् सिध्यति ॥

* * * गाथयाऽनया सर्वशून्यवादी निरस्यते। अधस्तादष्टाभिर्गाथाभिस्संपन्नोऽनुभवो भगवतस्सद्भावमवधार्य प्रवृत्तः। यस्तुतो भगवानिति कस्यचिद्वस्तुनस्सद्भावे खलु तदनुभव उपपद्यते। भगवानेव नास्तीति वदतां वादे बलवति सति तत्प्रत्याख्यानमकृत्वा भगवदनुभवोपबृंहणेन किं फलमिति केचिन्मन्येरन्निति निरीश्वरवादनिरसननिपुणामिमां गाथामवतारयति मुनिवरः। सैषा गाथा सर्वशून्यवादप्रत्याख्यानपरेति पूर्वाचार्या व्याचक्षते। गाथागतानां वचनसंदर्भाणां परामर्शे तु निरीश्वरवादप्रत्याख्यानमेव प्रतीयते। तत्कथं सर्वशून्यवादप्रत्याख्यानपरतामाचार्या आचक्षते इति चेदवधेयम्। वस्तुतस्सर्वशून्यवाद एव निरस्यतेऽत्र। सर्वं शून्यमिति वादे ईश्वरस्य शून्यताऽप्यन्तर्भवति खलु। तत्प्रत्याख्यानेन ईश्वरसद्भावः प्रतिष्ठापितश्चेत् तदा सिध्यन्नीश्वरः स्वविभूतिभूतसकलप्रपञ्चैस्सहैव सिध्येदिति कृत्वा निरीश्वरवादनिरासवैयग्र्यं केवलं मुनिवरेण स्पष्टीकृतेति बोध्यम्। कञ्चन पुमांसमधिकृत्य अयमस्ति वा न वेति विवादस्संवृत्त इति गृह्यताम्। नास्तीति कश्चिदाह; अस्तीत्यपर आह। अथ प्रवृत्ते विचारे नास्तीतिवादभञ्जनेन अस्तित्वं साधितमित्यपि गृह्यताम्। तदा सिध्यन् पुमान् चक्षुश्श्रोत्रजिह्वाघ्राणाद्यवयवसंघातसमन्वित एव खलु सिध्येत्। एवमेव भगवान् परमः पुमान् अस्ति न वेति विवादे, नास्तीति वादे खण्डिते, अस्तीतिवादे च सत्यूर्जिते, सिध्यतस्तस्य स्वशरीरभूतसर्ववस्तुसमेतस्यैव सिद्धिरव्याहता खलु। तथा च भगवतस्सद्भावं साधयन्ती सैषा गाथा सकलवस्तुसद्भावसाधनप्रवणा संपन्ना। तेन च सर्वशून्यवादखण्डनपरत्वव्याख्यानमाचार्याणामनवद्यमिति निष्पन्नम्।

जगदिदं चिदचिदीश्वराख्यतत्त्वत्रयसंघातात्मकमस्ति। चेतनवस्तुभिरचेतनवस्तुभिस्तदधीश्वरेण चापूरितमिदं जगत् नास्तीति वदति स सर्वशून्यवादी। अस्य खण्डने प्रवृत्तो मुनिवरः ईश्वरस्यैकस्य सद्भावसाधनमात्रेण स्वस्य कृतकृत्यतामममिमेने। ईश्वरसद्भावं स्थापयितुं बहवश्शास्त्रान्वेषणप्रयासमनुभवेयुः। यद्यपि समुचित एव स पन्थाः, तथाऽपि शास्त्रमप्यसदिति वदतः पामरान् शास्त्रेण निरस्याम इति कथनं न चारु। वादिनो वाचमेवावलम्ब्य वादिनः प्रत्याख्यानमिति सुशोभनः पन्था अत्रादियते।

भगवानस्तीति कश्चिदाह चेत्, अनेन वचसा भगवतस्सद्भावस्साध्यत इति विद्मः। एवम्, भगवान्नास्तीति कश्चिदाह चेत्, अनेन वचसा भगवतोऽसद्भावस्साध्यत इति च। नैषा तु वस्तुस्थितिः। भगवानस्तीति वचसः,

भगवान्नास्तीति वचनमथ वस्तुतस्समानार्थकमेव सेत्स्यति । अस्तीतिवचसा यथा सद्भावस्सिध्यति, तथा नास्तीति वाचाऽपि सद्भाव एव सिध्यतीति शपथं करोति मुनिवर । अस्तिनास्तिवचसो पर्यायप्रायतामेव प्रतिजानीते मुनिवर । स एष विषयो मितमतीना विष मैत्राविरोहेतु । उपपादयाम , अवधत्त ।

घटो नास्ति, पटो नास्तीति कश्चिदुवाचेति गृह्यताम् । वचनाऽनेन घटपटयोरभावोऽवबोधितो भवतीति मन्यध्वे । वस्तुतस्तु नावबोध्येत । तयोस्सद्भाव एव बोध्येत । कथमिति चेत्, प्रकारद्वयेन सद्भावस्सिध्येत् । प्रकारद्वयमपि निरूपयाम । चैत्रो मैत्रसकाश गत्वा घटं देहीति याचते, देवदत्तो यज्ञदत्तसकाश गत्वा पटं देहीति याचते । उभावपि नेत्यवोचताम् । एतेन, मैत्र स्वसकाशे घटो नास्तीत्युक्तवान्, यज्ञदत्तश्च स्वसकाशे पटो नास्तीत्युक्तवान् इत्येव खलु ज्ञायेत । घटो वा पटो वा जगत्येव नास्तीति ताभ्यामुक्तमिति तु नैव प्रतीयेत । नास्तीतिशब्द अत्र नास्ति, इदानीं नास्ति, मत्सविधे नास्ति इत्येव स्वार्थबोध जनयेत् । सर्वथाऽपि नास्तीत्यर्थ-प्रतीतिरनुभवविरुद्धा । अत्र नास्तीत्युक्ते अन्यत्रास्तित्व सिद्धमेव । इदानीं नास्तीत्युक्ते कालान्तरेऽस्तित्व सिद्धमेव । स्वसकाशे नास्तीत्यनेन पुरुषान्तरसकाशेऽस्तित्व सिद्धमेव । तथा च नास्तीति शब्देन अस्तित्वमेव सिद्धमिति प्रदर्शितमभूत् । अयमेक प्रकार । अथ प्रकारान्तर च निरूपयाम ।

क्वचिदेको घट आसीत् । स च भग्नोऽभूत् । तदा घटो नास्तीति व्यवहार उत्पद्यते । एव पटादि-तत्तद्वस्तुविषयकव्यवहारा अप्युत्पद्यन्त इति गृह्यताम् । एतादृशस्थलेष्वपि वस्तुनस्सर्वथाऽप्यभावो नैव सिध्येत् । घटो नेत्युक्ते कम्बुग्रीवादिमत्स्वरूप-आकारविशेषविशिष्ट वस्तु नास्तीत्येव कथित स्यात् । घटे हि भग्ने शकलानि दृश्यन्त एव । पटे च शिथिले तन्तवो दृश्यन्त एव । शकलानामपि तन्तूनामपि च विनाशे सूक्ष्मावयवा अवश्य-मेव स्यु । तथा च स्थूलाकारविरहेऽपि सूक्ष्माकारसत्ता नैव निह्नवार्हा भवेत् । (सिद्धान्ते) उत्पत्तिविनाशशब्दयो-रर्थोऽयमेव । नवीनतया न किमपि वस्तु जायेत । तथा वस्तुन आत्यन्तिको विनाशश्च न भवेत् । सूक्ष्माकार विहाय स्थूलाकारप्राप्तिरेवोत्पत्ति , स्थूलाकार विहाय सूक्ष्माकारप्राप्तिरेव च विनाश ।

अथ प्रकृतगाथायामवतराम । यत्किमपि वस्तु निर्दिश्य इद नास्तीत्युक्ते, तदर्थो द्वेधा सिध्येत्प्राङ्-निरूपितदिशा । (१) अत्र नास्ति, इदानीं नास्तीति सिध्येत् । अथवा (२) स्थूलाकारेण नास्ति सूक्ष्मा-कारेणास्तीति सिध्येत् । उभयथाऽपि वादिनस्सिषाधयिषिता सर्वशून्यता वा भगवतो नास्तिता वा नैव सेद्धु-मलम् । भगवानस्तीत्युक्ते स्थूलचिदचिद्विशिष्टस्य ब्रह्मणस्सत्ता गम्यते । भगवान्नास्तीत्युक्ते सूक्ष्मचिदचिद्विशिष्टस्य तस्यैव सत्ता गम्यते । आत्यन्तिकी असत्ता तु न मनागपि कथचिदपि । तथाच ईश्वरोऽस्ति, ईश्वरो नास्ती-त्युभयोरपि वचसो ईश्वरसत्तायामेव एव विश्रान्तता परिनिष्पन्ना । सर्वमस्तीति प्रतिज्ञया यत्सिध्यति, तदेव सर्वं नास्तीति प्रतिज्ञयाऽपि सिध्यतीति सुदृढमिद प्रतिपत्तव्यम् ।

शारीरकमीमांसाया द्वितीयाध्यायद्वितीयपादे * सर्वथाऽनुपपत्तेश्चेति सूत्रम् इतरभाष्यकारैरनिसक्षेपतो व्याख्यातम् । सूत्रकारविवक्षितोऽर्थो न मनागपि तत्र निर्गलित इति स्पष्ट विदुषाम् । भगवद्रामानुजभाष्य तु विद्वद्भिरवश्य विमर्शनीयम् । तत्रत्यसूक्तिवनिरेतद्गाथाविमर्शमयी । अत एव तस्यास्सूत्रकारहृदतार्थप्रकाशनपटुतेति अधुना निरूप्यते । श्रीभाष्यसूक्तिरेषा—किं भवान् सर्वं सदिति प्रतिजानीते? (तथा सति) तवाभिप्रेत तुच्छत्व

न सम्भवति । किं भवान् असदिति प्रतिजानीते ? (तदाऽपि) तुच्छत्वं न सम्भवति ? शून्यमिति प्रतिजानता सदिति प्रतिजानतेव सतस्य विद्यमानस्य अवस्थाविशेषयोगितैव प्रतिज्ञाता भवतीति तुच्छता न कुतश्चिदपि सिध्यतीति ।

अत्र, "किं भवान् सर्वं सदिति प्रतिजानाते ? तथा सति तवाभिप्रेतं तुच्छत्वं न सम्भवती"त्येतद्वाक्यम् एतद्गाथाप्रथमपादस्यैव रूपान्तरमिति निस्सन्देहम् । अथ च, "किं भवान् असदिति प्रतिजानाते ?" इत्यादिकस्सूक्तिशेषस्तु द्वितीयादिपादत्रयस्य स्वच्छविवरणरूप । इति सर्वमवदातम् ॥ (९)

(गाथा) परन्दतण् परवैयुळ् नीर्तोरुम् परन्दुळन् * परन्दवण्डमिदेन निलविशुम्बोलिवर *
करन्द शिलिडन्तोरुम् इडन्तिहळ् पोरुडोरुम् * करन्देङ्गुम् परन्दुळन् इवैयुण्डकरने ॥ १० ॥

विस्तृतशिशिरजलनिधौ जलकणिकासु सर्वास्वपि अतिविशालब्रह्माण्डमण्डले यथा तथा (व्यक्तिषु जातिवत्) परिसमाप्तवृत्तिकः, भूम्यामन्तरिक्षे च विच्छेदमन्तरेण अतिसूक्ष्म अत्यल्पस्थलेषु सर्वेषु तत्तद्देशवर्तिषु सर्वात्मस्वपि परैरविदिततया अन्तर्व्याप्य बहिश्च व्याप्य वर्तते (क इति चेत्) प्रलयकाले सर्वस्य चास्य प्रपञ्चस्य अत्ता भगवान् य, स एव ॥

* * * भगवतस्सर्ववस्तुषु पूर्णत्वमुच्यते गाथयाऽनया । परात्परस्य इदमपि लक्षणं खलु । समुद्रजलपरमाणुषु, पृथिव्यन्तरिक्षादिलोकान्तर्वर्तिष्वतिसूक्ष्मेष्वचिद्वस्तुषु च व्याप्य, तदन्तः प्रकाशमानेषु चिद्वस्तुषु च सुमहत्स्वण्डमण्डले इव आयासलेशमन्तरेण असङ्कुचितवृत्तिकः, जगत्संहर्ता च सुदृढप्रमाणसिद्धो यो भगवान्, तस्य पादारविन्दयुग्मं प्रणम भो हृदय ! इति प्रथमगाथया सह योजना चारुतरेति हृदयमाचार्याणाम् ।

अत्रेदमवधेयम् । उपनिषत्सु * अन्तर्बहिश्च तत्सर्वं व्याप्य नारायण स्थित * इत्युक्ता व्याप्तिरेव गाथायामस्यामवगाहि । उदाहृतश्रुतिवाक्ये 'सर्वम् अन्तर्बहिश्च व्याप्य स्थित ' इति पदेषु प्रत्येकशो दृष्टिर्निधेया । पदार्थवर्गेषु एकमप्यवर्जयित्वा सर्वेषु च व्याप्ति, अन्तश्च व्याप्ति, बहिश्च व्याप्ति भगवतोऽत्र कथिता । अणुपदार्थेषु अन्तर्व्याप्तिर्न सम्भवितुमलमिति परे प्रत्यवतिष्ठन्ते । सावयवानामेव पदार्थानामन्तर्देशबहिर्देशव्यवहारप्रसक्ति । निरवयवानामणुपदार्थानां तादृशव्यवहारप्रसक्तिविरहेण भगवतस्तेष्वन्तर्व्याप्तिर्न सुवचा । किंच, नैकस्मिन्नपि वस्तुनि भगवत परिसमाप्य वर्तमानता स्वीकर्तुं शक्या । यद्येकस्मिन्नेव वस्तुनि तस्य स्वरूपं परिसमाप्तं स्यात्तर्हि वस्त्वन्तरे व्याप्तेरवकाश एव नास्ति । तथाच परिसमाप्यव्याप्तिकथनमसङ्गतम् । इत्येतत् परकीयं वादद्वयमपि गाथयाऽनया सुष्ठु प्रत्याख्यायते इति द्रष्टव्यम् ।

अत्र किंचिद्विविच्यते । शारीरकमीमांसायां * कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वेति पूर्वपक्षसूत्रम् । अथ सिद्धान्तसूत्रम् * श्रुतेस्तु शब्दमूलत्वादिति । शास्त्रप्रतिपन्नेष्वर्थेषु कुतर्कमूलकचोद्यपरिकल्पनां विहाय शास्त्रोक्तोऽर्थस्साम्प्रतमेव स्वीकर्तव्य इति नावच्छिनत्ति सिद्धान्तसूत्रमिदम् । * अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्थित * इति श्रुतिस्तावत्सुस्पष्टमाचष्टे व्याप्तिम् । "एकैकस्मिन् जन्तुपरमाणौ अतिविशालब्रह्माण्ड इव व्यक्तिषु जातिवत् पर्याप्तवृत्ति" इति दशोपनिषद्भाष्यकारसूक्तिश्च जागर्ति । श्रीमान् वरदनायार्योऽपि याव-

सिद्धाञ्जने ईश्वरपरिच्छेदे परिसमाप्यवृत्तित्वेनयक्रमाक्षेपमुपक्षिप्य * श्रुतेस्तु शब्दमूलत्वादिति अन्नमूत्रमेव प्रदर्श्य "यथागम सर्वत्र पूर्ण एव भगवान्" इत्युपमजहार। वेदार्थसङ्ग्रहव्याख्यायां तात्पर्यदीपिकायां च "निरंशे प्रति-प्रदार्थं पूर्णवर्तित्वेऽपि स्वरूपे अशशब्दव्यवहार एकस्मिन्नेव वस्तुनि स्वरूपस्य पूर्णवर्तितया अन्यत्र वृत्त्ययोग्यत्व-शङ्काव्युदासार्थं" इत्येषा दिव्यसूक्तिरुल्लसति। परिसमाप्यवृत्तित्वविषये पर्यनुयोग क्रियते, तदेव ह्युपक्षिप्य निरस्त श्रुतप्रकाशिकाचार्यै। "अन्यत्र वृत्त्ययोग्यत्वशङ्काव्युदासार्थ" इति सूक्त्याऽनया किं प्रतिपाद्यत इति हन्त परे नावधत्ते। एकस्मिन्नेव वस्तुनि भगवत्स्वरूपं पूर्णवर्ति चेत् तदन्यत्र कथ स्यात् शक्त्यादिति शङ्का निरस्ताऽभूदिति खलु कथितमिह। निरस्तत्वेन निर्धारितायास्तस्या एव शङ्काया पुन पुनरुत्थापका कथमिव भगवद्रामानुजसिद्धान्तपथानुवर्तिनो भवितुमर्हन्ति? "एकत्र समासक्तस्वरूपस्य अन्यत्र वृत्तियोग्यत्ववादो व्युदस्यते" इति श्रीसूक्तिशैलीस्वरसे परेषा चोद्य प्राण्यात्। न तथा खलु दृश्यते श्रीसूक्ति।

जिज्ञासाधिकरणश्रुतप्रकाशिकायां च, * "य आत्मनि तिष्ठन्नित्युक्ते वेधामग्निरिव तिष्ठति, तिले तैलं तिष्ठतीतिवत् बहिरवहिश्चेत्यनिमाप्रारण्यात् तद्वैशद्यार्थमाह— * आत्मनोऽन्तर इति" इत्येषा सूक्तिर्विलसति। एतया स्फुटीकृता ननु अणावात्मनि भगवतोऽन्तर्व्याप्ति। सहस्रनामाध्याये * अणुर्बृहत् कृशस्स्थूल * इत्यत्र अणुपद व्याचक्षाणा भट्टपादा, "अतिसूक्ष्मदहराकाशाव्यक्तजीवानुप्रवेशसामर्थ्यात् अणु:" इत्यनुजगृहु। तथाच अणुपदार्थेऽप्यन्तर्व्याप्ति, प्रतिवस्तु परिसमाप्यवर्तन चेत्युभयमपि भगवद्रामानुजसम्प्रदायस्थसकलपूर्वाचार्य-सम्मतमिति, विषयद्वये ऽस्मिन् कुचोद्यानामुत्थापनम् अर्वाचीनानामेव केषाञ्चित्कृत्यमिति च निर्धारणीय भवति। अन्तत इदमेक सारमुपहराम। भगवान् रामानुजो वेदान्तदीपे—"यथा जातिवादिनो जातिरेकैव अमूर्ताखण्ड-मुण्डादिषु अत्यन्तविलक्षणे ष्वनन्तेष्वपि परिसमाप्यैव वर्तते, न तत्र इतरवस्तुचोद्यमिति" इत्यनुगृहीतवानिति प्रसिद्धमेतत्। 'जाति प्रतिव्यक्ति परिसमाप्य वर्तते' इत्युक्ते ओमित्यङ्गीकुर्वन्ति। सकलवस्तुविलक्षण शास्त्रैक-वेद्यम् अचिन्त्यापरिमेयाद्भुतशक्तियुक्त पर ब्रह्म प्रतिपदार्थं परिसमाप्य वर्तत इत्युक्ते महत्तर चोद्यमुपक्षिपन्ति हन्त!' इत्याचार्या एव स्वयं विस्मयन्ते विषीदन्ति च॥ अस्मदीय-अन्तर्व्याप्तिपरिष्कियादिग्रन्थेषु विस्तरो द्रष्टव्य इति विरम्यते॥ ... ... . (१०)

(गाथा) करविशुम्बेरि वळि नीर्निलमिवै मिशै * परनविळ् तिरळ्वलि अळिपोरैयाय् निन्र *
परनडिमेल् कुरुहूर्च्चडहोपन् शोल् * निरैनिरैयायिरत्तु इवै पत्तुम् वीडे॥ ११॥

द्युआकाशतेजोवायुजल पृथिवी-समवेतानां श्रेष्ठशब्द, दहनसामर्थ्य, बल, शैत्य, क्षमागुणानां निर्वाहकस्य परमपुरुषस्य दिव्यपादविषये कुरुकापुरावतीर्णे श्री शठकोपमुनिना विज्ञापिते शब्दार्थपुष्कलगाथासहस्रे एतद्दशकम् मोक्षप्रदम्॥

* * * सहस्रगीत्यामस्यां प्रतिदशक च अन्ते फलश्रुतिगाथा निबध्यते। आप्तोक्तत्वप्रत्ययाय स्वनामनिर्देश क्रियत इति वेदितव्यम्। श्रीमद्योगिप्रभृति-श्रीभक्तिसारमुनी पर्यन्ताश्चत्वार, श्रीपाणसूरिश्चेति पञ्चैते दिव्य-सूरय एव फलश्रुतिगाथां नानुजगृहु। श्रीशठकोप मधुरकवि-कुलशेखर-भट्टनाथ-गोदा-भक्ताङ्घ्रिरेणु-पर-

कालमुनीन्द्रास्तु फलश्रुतिगाथाप्रणेतारश्च। अनन्यप्रयोजना उत्तमाधिकारिणो न किमपि फलं कामयेरन्निति स्थिते परमैकान्तिनो दिव्यसूरयः किमर्थं फलश्रुतिं निबध्नन्तीति नाशङ्कनीयम्, भगवान् भक्तानां सकलफलप्रद इति तत्प्रभावप्रख्यापने पर्यवसानमस्य बोध्यम्। फलविशेषलिप्सया केचित् प्रबन्धेऽस्मिन् प्रवणा भवेयुरित्यपि अभिसन्धिस्स्यादिव। स्वकृतिविषयभूतः परमपुरुषः पादद्वयेन विशेष्यते। पञ्चभूतगुणपञ्चकस्य नियामकस्स इत्युक्तं भवति। प्रथमपादे निर्दिष्टानां पञ्चानां भूतानां गुणाः क्रमेण द्वितीयपादे निर्दिश्यन्ते। आकाशस्य गुणश्शब्दः, तेजसो गुणो दहनशक्तिः, वायोर्गुणो बलम्, जलस्य गुणश्शैत्यम्, पृथिव्या गुणः क्षमा। एवंविधगुणपञ्चकस्वरूपः परमपुरुष इति सामानाधिकरण्येन कथनं निर्वाह्यनिर्वाहकभावनिबन्धनम्। भूतानीव भूतानां गुणा अपि परमपुरुषायत्ता इत्युक्तं भवति।

प्रथमदशकस्यास्यैवावसाने सहस्रगाथाप्रस्तावः सहस्रगाथाविज्ञापनसङ्कल्पवत्तां स्वस्य कथयतीति न मन्तव्यम्। यतो हि तादृशेन सङ्कल्पेन नोपचक्रमे मुनिवरः। अपि तु स्वानुबुभूषितस्य भगवतः स्वरूपरूपगुणविभूतिचेष्टितानामानन्त्येन सहस्रं गाथा अवतरेयुरिति ज्ञानदशा समीक्ष्य समुदीरितमिति प्रतिपत्तव्यम्॥(११)

---

॥ श्रीरस्तु ॥

# ॥ द्रमिडोपनिषत्सङ्गतिप्रबन्धः ॥

[श्रीमद्वरवरमुनीन्द्रचरणारविन्दसमाश्रितपरम्परायामवतीर्णेन, प्रायस्त्रिशतसंवत्सरतः पूर्वं स्थितेन, श्रीकाञ्ची वरदाधिराजभगवन्मन्दिरप्राच्यगोपुरसन्निहितमठस्थापकेन, श्रीकाञ्च्यां नानाविधात्युत्तमकैङ्कर्यनिर्वाहकतया प्रसिद्धेन च वादिकेसरि-सुन्दरजामातृयतिवरेण प्रणीतोऽयं प्रबन्धः एकैकदशकसारार्थसंग्राहकः।]

— तत्र उपोद्धातः —

यश्चकार सकलार्थसम्पदां व्यञ्जनीं द्रविडवेदसंगतिम्।
तं द्वितीयशठकोपमन्वहं स्तौमि सुन्दरवराह्वयं मुनिम्॥

आचार्योदितपद्धत्या द्राविडाम्नायसंगतिम्। अभिधास्ये विशेषज्ञैरादराद्गृह्यतामियम्॥

श्रीमान् गुणाम्बुधिरवाप्तसमस्तकामः शौरिः शठारिमनुजन्म परिभ्रमन्तम्।
आकस्मिकेक्षणवशादतिनित्यमुक्तं वृन्दातृणीकरणशक्तिधरश्चकार॥

आद्ये वयस्यपि ततोऽनुभवन्मुरारिम् अस्तन्यपानरसिकः शठजिन्मुनीन्द्रः।
आस्थाय मौनमनधीत्य च लोकवृत्तम् आषोडशाब्दमतिवाहितवान् दिनानि॥

ये राघवे भरतलक्ष्मणजानकीनाम् ये गोपगुम्भमुदृशामपि नन्दसूनौ।
भावा रसं वपुषः प्रथिताः शठारिस्तानेव वा तदधिकानुत तत्र लेभे॥

प्रह्लादनारदमुखप्रभवा च भक्तिः स्नेहस्तथा दशरथार्जुनबान्धवोत्थः ।
सर्वे च ते शठजितः पुरुषे परस्मिन् आनन्दने पदयुगमतिमात्रमासन् ॥

इत्थं हरेरनुभवामृतवारिराशिः अन्तर्मुनेः शठरिपोरमितश्शरीरे ।
सूक्त्या बहिः परिवहन् सुतरां जगन्ति सद्यस्सिषेच घनसंसरणानलानि ॥

मातापितृप्रभृतितोऽपि च वत्सलत्वात् सर्वोपकारचपलाच्छठजिन्मुनीन्द्रात् ।
वेदश्चतुर्विधतया विदितस्स साक्षादाविर्बभूव हि निबन्धचतुष्टयात्मा ॥

शब्दस्य संस्कृततया यदि गौरवं स्यात् बौद्धादिशास्त्रवचसामपि तत्प्रसङ्गः ।
वाच्येन चेत्कथितमुत्तमवाच्यमेषु भाषानिकर्ष इह तेन न शक्यशङ्कः ॥

पुंस्त्वं नियम्य पुरुषोत्तमताविशिष्टे स्त्रीप्रायभावकथनाज्जगतोऽखिलस्य ।
पुंसां च रञ्जकवपुर्गुणवत्तयाऽपि शौरेः, शठारियमिनोऽजनि कामिनीत्वम् ॥

या प्रीतिरस्ति विषयेष्वविवेकभाजां सैवाच्युते भवति भक्तिपदाभिधेया ।
भक्तिस्तु काम इह तत्कमनीयरूपे तस्मान्मुनेरजनि कामुकवाक्यभङ्गी ॥

यश्चैतसैव विशदानुभवः परस्मिन् संश्लेष एव गुणरत्नमहाम्बुराशौ ।
विच्छित्तिरस्य विरहस्त्विह याऽङ्गसङ्गालाभन्यथा विरचिता मुनिपुंगवस्य ॥

तत्राऽऽर्थपञ्चकगमं प्रथमे प्रबन्धे शौरेर्गुणं शठजिदन्वभवद् द्वितीये ।
तृष्णामवर्धयत भोक्तुमिमं तृतीये यावन्मनोरथमलब्ध फलं चतुर्थे ॥

कैङ्कर्यमस्य नियमावधिवैर्युपायतत्स्वीक्रियाः विषयबाधनिराशते च ।
शीलं हरेरधिगताधिगमं शठारिस्तुर्यप्रबन्धशतकैर्दशभिर्जगाद ॥

—. प्रथमदशकसारार्थसग्रहश्लोक एष :—

तत्रादिमे तु शतके दशके तदाद्ये सम्यग्गुणाकृतिविभूतिसमेतमीशम् ।
अध्यक्षयन्परमनुग्रहतस्तदीयात्तद्दास्ययोजितमनाः शठजिद्बभूव ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ॥ अथ द्वितीयं दशकम्—वीडुमिन्मुत्तवुम् ॥

व्याख्यानावतारिका ॥ परोपदेशे प्रवर्तते मुनिवरोऽस्मिन् दशके । अधस्तनदशके संपन्नो भगवत्परत्वानुभवो विलक्षणमहोत्सवानुभवनिर्विशेषो ह्यासीन्मुनिवरस्य । तथा नाम परमं पुमांसमनुभूतवान्मुनिवरः तत्तादृशात्स्वानुभवादुपरतस्सन् परोपदेशे प्रवर्तते इतीदं हन्त कथं समघटत? अनुभूतस्य विषयस्य किमहो सीमामैक्षत? उताहो अलमनुभूतेनेति विरज्यतेस्म? इति चेत्, न न; परमयोगिनामपि वाङ्मनसापरिच्छेद्यस्वरूपस्वभावो भगवानिति असकृत् स्वयमेव कथयन् मुनिवरः सीमा समदर्शीति न मनसाऽपि चिन्तयितुं शक्यम् ।

अलमनुभूतेनेति विरक्तिश्च सुतरां दुर्वचा मुनिवरस्य । यतो ह्यसौ स्वात्मानमुपरिष्टाद्वक्ष्यति * सदातनत्वेऽपि तदातनत्ववन्नवीभवत्प्रेमरसप्रग्राहकम् । * एप्पोऴुदुम् नाळ् तिङ्गळ्याण्डूऴियूऴिदोरुम् - अप्पोऴुदैक्कप्पोऴुदेन्नारावमुदमे * [२-५-४] इत्येषा गाथा मुनिवरस्य भगवदनुभवे अत्यन्तापर्याप्तिं हि दर्शयति । अनुक्षणमभ्युपचितदमितवर्धमानप्रेमसपद्भरस्यास्य मुने अलमनुभूतेनेति विरक्तिस्सर्वथाऽपि न शक्यशङ्का । कथं तर्हि परोपदेशे प्रवृत्ति? किमस्य आचार्यपदवीप्रेप्सा समजनि? इति चेत्, हा हन्त ! * नीशनेन् निरैयो-नुमिलेनित्यादिभि स्वात्मानमधमाधममसकृदनुसदधानस्यास्य साऽप्यसभविनी । उच्यते, श्रूयताम् । परोपदेशसमयेऽपि स्वानुभववैकल्यं नास्य मनागपीति प्रथमतोऽवधारणीयम् । स्वानुभवस्यैव परिपाकदशा काचिदियं परोपदेशो नाम ।

लोके महाप्रवाहेऽवगाहमानो जनस्तावदेकाकी नावतरति, अपि तु भूयसस्सधानन्विष्यतीति दृष्टमिदम् । तथा अम्भोनिधेरप्यतिशयिते भगवति विगाहनं स्वस्यैकाकिनो दुष्करमासीत् । * एकस्स्वादु न भुञ्जीत भुञ्जीत बहुभिस्सहेति कथितत्वाच्च सहयोगार्थमन्यानवैक्षत । * मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परमिति गीतोक्तरीत्या च परेषां सहयोगः काङ्क्षणीय आसीत् । * कैङ्कर्यनित्यनिरतैर्भवदेकभोगै नित्यैरनुक्षणनवीनरसार्द्रभावै । नित्याभिवाञ्छितपरस्परनीचभावै मद्दैवतै परिजनैस्तव सगसीय ॥ * [श्रीवैकुण्ठस्तवे] इत्युक्तरीत्या उत्तमाधिकारिभिस्सह सभूय अनुबुभूषुरसन् भौमेषु जनेषु कटाक्षपातमतनोत् । हन्त ! सर्वेऽपि जना अनन्तक्लेशभाजने घोरे ससारसागरे निमग्ना अन्नपानादिलिप्सापरवशा परिभ्रमन्त आसन् । भगवद्विषये स्वात्मनो रुचिरिव तेषां शब्दादिविषयान्तरेष्वतिवेलाऽभिरुचिरभिवर्धत इत्यवैक्षत । तत्तादृशैरनुभूयमानान् क्लेशांश्च न सोढुमशक्नोत् । अथ तेषां विनयने समुदपद्यत सुमहत्तरं कुतूहलं मुनिवरस्य । कथमेषां विनयन सुकरमिति विमर्शोऽप्यजनि । 'एते खलु चैतन्यशालिनो वर्तन्ते, विषयान्तरेषु असमीचीनानुपेक्ष्य समीचीनानुपाददते ह्यमी, भोज्येषु शाकशलादुकादिष्वपि सदसद्विवेचनेन असन्ति परित्यज्य सन्ति परिगृह्णन्ति खलु । एतादृशा अमी यदि परिपूर्णविवेकशक्तिं प्रयुञ्जीरन् तर्हि अनायासतो विनीता भवितार । भगवद्विषयभोग्यता विषयान्तरदुस्स्थता च यदि वयं सम्यगुपपादयेम, तर्हि स्वयं विमृश्य हेयविषयविसर्जनपूर्वकं प्राप्तविषयप्रवणा अवश्यमेव भवेयु, अतश्च किंचिदुपदिशेम' इति समालोच्य, उपादेयविषयसाद्गुण्यसमृद्धिं हेयविषयदौर्गुण्यपूर्तिं च अतिसक्षिप्ताभिरतिमधुराभिर्दिव्यसूक्तिभिरुपदेष्टुमुपक्रमते ।

ननु * परीक्ष्य लोकान् कर्मचितान् ... स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठम् * तद्विद्धि प्रणिपातेन परिप्रश्नेन सेवया । उपदेक्ष्यन्ति ते ज्ञानं ज्ञानिनस्तत्त्वदर्शिन ॥ * इत्याद्युक्तरीत्या प्रणिपाताभिवादनपरिप्रश्नसेवावैयग्र्येण चिरमनुवृत्तिशीलेभ्य आस्तिक्यामानित्वादिशिष्यलक्षणमपरेभ्यस्सञ्छिष्येभ्य चिरपरीक्षणपूर्वमपट्कर्णतयोपदेष्टव्यान् महार्थान् कथमसौ मुनिवर एवमवलीलया समुपदेष्टुमुपचक्रमे? भगवानपि विशिष्य ह्यादिशति * इदं ते नातपस्काय नाभक्ताय कदाचन । नचाशुश्रूषवे वाच्यं न च मां योऽभ्यसूयति * इति । सर्वमिदं जानन्नपि भगवान् मुनिवरोऽसौ साधारणीं प्रार्थनामपि विना कथमुपदिशति? इति चेदुच्यते । मुनिवरस्यास्य भक्तिर्यथा शास्त्रमर्यादायां नावतिष्ठते, तथा एतादृशी चर्याऽपि शास्त्रमर्यादां नैवानुवर्तते । शास्त्रविधीनवधाय उपदेष्टार अनुवृत्तिप्रसन्नाचार्या कीर्त्यन्ते । परानर्थासहिष्णुत्वभूम्ना अनुपदिश्य वर्तितुमशक्नुवाना एवंविधा उत्तमपुरुषा मृग्या एव हि भूतले । प्रह्लादो, विभीषणो, मैथिलीति कतिचिदेव व्यक्तिविशेषा ईदृग्गोष्ठ्यां गण्यन्ते । सर्वथा तानप्यतिशयानोऽसौ मुनिवर भगवन्त रामानुजार्यमेव केवल स्वसाम्ये सहते ।

उत्तमानां परोपदेशं प्रति कारणचतुष्टयमस्ति । (१) भगवता वयमुपदेशार्थमेव प्रेषिताःस्म इत्यनुसन्धानम्, (२) उपदेश्यानामभ्यर्थना, (३) अभ्यर्थनाभावेऽपि तद्दुर्दशासहिष्णुता, (४) उपदेशं विना स्वात्मधारणाशक्तता चेति । अत्र द्वितीयस्यैकस्य कारणस्य विरहेऽपि अवशिष्टकारणत्रयसत्तया अक्षतत्वेन तत्कार्यभूतोऽयमुपदेशो निरवद्यगन्ध इति निश्चेयम् । परमकारुणिकेन भगवता स्वयमुपेक्षितानपि संसारिजनानुपदेशतो विनेतुं कामयमानस्यास्य मुनिवरस्य कृपातिशयो वाचामभूमिरित्येतावदेव प्रतिपत्तव्यमास्ति नः । अत एवास्य साक्षाच्छिष्यो मधुरकविराह स्वप्रबन्धे * अरुळ् कोण्डाडुमडियवरिन्बुर......अरुळ् कण्डीरिव्वुलहिनिल् मिक्कदे * (छाया) स्वामी श्रीशठकोपसूरिरखिलां विष्णोः कृपां शंसतां भक्तानां स्वकृपाबलं प्रकटयन्........ तस्यैतस्य कृपैव भूतल इह प्राबल्यमासीदति ॥ इति ॥ .... .... .... *

---

## ॥ द्वितीयदशकप्रारम्भः ॥

(गाथा.) वीडुमिन् मुत्तवुम् * वीडु शेय्दु *
उम्मुयिर् वीडुडैयानिडै * वीडुशेय्म्मिने ॥ १ ॥

भगवद्व्यतिरिक्तसर्वविषयसङ्गं त्यजत । तथा त्यागं कृत्वा युष्मदीयमात्मवस्तु मोक्षनिर्वाहके भगवति समर्पयत ॥

* * * भगवद्व्यतिरिक्तविषयवैराग्यमन्तरा भगवद्भक्तेः प्रतिष्ठितत्वासंभवेन प्रथमत इतरविषयविरक्तिं विधत्ते । इतरविषयसङ्गनिर्धूननपूर्वकमात्मसमर्पणं भगवति कुरुतेत्युपदिष्टमनया गाथया । अत्र पट्सहस्रिकायां श्रीकुरुकेशार्याः— "आत्मसमर्पणं नाम आत्मवस्तुनस्त्वच्छेषत्वसंवादः" इत्यनुजगृहुः । तच्छेषतायां विवादप्रहाणमेव समर्पणमित्युक्तं भवति । मूलगाथायां सर्वं त्यजतेत्यनुक्त्वा त्यजत सर्वमित्युक्तम् । शिशुः कश्चन स्वहस्ते यदि सर्पं गृहीत्वा तिष्ठेत्, प्रथमतो विजहीहि, विजहीहीत्युक्त्वा अनन्तरमेव खलु सर्पम् इति कथ्यते । तथैवात्रापि त्याज्यवस्तुक्रौर्यातिशयं द्योतयति त्यजतेति पुरस्तादुक्तिः । त्यक्तव्यं वस्तु किमित्यपेक्षायां सर्वमित्युच्यते । अहंकारममकारदूषितेषु वस्तुवृन्देषु 'इदमुपादेयम् इदं त्याज्यम्' इति विभागो हि नास्त्येव । कार्त्स्न्येनैव हि त्याज्यम् । श्रीरामचन्द्रपादाब्जसन्निधिमागच्छन् विभीषण * त्यक्त्वा पुत्रांश्च दारांश्च, * परित्यक्ता मया लङ्का * इति खलु सर्वसङ्गपरित्यागमाचख्यौ । भगवद्विषयस्वीकरणापेक्षया हेयविषयपरित्याग एव मुख्य इति द्योतितं भवति त्यागस्य प्रथमत उपदेशेन । त्यजतेति बहुवचनबलेन कृत्स्नभूतवर्तिनस्सर्वेऽपि संसारिण उपदेशलक्ष्यभूता इति गम्यते । नहि खलु कश्चन शान्तो दान्तश्च सन्नुपेत्य प्रार्थ्य मुनेरुपदेशं लभते । केवलं निरवग्रहेण स्वानुग्रहेण क्रियमाण उपदेशस्सर्वजनतोद्देश्यक एव हि भवितुमर्हति ।

सर्वविषयसङ्गं त्यजतेति कथनानन्तरं तथा त्यागं कृत्वेति यद्वर्तते तदिदं किमावश्यकम् ? 'त्यजत, भजत' इति हि वक्तव्यम् । अथवा त्यक्त्वा भजतेति वक्तव्यम् । त्यजतेति पुरस्तात्कथनम्; अथ च 'त्यागं कृत्वे'ति तदनुवदनं च किमर्थमिति चेत्; अयमनुवादः त्यागमात्रस्य परमप्रयोजनतां व्यञ्जयितुमित्याचार्याः । भोग्यतातिशयशालिनो ह्यर्थस्य भवत्याम्रेडनम् । लोके असत्सङ्गदूनिं कमपि बन्धुजनमुद्दिश्य असत्सङ्गवर्जनं सत्सङ्गवरणं चेति द्वितयमुपदेश्य भवत्याप्तानाम् । सत्सङ्गवरणविरहे सत्यपि असत्सङ्गवर्जनमतिप्रधानमिति विभाव्यते खलु। तदेव परमप्रयोजनतया चावधार्यते । तद्वदेव संसारिणा भगवद्विषयस्वीकरणविरहेऽपि असद्वि-

षयप्रहाणमभिरामतरमिति मुनिवरो मन्यते । कृतापराधो राजपुत्रः कारागारवासं लम्भितोऽभूदिति गृह्यताम् । तस्य कारावन्धाद्विमोचनं राज्याभिषेचनमिति यद्यपि द्वितयमुद्देश्यम्; तथाऽपि राज्याभिषेचनादपि बन्धाद्विमोचनमत्यन्ताभिमत खलु ॥

मूलगाथाया उत्तरार्धे द्राविडवाक्सन्निवेशो बहुविधानर्थान् सहते । युष्मदीयस्य आत्मनश्शरीरस्य च यस्स्वामी तत्सकाशे समर्पयतेति संस्कृतानुवादरं भवितुमर्हति । युष्मदात्मानं स्वावसथत्वेन स्वीकृतवान् यः तत्सकाशे समर्पयतेत्यपि स्यात् । युष्मदात्मसमर्पणे समुद्दिष्टे सति स्वामिनि समर्पयत इत्यपि स्यात् । युष्मदात्मानं परमव्योमनिकेतने भगवति समर्पयत इत्यपि स्यात् ।

अधस्तात्प्रथमदशके उद्देश्यं दैवतं प्रति नारायण इति वा विष्णुरिति वा नामविशेषो नैवोद्घाटितः । परात्परः, दृढप्रमाणसिद्धः इत्यादिसामान्यशब्दैरेव निरदिश्यत । तद्वदेवात्रापि स्वामीति, मोक्षनिर्वाहको भगवानिति च सामान्यत एव निर्देशः क्रियते । विवक्षितो देवताविशेषः को नामेति जिज्ञासातिशयमुत्पाद्य परस्ताद्वैशद्येन विवक्षति मुनिवरः । दशकेऽस्मिन् दशमगाथायामेव नारायणनाम निर्देक्ष्यति ।

**वीडु शेय्मिने** इति पाठवत् **वीडु इशैमिने** इति पाठोऽपि सांप्रदायिकः । स्वारस्यातिशयोऽप्यत्र वर्तते । युष्माभिरात्मसमर्पणं न कर्तव्यम् । तत् क्रियतामिति केनचिदुक्ते तत्र आक्षेपाकरणमेव वरमिति भावः । * यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः । तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ॥ * इति मनूक्तश्लोकरत्नमिह स्वादिष्टं व्याख्यायते पूर्वाचार्यैः । गाथाया अस्याः परमतात्पर्यमेतत्—* योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चोरेणात्मापहारिणा ॥ * इत्युक्तरीत्या भगवत्स्वामिकात्मद्रव्यापहाररूपमहापातकमूलस्य भवरोगस्य * अच्युताहं तवास्मीति सैव संसारभेषजम् * इत्युक्तरीत्या स्वामिविषये स्वात्मनस्तदीयताप्रतिपत्तिमन्तरेण नान्यत्किमपि भेषजमस्तीति ॥ .... .... (१)

(गाथा.) मिन्निन्निलैयिल * मन्नुयिराक्कैहळ् *
एन्नुमिडत्तु * इरैयुळ्ळुमिन् नीरे ॥ २ ॥

शाश्वतिकेनात्मना परिगृहीतानि शरीराणि तटिदपेक्षयाऽप्यस्थिराणीत्यमुं विषयम् (हे संसारिणः!) यूयमेव मनागवधत्त ॥

* * * संपदस्स्वप्नसङ्काशा यौवनं कुसुमोपमम् । तटिच्चञ्चलमायुश्च कस्य स्याज्जानतो धृतिः ॥ * इत्यस्य श्लोकस्योत्तरार्धं विशिष्यानुचिन्त्य गाथामिमामाह मुनिवरः । गाथाया अस्या हृदयं द्वेधा निर्णेतुं योग्यम् । अधस्तनगाथया कृतमुपदेशं श्रुतवन्तस्संसारिण, "अस्तु तावत्, तथैव करिष्यामः; क्षिप्रं तत्कर्तव्यमिति को निर्बन्धः? द्रक्ष्यामः क्रमशः" इति मन्येरन्निति कृत्वा, हा हन्त! क्षणभङ्गुरतामस्य शरीरस्य नावगच्छथ यूयम्; * गृहीत इव केशेषु मृत्युना धर्ममाचरेत् * इति खलु महान्त उपदिशन्ति; अतश्च मदुक्तिनिर्वर्तने त्वरितव्यं युष्माभिः—इत्युच्यत इति । अथवा, उपदेश्यत्वेनाभिमतेष्वप्येषु अयमन्यतमोऽर्थ इति कृत्वा उपदिशन् इति । [मन्नुयिर्] इत्यनेन आत्मनो नित्यत्वमुच्यते । * न जायते म्रियते वा कदाचिन्नायं भूत्वा भविता वा न भूयः । अजो नित्यश्शाश्वतोऽयं

पुराणो न हन्यते हन्यमाने शरीरे * इत्यादिप्रमाणप्रतिपन्ना ह्यात्मनो नित्यता। शरीरवदात्मनोऽपि नश्वरत्वे श्रेयस्साधनवैयग्री कस्यापि नोपपद्येत। हे जना! नश्वरस्य शरीरस्य किमपि श्रेयस्सम्पादयितव्यमिति नाहमुपदिशामि; शरीरे नष्टेऽपि य आत्मा शाश्वतिको विराजिष्यते, तस्यैव श्रेयस्सम्पादनमाशासे-इति सूचितं भवति। **यूयमेव मनागवधत्त** इत्यनेन प्रमाणानपेक्ष, मदाचार्योपदेशनिरपेक्षश्चैष विषयो विवेकिनां स्वत एव सुगम इत्युक्तं भवति॥ ... .... . .. (२)

(गाथा) **नीर् नुमदेविनै * वेर्मुदल् माय्त्तु * इरै शेर्मिनुयिर्क्कु * अदन् नेर् निरैयिल्लै॥ ३॥**

अहङ्कारममकारौ सवासनं विनाश्य सर्वेश्वरं समाश्रयत, आत्मनः तत्सदृशी पूर्तिरन्या नास्ति॥

* * *—* अनात्मन्यात्मबुद्धिर्या अस्वे स्वमिति या मतिः। अविद्यातरुसंभूतिबीजमेतत् द्विधा स्थितम्॥ * इत्युक्तरीत्या देहतदनुबन्धिविषयकाहङ्कारममकारलक्षणसंसारहेतुपरिहरणपूर्वकं भगवन्तं भजत, न तत्सदृशं हितान्तरमस्तीत्युक्तं भवति। * संसारार्णवमग्नानां विषयाक्रान्तचेतसाम्। विष्णुपोतं विना नान्यत् किंचिदस्ति परायणम्॥ * इति प्रमाणदृष्ट्या गाथेयं कीर्तिता। मूले, अहङ्कारममकाराविति वक्तव्ये त्वकारतवकारावित्येवास्ति कथितम्। स्ववाचा अहं ममेति अनुवादरूपेण कथनमप्यनर्थाय कल्पेतेति मुनिवरस्य हृदयमिव॥ ...(३)

(गाथा.) **इल्लदुमुळ्ळदुम् * अल्लदवनुरु * एल्लैयिलन्नलम् * पुल्हु पत्ते॥ ४॥**

(समाश्रयणीयत्वेन कथ्यमानस्य) तस्य भगवतस्स्वरूपम् विकारास्पदत्वेन असच्छब्दवाच्यादचेतनाद्विलक्षणम्, विकारानास्पदत्वेन सच्छब्दवाच्याचेतनादपि विलक्षणम्, निरवधिकानन्दमयं च, (तादृशं भगवन्तम्) विषयान्तरसङ्गं विहाय समाश्रयत॥

* * * उपादेयतया उपदिश्यमानस्य वस्तुनो भोग्यताया अप्रदर्शने परिग्रहरुचिर्न भवेत्खलु, अतस्तां भोग्यतामाह गाथयाऽनया। हेयप्रत्यनीकतया कल्याणैकतानतया च चेतनाचेतनविलक्षणस्वरूप, निरवधिककल्याणगुणविशिष्टतया निरवधिकभोग्यताशाली चायं भगवान्। अतश्च हेयविषयसङ्गपरित्यागपूर्वकं स सेव्य इत्युक्तं भवति।

गाथाया पूर्वार्धे चेतनाचेतनवैलक्षण्यं विवक्षुर्मुनिवरः चेतनपदं वा अचेतनपदं वा न प्रायुङ्क्त, सच्छब्दम् असच्छब्दं चैव प्रयुक्तवान्। सदसच्छब्दाभ्यां चेतनाचेतनयोर्व्यवहारो वेदान्तिनां गोष्ठीषु सुप्रसिद्धः। * ज्योतींषि विष्णुर्भुवनानि विष्णुरित्यादिपुराणरत्नश्लोके (२-१२-३८) * यदस्ति यन्नास्ति च विप्रवर्य * इति कथितं प्रथितम्। तत्र विष्णुचित्तार्या एवं व्याचचक्षिरे—"यतश्चाचिद्वस्तु क्षेत्रज्ञकर्मानुगुणं परिणामास्पदम्, तत् तद् नास्तिशब्दाभिधेयम्, इतरत् अस्तिशब्दाभिधेयमिति अर्थादुक्तम्" इति। अतश्च संस्कृतभाषाया

सदसच्छब्दाविव द्राविडभाषायाम् 'उळदु, इल्दु' शब्दावपि चिदचितोर्वाचकाविति सिद्धम्। भगवतस्स्वरूपं नश्वरेणाचेतनवस्तुना न तुल्यम्, अचित्संसर्गेण 'अहं सुखी, अहं दुःखी' इत्यध्यवस्यता चेतनवस्तुनाऽपि न तुल्यमित्युक्तं भवति। तर्हि कीदृशमिदमिति चेत्, * आनन्दमय * समस्तकल्याणगुणात्मकोऽसौ * इत्याद्युक्तरीतिकम्। एतादृशं भगवन्तं सेवस्वेति वक्तव्ये [पुल्हु] इति तात्मूले कथितम्। परिष्वजस्वेति तदर्थः। संसारिणः अङ्गनापरिष्वङ्गे भोग्यतातिशयममिमन्यन्त इति दर्शनात् भगवत्परिष्वङ्गः कीदृश इति पश्यतेति वदन्निव मुनिवरः परिष्वजस्वेत्याह। अधस्तनगाथात्रयेऽपि उपदेश्यविषये बहुवचनप्रयोगदर्शनात् अत्रापि बहुत्वविवक्षैव सुनिश्चया। संसारिवृन्दस्य सम्बोध्यमानत्वं बोध्यम्॥ (४)

(गाथा.) अत्तदु पत्तेनिल् * उत्तदु वीडुयिर् *
शेत्तदु मन्नुरिल् * अत्तिरै पत्ते॥

प्राकृतविषयसङ्गे प्रनष्टेऽपि केवलात्मभोगरुचिः प्रसज्येत, तामपि कैवल्यरुचिं विधूय भगवच्छेषत्वैकरसस्वरूपानुरूपपुरुषार्थलिप्सया सत्याम् विषयान्तरसङ्गविधूननक्षण एव 'भगवद्भोग एव पुरुषार्थः' इति मत्वा भजनं वरम्॥

* * * आत्यन्तिकभगवदनुभवविरोधिभूतस्य स्वरूपाननुरूपस्य कैवल्यमोक्षस्यापि हेयताज्ञापनपूर्वकं स्वरूपानुरूपभगवदनुभवप्राथम्येन वरमित्युपदिश्यते गाथयाऽनया।

लोको भिन्नरुचिरिति न्यायेन जनानां रुचिर्नानाविधा। ऐहलौकिकं समग्रमैश्वर्यं केचन कामयन्ते। * ते तं भुक्त्वा स्वर्गलोकं विशालम् * इत्युक्तं विशङ्कटं स्वर्गभोगमन्ये कामयन्ते। तथा आत्मानुभवरूपकैवल्यमोक्षमपि केचन कामयन्ते। आत्मा हि संसारसागरे निमग्नो यदा पङ्कदिग्धो मणिरिव स्वकीयनैसर्गिकप्रभाविमुक्तो मालिन्याभिभूतो भवति, स एव सन्तीर्णसंसारार्णवस्सन् विधूतपङ्कसङ्गमणिवत् सन्निधानस्वाभाविकप्रभापुञ्जः स्पृहणीयो भवेत्। तादृशं स्वात्मानमेवानुभोक्तुं केषाञ्चन कामना जायते। त एव केवला इति, कैवल्यमोक्षेप्सव इति च कथ्यन्ते। परमभोग्यभगवदनुभवैकरसीभवतामात्मनामेष कैवल्यमोक्षोऽपि हेयो भवति। अत एव श्रीरङ्गनाथैरनुगृहीतं वरदराजस्तवे—* भोगा इमे विधिशिवादिपदं च किंच स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता। सर्वं तदूषजलजोषमहं जुषेय हस्त्यद्रिनाथ! तव दास्यमहारसज्ञः॥ * इति। कैवल्यस्याप्यपुनरावृत्तिलक्षणमोक्षतायाश्शास्त्रसम्मतत्वेन आत्मभोगे प्रवृत्तानां यावदात्मभावि तस्मिन्नेव क्षोदीयसि भोगे निष्णाततया अवर्जनीयत्वापत्त्या तत्र रुचिमात्रमपि मा भूदिति परमकृपयोपदिशति मुनिवरः॥ (५)

(गाथा.) पत्तिलनीशनुम् * मुत्तवुम् निन्ननन् *
पत्तिलैयाय् * अवन् मुत्तिलडङ्गे॥ ६॥

सर्वेश्वरोऽपि सङ्गस्वभावश्शून्यः मत्समो विराजते; त्वमपि विषयसङ्गरहितस्सन् तस्य भगवतः सर्वेषु कैङ्कर्येषु अन्वयं प्राप्नुहि ॥

* * * भगवति परमपुरुषेऽनुनवीयमानं पराभक्त्यं सर्वथा जघन्यानां संसारिणामुद्वेगाय खलु कल्पेत; तत्तादृशः परात्परो भगवान् कथमतिनीचानामस्माकं भोगार्हो भवितेति शङ्का ह्यवर्जनीया। तादृशीं शङ्कामपोहति सेयं गाथा। अत्र पद्मनाभिकामूकिरेषा—"भगवन्तं यद्यपि वयं वृणीमहे, स तु सर्वेश्वरःखलु; स किमस्मान् विषयीकुर्यादित्यत्राह; सर्वेश्वरोऽपि सन् आश्रितेषु सर्वेष्वपि ममरूपस्नेहस्वभावस्समः; ततश्च त्वमपि तद्विषये स्नेहस्वभावो भूत्वा तद्विषयकमनश्शरीरवृत्तिष्वन्वयमवाप्नुहि" इति।

गाथाया उपक्रमे स्थितं [पत्तिलन्] इति पदं स्नेहविरहित इत्यर्थकमिति भायात। अस्तु तावदर्थस्सः। सङ्गस्वभाव इत्यर्थोऽपि तस्य पदस्य शोभनः। आश्रितैस्सह ऐकरस्येन वर्तनमेव तस्य स्वभाव इत्युक्तं भवति। भगवान् वासुदेवो यदा कंसवधार्थं मधुरापुरीमयासीत् तदा कुब्जासमर्पितदिव्यचन्दनानुलिप्तगात्रस्सन् पुष्पलिप्सया मालाकारगृहं स्वयमेव ययौ। तदानीं स भक्तवरो माल्यकृदाह * प्रसादपरमौ नाथौ मम गेहमुपागतौ। धन्योऽहमर्चयिष्यामि * इति। श्लोकरत्नमिदमिह पूर्वाचार्यैरतिमधुरं व्याख्यायते। अत्र पूर्वार्धे गाढदृष्टिर्निधेया। कृष्णबलरामावत्र निरूक्षितानिति द्विवचनम्। प्रसादपरमत्वं नाथत्वं चेति द्वितयमत्रोच्यते। प्रसादः परमः ययोस्ताविति प्रसादपरमौ। प्रसादो नाम सौशील्यपरमकाष्ठा। सैव भगवति भृशं शोभते। नाथत्वं तु अवर्जनीयतया स्थितम्। परत्वविरहे सति न खलु सौशील्यं प्ररोचनं भविष्णु। उपरि * मम गेहमुपागतावित्यनेनापि निर्देशेन तदेव सौशील्यमूर्जितं क्रियते। एतौ हि शेषिणौ शेषभूतं मा स्वसविधे समाहूय कर्तव्यमाज्ञापयितुं प्रभवन्तावपि हन्त मम गेहमुपागतौ - इति तावद्विद्धो भवति माल्योपजीवनः।

गाथादौ वर्तमानस्य [पत्तिलन्] इति पदस्य सङ्गविरहित इत्यर्थस्सर्वेषां प्रथमप्रतीतिगोचरो भवति। तमिममर्थं श्रीभट्टपादा आद्रियन्ते। * वासुदेवोऽसि पूर्णः * इत्युक्तरीत्या समस्तकल्याणगुणात्मको ज्ञानानन्दात्मकस्वरूपो नित्यसूरिपरिषत्प्रभुरपि स सर्वेश्वरो नित्यसूरिषु प्रेमवान् न भवति; परं तु अस्मादृशेषु संसारिष्वेव सर्वेषु प्रेमवान् भवति। अतस्त्वमपि विषयान्तरेषु प्रेमविधुरस्सन् तस्मिन्नेव प्रेमवान् भूत्वा * वासुदेवस्सर्वमिति तमेव सर्वस्वं प्रतिपद्येथा इत्यर्थं इत्याहुः॥ .... .... .... .... (६)

(गाथा.) अडङ्गेळिल सम्पत्तु * अडङ्गक्कण्डु *
ईशन् अडङ्गेळिलह्देन्नु * अडङ्गुह उळ्ळे ॥ ७ ॥

कार्त्स्न्येन परमभोग्याम् भगवद्विभूतिमखिलामवेक्ष्य "सर्वाऽप्येषा विभूतिः अस्मत्प्रभोः खलु" इति मत्वा (त्वमपि) भगवच्छेषभूतविभूतिमध्ये अन्तर्भव ॥

* * * स भगवान् सङ्गस्वभावो भवतु कामम्। अपरिच्छिन्नोभयविभूतिविशिष्टो हि सः। अतिक्षुद्राणां क्षोदिष्ठोपकरणानां चास्माकं स कथं सन्निहितो भवेदित्येवं भृशमाविलहृदयान् संसारिजनान् प्रति कथ्यते गाथेयम्।

भगवान् अपरिच्छिन्नविभूतिक इति तु सत्यमेव। सर्वाङ्गरमणीयां सर्वामपि तदीयां संपदमवलोक्य 'इयं सर्वाऽपि संपत् सर्वेश्वरस्य अस्मत्पितुर्हि विभूतिः' इत्यनुसंधाने कृते अथ आविल्मनस्कताया नाल्पोऽप्यवकाश इति निपुणतरमुपपाद्यते।

अत्र लौकिककथाद्वयमुदाहरन्ति पूर्वाचार्याः। क्वचन कश्चित् वणिजां वरिष्ठ आसीत्। स च वाणिज्येन विशेषतस्संपिपादयिषुरर्थराशिं द्वीपान्तरयात्रामकामयत। सोऽयं निजपत्नयामन्तर्वत्नयां सत्यां प्रतस्थे द्वीपान्तरम्। अथ द्वित्रमासेभ्यः परस्तादन्तर्वत्नी सा प्रसुषुवे कुमारम्। स च कुमारः क्रमादभिवर्धते। अवगतपुत्रोत्पत्तिवृत्तान्तो वणिगतितरामानन्दकन्दलितान्तरङ्गोऽपि यथाकामं स्वदेशं प्रत्यावर्तितुमपारयन् वाणिज्ये वैयग्र्येण तत्रैव द्वीपान्तरे कालमतिवाहयति। कुमारस्तु समेधमानवयाः स्वयमपि निजं कुलकृत्यमेव बहुमन्वानो वाणिज्य एव निष्णातः कालं नयति। कुमारो विंशे वयसि पदं निदधे। अद्याप्यदसीयः पिता द्वीपान्तरमेवाधिवसति वाणिज्यविवशः। पितेव स्वयमपि कमपि द्वीपमुपगम्य पण्यभारानानीय स्वदेशे वाणिज्यं कर्तुकामः पुत्रो द्वीपान्तरं गत्वा वस्तूनि संगृह्य नौकाध्वना समागच्छति। यस्यां नौकायामयं समायाति तस्यामेव तदीयः पिताऽपि दिष्ट्या समायाति सह बहुभिः पण्यपूलकैः। यदा च सेयं नौका निजमवस्थानवट्टं प्रापत्, तदा वणिक्पुत्रोऽयं सपण्यभारः अवरोहणसज्जोऽभूत्; तथा पिताऽपि च सः। नौकावतारस्थलसन्निहिते यस्मिन् स्थले पुत्रकोऽयं स्वकीयान् पण्यभारानवरोपयितुं सन्नह्यति, तत्रैव स्थले तदीयः पिताऽपि स्वानीतवस्तुवर्गमवतारयितुमिच्छति। उभावप्येतावज्ञातपरस्परसंबन्धौ—अस्मदीयोऽयं पुत्र इति न जानाति पिता, ममायं जनक इति न जानीते पुत्रः। संबन्धज्ञानस्य का प्रसक्तिरनयोः? यदयं पिता पुत्रप्रसवात्प्रागेव प्रस्थितो द्वीपान्तरम्, नाद्यावधि पुत्रमुखमपश्यत्। अत एव कोऽप्ययं वैदेशिको वणिगिति पुत्रो मन्यते; पिताऽपि तथैव मन्यते पुत्रम्। स्थलविषयको विवादस्तयोर्विजजृम्भे; मयैवेदं स्थलं प्रथमतः पर्यवेक्षितमिति द्वावप्यश्रान्तमाक्रोशन्तौ चिरं कलहायेते।

अथ द्वयोरप्यनयोः पितृपुत्रभावसम्बन्धं विजानन् तटस्थः कोऽपि वणिगुभयोरपि सम्बन्धमावेद्य, पितृपुत्रयोर्युवयोः किमिदमकाण्डकलहताण्डवमिति सस्मितमाचचक्षे। पश्चात् किं प्रवृत्तं स्यादिति मन्यध्वे? यदा च सम्बन्धोऽवगतः सद्य एव द्वयोरपि वस्तुजातमेकस्वामिकमभूत्। कलहश्च प्रशान्तः। एवमेतत्।

अपरा चेयं बालकथा—कश्चन राजपुत्रोऽर्भकः बाह्यान्युपवनादीनि दिदृक्षते स्म। राजपुरुषस्तं बहिर्नीत्वा वैनोदिकवस्तूनि प्रदर्शयन्नटतिस्म। तदा विलक्षणपुष्पफलद्रुमादिशोभितः कश्चन महानारामश्चक्षुर्विषयतां गतः; आरामद्वारे च खड्गहस्तौ द्वारपालाववलोक्य अर्भकोऽयं मनागिव चकितः राजपुरुषसकाशे वदति—'महानुभाव! आरामान्तः प्रविश्य दिदृक्षा मम बलवती वर्तते; भयानकरूपयोर्द्वारपालकयोर्हस्ते यत्किंचिद्दत्वा मामन्तर्नेतुं शक्नोति वा भवान्?' इति। स तावदारामो वस्तुतो महाराजस्य। स्वपितुरेवेदमुद्यानमित्यनभिज्ञानादर्भक एष चकित एवमुवाच। अथ राजपुरुष आह—'आयुष्मन्! तव पितुरेव स्वन्वयमारामः, निश्शङ्कमन्तः प्रवेष्टुमर्हसि' इति। अनन्तरमर्भकः अधिकारधोरण्या स्खलन्तः प्रविशति। एतेन किमवगतम्? संबन्धज्ञानविरहे सति भीतिः, तत्सत्त्वे तु महती धीरता, दृप्तता, धृष्टता चेति। एवमेव भगवता संबन्धसद्भावमविज्ञाय यं

क्लिश्यामहे; संबन्धज्ञाने सति हि संपत्त्वे क्लेशगन्धस्यापि न प्रसक्तिरित्युक्तं भवति ॥ अत्रेयं भूमाधिकरणश्रीभाष्यश्रीसूक्तिरप्यनुसन्धेया—"कर्मवश्यानां क्षेत्रज्ञानां ब्रह्मणोऽन्यत्वेनानुभूयमानं कृत्स्नं जगत् तत्तत्कर्मानुरूपं दुःखं च भवति। अतो ब्रह्मणोऽन्यतया परिमितसुखत्वेन दुःखेन च जगदनुभवस्य कर्मनिमित्तत्वात्कर्मरूपाविद्याविमुक्तस्य तदेव जगत् विभूतिगुणविशिष्टब्रह्मानुभवान्तर्गतं सुखमेव भवति। यथा पित्तोपहतेन पीयमानं पयः पित्ततारतम्येनाल्पसुखं विपरीतं च भवति; तदेव पयः पित्तानुपहतस्य सुखायैव भवति। यथैव राजपुत्रस्य पितुर्लीलोपकरणमतयात्वेनानुसन्धीयमानं प्रियत्वमनुपगतं तथात्वानुसन्धाने प्रियतमं भवति। तथा निरतिशयानन्दस्वरूपस्य ब्रह्मणोऽनवधिकातिशयासङ्ख्येयकल्याणगुणाकरस्य लीलोपकरणं तदात्मकं चानुसन्धीयमानं जगन्निरतिशयप्रीतये भवत्येव॥" इति॥ .... ... .... .... .... (७)

(गाथा.) उळ्ळमुरै शेयल् * उळ्ळविम्मून्रैयुम् *
उळ्ळिक्केडुत्तु * इरैयुळ्ळिलोडुङ्गे ॥ ८ ॥

मनोवाक्कायरूपेण वर्तमानं त्रितयं परिशील्य करणत्रयमपि विषयान्तरप्रवणमेव हन्तास्तीति ज्ञाने सति तत्प्रावण्यमपोह्य स्वामिभूतस्य भगवतो विषये प्रावण्यं वह ॥

* * * भगवति कैङ्कर्यं कीदृशैरुपकरणैः कर्तव्यमित्याशङ्कायामुच्यते गाथैषा। नूतनतया उपकरणान्वेषणप्रयासो माभूत्; स्वतस्सिद्धानां वाङ्मनःकायात्मनामुपकरणानां भगवत्परिचर्यार्थपरिकल्पितत्वानुसन्धानपूर्वकं तेषां करणानां भगवद्व्यतिरिक्तविषयेभ्यो विनिवर्तनं कर्तव्यमित्युपदिश्यते। मानसिकेन ध्यानेन, वाचिकेन स्तवेन, कायिकेन किङ्कारेण च केवलं समाराध्यो भगवानित्युक्तं भवति।

* विचित्रा देहसंपत्तिरीश्वराय निवेदितुम्। पूर्वमेव कृता ब्रह्मन् हस्तपादादिसंयुता ॥ * इति वचनमिह स्मर्तव्यम्। करणत्रयस्थितिपर्यालोचना प्रथमतः कर्तव्या। अस्मदीया मनोवाक्कायाः कीदृशे कर्मणि व्यापृतास्सन्तीति तावद्विमर्शनीयमत्र। विमर्शे तु अपथे प्रवृत्तिरेव गम्येत स्वतः। अथ च सा प्रवृत्तिर्विलोपनीया। कुर्वद्रूपाणां करणानां कुत्रचित् प्रवृत्तिरवर्जनीया स्यात्। स्वरूपप्राप्तं भगवद्विषयपवर्तनं तेषां क्रियतामित्युपदेशसारः॥ ... .... .... .... .... (८)

(गाथा.) ओडुङ्गवन् कण् * ओडुङ्गलुमेल्लाम् *
विडुम्पिन्नुमाक्कै * विडुम्पोळुदेण्णे ॥ ९ ॥

भगवति सर्वेश्वरे करणत्रयप्रावण्ये समासञ्जिते सति ज्ञानानन्दादिसंकोचास्सर्वे विमुच्येरन्; अथ च वर्तमानशरीरस्य वियोगकालम् प्रतीक्षस्व ॥

* * * भगवद्भजनविरोधित्वाद्दुःख्यमनुचिन्त्य खिन्नानां संसारिणां खेदनिवृत्तये गीयते गाथैषा। विरोधिनिवृत्तिसमनन्तरं भगवत्सेवा कर्तव्या वा, भगवत्सेवानन्तरं विरोधिनिवृत्तिर्भवति वेति विमर्शे, भगवत्सेवनमन्तरा विरोधि-

निवृत्तेरसंभवात् विरोधिनिवृत्त्यनन्तरं भगवत्सेवनमित्येतदसंभवपराहतम्। सेव्यमानेनौषधेन रोगनिवृत्तिरिव, क्रियमाणेन भगवत्सेवनेन विरोधिनिवृत्तिरित्येव सुवचत्वात् भगवत्सेवानन्तरं विरोधिनिवृत्तिरित्यपि न। भगवत्सेवनस्य यावदात्मभावित्वेन तदनन्तरमिति वक्तुं योग्यः काल एव नास्ति। वर्तमानकालावच्छिन्नभगवत्सेवनेन विरोधिनिवृत्तिरभिमता। लोके व्याधिनिवृत्तये सेव्यमानेष्वौषधेषु कानिचन व्याधिं न निवर्तयन्ति। कानिचन प्रातिकूल्यपरुषाणि व्याधिमभिवर्धयन्ति। कतिचित्तु स्वसेवनसमनन्तरं क्रमशो व्याधिमपगमयन्ति। स्वसेवनोपक्रमकाल एव आनुकूल्यप्रदर्शनक्षमाण्यौषधानि तु मृग्याणि। पराशरमहर्षिणा * भेषजं भगवत्प्राप्तिरिति भेषजत्वेन प्रतिपादितं भगवत्सेवन तु उपक्रमसमय एव विरोधिनिवर्तनक्षमं भवतीति विशेषः। * मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः। केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति॥ * इत्यनुभवरसिका आचक्षते। लोके भिषगन्यो भेषजमन्यत्। अत्र भिषगेव भगवान् स्वयं भेषजमपि भवतीति बोध्यम्। * निर्वाणं भेषजं भिषक् *।

स्वरूपानुरूपे कर्मणि क्रियमाणे स्वरूपविरोधिवृन्दं सकलमपैति। प्राप्ते कृत्ये कृते सति अप्राप्तमखिलमनुपदमेव व्यपैति। मूले [ओडुङ्गल्] इत्यनेन अविद्याकर्मवासनारुचिप्रभृति सकलं विवक्षितम्। भगवति आभिमुख्यमात्रेण स्वरूपसंकोचकसर्वविधविरोधिनिवृत्तिः प्रतिपादिता भवति।

अथ उत्तरार्धस्य हृदयम्। * प्रायो ह्यकृतकृत्यत्वात् मृत्योरुद्विजते जनः। कृतकृत्याः प्रतीक्षन्ते मृत्युं प्रियमिवातिथिम्॥ * इति प्रमाणमनुसृत्य प्रोक्तमुत्तरार्धम्। विरोधिषु निवृत्तेषु हेयशरीरनाशो निस्सन्देह एव; स तावत् स्वयमेवोपनमतीति नैर्भर्यमालम्बनीयमित्युक्तं भवति। हेयशरीरनाशं प्रति किं चिन्तनीयमस्तीत्यपि शब्दार्थो भवति॥ भगवदनुभवकुतूहलेन हेयदेहनिवृत्तिकालं प्रतीक्षस्वेत्यपि॥ .... (९)

(गाथा.) एण्पेरुक्कन्नलत्तु * ओण्पोरुळीरिल *
वण्पुहळ् नारणन् * तिण्कळल् शेरे॥ १०॥

असंख्येयान् ज्ञानानन्दस्वभावशालिनः जीवात्मवर्गान् नित्यसिद्धकल्याणगुणांश्च बिभ्रतः नारायणस्य आश्रितरक्षणैकशीलौ चरणौ भजस्व॥

* * * एतावतीभिर्गाथाभिः परात्परत्वेन सेव्यत्वेन च प्रोक्तं दैवतं नारायणशब्दाभिलप्यमिति गाथयाऽनया प्रकाश्यते। अतिविलक्षणानामनन्तानां च जीवराशीनां स्वामी, असंख्येयानवधिककल्याणगुणगणनिधिश्च यो भगवान्, स नारायणनामा; तस्यैव चरणमाश्रयणं प्राप्तमिति प्रतिपादितं भवति। यद्यप्यत्र नारायणशब्दमात्रं निर्दिष्टम्, तथाऽपि श्रीमदष्टाक्षरमहामन्त्रविवक्षैवात्रेति संमतमाचार्याणाम्। नारायणस्य यद्विशेषणद्वयमिह निवेशितम् तत् नारायण शब्दार्थप्रतिपादनरूपं वेद्यम्। अनन्तानां स्वप्रकाशरूपाणां जीवानामाश्रयत्वं नित्यनिरवद्यकल्याणगुणानामाश्रयत्वं चैव हि नारायणशब्दप्रवृत्तिनिमित्तम्।

मूले [ओणूपोरुळ्] इति शब्देन 'विलक्षण वस्तु' इत्यर्थकेन जीवात्मान उच्यन्ते। तेषामेव विशेषणम् [एणूपेरुकु] इति, [अन्नलम्] इति च। क्रमेण अनन्तत्त्वप्रजापतिवाक्योदितकल्याणगुण-शालित्वं च तदर्थः। जीवात्मानस्त्वानन्त्ययुक्ता इति हि वेदान्तिनः। तथा * य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासस्सत्यकामस्सत्यसङ्कल्पः * इति प्रजापतिवाक्यप्रसिद्धकल्याणगुणशालिनश्च ते। एतादृशानां जीवानाम् [ओणूपोरुळ्] इतिशब्देन प्रतिपादनं तु * अत्रायं पुरुषस्स्वयंज्योतिर्भवतीति प्रमाणानु-रोधेनेति प्रतिपत्तव्यम्।

अथ [ईरिल वणूपुहळ्] इत्यनेन अनन्तकल्याणगुणवत्ता कथिता भवति। स्वरूपनिरूपका, निरूपितस्वरूपविशेषण भूता, दिव्यमङ्गलविग्रहाश्रिता, आश्रयणसौकर्यापादका, आश्रितकार्यापादकाश्च यावन्तस्सन्तो गुणा प्रथिताः, तावन्तोऽयत्र ग्राह्याः। निखिलैस्त्रिविधचेतनैः नित्यसिद्धैः कल्याणगुणगणैश्च समन्वि-तस्य नारायणस्य श्रीमदष्टाक्षरमहामन्त्रमालम्बनत्वेन स्वीकृत्य भजतेति प्रकृतगाथाद्वयं प्रतिपादयन्त्याचार्याः।

अत्रायमितिहासोऽनुसन्धेयः। श्रीपराशरभट्टार्य (तदनुज) श्रीराममिश्रार्य इत्युभौ यमजौ श्रीवत्साङ्क-मिश्रपुत्ररत्नौ। एतयोश्शैशव एव भगवता रामानुजेन गोविन्दभट्टारकः [एम्बार्नामा गुरुवरः] आचार्यपदे निवेशित इति गुरुपरम्पराप्रसिद्धमिदम्। अत एव भट्टपादस्स्वकृति भगवद्गुणदर्पणाख्य-सहस्रनामभाष्योपक्रमे * वन्दे गोविन्देति स एव गोविन्दभट्टः प्रधानाचार्यत्वेनोपश्लोकितः। एतौ भट्टपादश्रीराममिश्रौ स्वपितृपादसन्निधौ सहस्रगीत्या अस्या अर्थग्रहणनिरतावास्ताम्। तदात्वे प्रकृतगाथार्थविवरणे प्रसक्ते सति, "श्रीमदष्टाक्षरमहामन्त्रार्थगर्भिताया अस्या गाथाया स्वाचार्यसकाशं एवार्थश्रवणं युक्तम्, तत स्वाचार्यसविधे गत्वा श्रृणुतम्" इति प्रथमत आदिश्य, अनुपदमेव "अस्मिन् दशके द्वितीयगाथाया शरीरास्थिरत्वमुक्तं खलु, अतश्च विलम्बो न सह्यः, अत्रैव श्रृणुतम्" इत्याज्ञाप्य मूलमन्त्रोपदेशपूर्वकमेतद्गाथार्थमुपपाद्य, "इयं गाथा श्रीमदष्टाक्षरमहामन्त्रार्थमयीति प्रतिपद्येथाम्" इत्यन्वग्रहीत् (पिता) श्रीवत्साङ्कमिश्रगुरु—इति व्याख्यातार आचार्यवर्या अनुगृह्णन्ति। अत एव श्रीपराशरभट्टा-र्यस्य उभावाचार्यौ प्रथितौ। तदिदं * वन्दे गोविन्दतातौ * इति श्रीसूक्त्या च समगादमित्यवसेयम्।

गाथायामस्यां भगवतश्चरणयोः दृढत्वमुक्तम्, तत् आश्रितरक्षणे सततजागरूकतारूपमवगन्तव्यम्। भगवन् अच्युतत्वप्रसिद्धिं चरणावेव परिपालयत इति प्रतीतव्यम्। * अनतिक्रमणीयं हि चरणग्रहणम्।। (१०)

(गाथा) शेर्‌वड * चेनूकुरहूर् शठकोपन् शोल् *
शीर् चौडैयायिरत्तु * ओर् पत्तिप्पत्ते ॥ ११ ॥

जलाशयभरितायाम् दक्षिणदिग्वर्तिं श्रीकुरुकापुर्याम् (अवतीर्णस्य) श्रीशठकोपमुने दिव्यसूक्तिभूते अतिविलक्षणशब्द सदर्भसमन्विते गाथासहस्रे इदं दशकम् विमर्शपूर्वकमुक्तम्॥

* * * एतद्दशकम् * आलोच्य सर्वशास्त्राणि विचार्य च पुनः पुनरित्युक्तरीत्या सारासारविमर्शपुरस्सरमन्वग्राहीति प्रतिपादितमनया चरमगाथया। फलश्रुतिगाथेति प्रसिद्धासु दशकान्त्यगाथासु नियमेन फलप्रतिपादनमेव कार्यमिति न

नियन्त्रणा। दशकस्वरूपकथनादिभिरपि चरमगाथा काश्चिन्निबध्यन्ते। अत्र दशकस्वरूपकथनमात्रमेव। "भगवद्गुणप्रतिपादकेऽस्मिन् सहस्रे इदं दशकं भगवन्तं विमृश्य कथितम्" इति (द्राविडी) षट्सहस्रिकासूक्तिः।

गाथोपक्रमस्थम् [ शेर् ] इतिपदं क्रियापदत्वेन स्वीकृत्य 'इदं दशकं सेवस्व' इत्यर्थमपि वर्णयन्त्याचार्याः। एकवचनं जात्यभिप्रायमिति प्रागेवोक्तम्॥ (११)

— द्रमिडोपनिषत्सङ्गतौ—एतद्दशकसारार्थसङ्ग्राहकश्लोकः —

संसारिणोऽप्यनुजिघृक्षुरसौ दयालुः अल्पास्थिरेतरपुमर्थरुचिं निरस्यन्।
तत्त्यागपूर्वहरिभक्तिसुधां दुहानाम् उद्दीपनीमुपदिदेश मुनिर्द्वितीये॥

इति सहस्रगीत्यां प्रथमशतके द्वितीयदशकं समाप्तम्॥

---

## ॥ अथ प्रथमशतके तृतीयं दशकम्—पत्तुडैयाडियवर् ॥

**व्याख्यानावतारिका**॥ सर्वस्मात्परो भगवानिति प्रथमदशके प्रत्यपादि। स एव भजनीय इति द्वितीयदशके प्रत्यपादि। अथ भजनीयत्वौपयिकं सौलभ्यमिह तृतीयदशके निरूप्यते।

अधस्तनदशके उपदेशपात्रतयाऽभिहितानां संसारिणां हृदये इयमाशङ्का स्यात्,—परात्परं भजतेति कथिते कथमिदं भजनं संघटताम्? उभाभ्यामपि बाहुभ्यां विरहितं कमपि पुरुषमुद्दिश्य गजराजमधिरोहेति कथनमहो कथमर्थवत् स्यात्? सर्वेश्वरस्तावत् * कश्श्रीश्श्रियः परमसत्त्वसमाश्रयः कः कः पुण्डरीकनयनः पुरुषोत्तमः कः। कस्यायुतायुतशतैकलवांशकांशे विश्वं विचित्रचिदचित्प्रविभागवृत्तम्॥ * इत्यादिप्रमाणशतोपबृंहितनिरतिशयप्रभावशाली स कथमिव नीचैस्संसारिभिर्भजनीयस्स्यादिति। तामिमामाशङ्कां निरसितुमेव प्रकृतदशकावतारः। बाहुद्वयविरहितस्य पुंसः स्वयमेव गजाधिरोहणं यद्यपि दुश्शकम्, तथाऽपि सुशकमेव ननु स एव गजराजो यदि स्वात्मानमारोहणानुकूलमवनमय्य दिशेत्। तथा भगवान् हेयानामपि संसारिणां सुखेन भजनीयस्सन् स्वात्मानं बहुभिः प्रकारैरवनमयतीति स्वादिष्टमुपपादनमत्र संपद्यते।

लौकिकेषु वस्तुबृन्देषु काष्ठलोष्टादिकं काञ्चनादिकं च पश्यामः। काष्ठलोष्टादिकमतिसुलभम्, काञ्चनादिकमतिदुर्लभमिति स्थितम्। तथा च सौलभ्यदौर्लभ्ययोर्वैयधिकरण्यं सिद्धम्। सुलभैः पदार्थैर्नास्माकं प्रयोजनातिशयः, यैरस्ति प्रयोजनातिशयस्ते हन्त दुर्लभाः। गौरवशालीनि वस्तूनि दुर्लभानि भवन्ति, लाघवास्पदानि तु सुलभानि भवन्तीति प्रत्यक्षसिद्धम्। ये सर्वथाऽप्युपेक्षणीयाः पुरुषाः, ते रथ्यासु शतशस्सहस्रशश्च पर्यटन्ति। ये तु स्पृहणीयप्रेक्षणा महाराजादयः, ते मृग्या एव विरसन्ति। यदि व्यक्तिविशेषे परत्वसौलभ्ययोस्सामानाधिकरण्यमनुभाव्यं स्यात्, स एक एव भगवान्नारायण इति निश्चप्रचम्। भगवति परत्वमिव सौलभ्यमपि असमाधिकं सुलभमति। परत्वदशया भीतेरनुपादाय सौलभ्यं स्थितं, सौलभ्यदशया अनुपेक्षणाय परत्वं स्थितम्।

* अनन्याधीनत्वं तव किल जगुर्वैदिकगिरः पराधीनं त्वां तु प्रणतपरतन्त्रं मनुमहे * इति श्रीकूरनाथगुरुवर (वरदराजस्तवे) आश्रितपारतन्त्र्यलक्षणं सौलभ्यमेव भगवतो नैसर्गिको वेष इति निर्धारयति। भाग्याधिका भक्तजना भगवतस्सौलभ्यभूमानमेव भृशमनुभूय हर्षप्रकर्षमनुविन्दन्ति; शिशुपालसधर्माणो दौर्भाग्योपहतास्तु तदेव सौलभ्यं गर्हास्पदं मृष्वा हन्त प्रणश्यन्ति। स्नानपानसदनुष्ठानाद्यर्थमुपकल्पिते तटाके कण्ठे बध्वा शिलां गुर्वीम् निपत्य नश्यन्तीति, प्रदीपे शलभाः पतित्वा प्रणश्यन्तीति च ननु पश्याम। एवमेव अनुभवरसिकानां दिव्यानुभवयोग्यं सौलभ्यं पापिनः केवलं विदूष्य विनश्यन्ति चेत्, कामं विनश्यन्तु। तावता भाग्याधिकानां भागधेयस्य का क्षतिः? श्रीपराङ्कुशपरकालादीनां दिव्यसूरिवराणां भगवति परत्वानुभवापेक्षयाऽपि सौलभ्यानुभवे सुमहत्तरं कुतूहलमेवासीत् इति पश्याम। भगवानपि सौलभ्यप्रकाशनार्थमेव रामकृष्णादिविभवावतारान् वितनोति। सौलभ्यपरमकाष्ठारूपकार्यवृन्दमध्ये गोवर्धनोद्धरणाद्यतिमानुषकार्यकरणं च सौलभ्यगौरवसंपादनार्थमेवेति परमार्थः। नवनीतचौर्यापराधनिमित्तेन दण्डनार्थं मात्राऽभिद्रुतो दधिभाण्डं शरणं वृणुते कृपया तस्मै मुक्तिं प्रददाति। उलूखले दामनि सन्निबद्धस्सन् नारदशापाद्यमलार्जुनतां गतयोः कुबेरपुत्रयोश्शापविमोक्षणविचक्षणो भवति। एवंविधाश्चर्या इह्वनागोपस्य पारेपरार्धम्। तदस्य स्वाभाविको वेषः परत्वं वा, उत सौलभ्यं वेति निर्णेतुमशक्यम्। भगवांस्तु स्वयं गायति * तस्याहं सुलभः पार्थ! नित्ययुक्तस्य योगिनः * इति। पाण्डवदूत्यपार्थसारथ्य दिव्यचरितविशेषैश्च सौलभ्यसीमानमेव समुल्लासयति। अवतारान्तरे च * इमौ स्म मुनिशार्दूल! किंकरौ समुपस्थितौ। आज्ञापय यथेष्टं वै शासनं करवाव किम्॥ * इत्यादिकमाचक्षाण, स्वामिन * अहं वेद्मि महात्मानमित्याद्युक्तपरत्व-वेदेशिकतां सौलभ्यैकनिरूपणीयतां च प्राचीकशत्।

सहस्रनामाध्याये * विजितात्मा विधेयात्मा * इत्यत्र भाष्यकर्तारश्शङ्कराचार्या अविधेयात्मेति प्रतीक-ग्रहणपूर्वकं भगवतः परत्वप्रतिपादनपरतया नदिदं नाम व्याचचक्षिरे। भगवद्गुणदर्पणकृतो भट्टपादास्तु विधेया-त्मेत्येव प्रतीकमुपादाय सौलभ्यपरतया व्याचख्युः। विजितात्मेति नाम च परे जितेन्द्रियत्वपरमभाषन्त। न कोऽपि रसोऽत्रेति मन्यमाना भट्टपादास्तु, "भक्तैर्विजितः सर्वथा स्वायत्तीकृत आत्मा यस्य" इति परमोत्तुङ्गमर्थं बभाषिरे। दिव्यप्रबन्धरसिकानां भगवद्गुणविद्धानामेव विश्वव्याख्याननिदानभूतमिदं दशकमिति, तत्रापि प्राथमिकी गाथा सारभूतेति च वेदितव्यम्।

कदाचिद्भगवान् रामानुजः स्वशिष्यप्रवराय गोविन्दभट्टारकाय भगवतस्सौलभ्यं सुविशदमुपादिशत्। स च श्रोता महान् गुणविशेषेऽस्मिन्नतितरां रसिकश्च विद्धश्चाभूत्। तदात्वे रामानुजमुनीन्द्रेणैवमनुगृहीतम्—"इतरे जनास्तावदिदं सौलभ्यमाकर्ण्य भगवन्तमतितरां हेयं मन्यन्ते। भाग्यभूमा हि भवानत्र रसिकश्च विद्धश्च भवति" इति, इदं व्याख्यातारः पूर्वाचार्या विलिखन्ति॥ *

प्रथमगाथावतारिका॥ भगवतः परत्वं सुचिरमप्यनुभोक्तुं शक्यम्। सौलभ्यं तु मनसाऽपि चिन्तयितुमशक्यम्। 'तत्तादृशः परात्परः एव खलु प्रह्वोऽभवत्' इति चिन्तनमात्र एव गात्रे रोमोद्गमः, कण्ठे स्वरगद्गदता, नयनयोर्बाष्पपूरश्च भवति गुणविद्धानाम्। * आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान्। सदा परगुणाविष्टः द्रष्टव्यस्सर्वदेहिभिः॥ * इति महर्षिभिरपि प्रशस्यमाना अविकारिणस्सत्यं त एव खलु ये हि नाम

भगवतस्सौलभ्यानुभवे विस्मरद्धृदया । भगवान् शठकोपमुनिस्त्वधुना कृष्णचेष्टितविशेषे सौलभ्यसीमभूते प्रवण-हृदयस्सन्नतितरा व्यामुह्यति ॥

(गाथा.) पत्तुडै यडियवर्केळियवन् पिरर्कळुक्करिय वित्तहन् * मलर्मह‌ळ् विरुम्बुम् नमरुम् पेरलडिहळ् *
मत्तुरुक्कडैवेण्णेयू कळविनिल् उरविडैयाप्पुण्डु * एत्तिरमुरलिनोडु इणैन्दिरुन्देङ्गियवेळिवे ॥

भक्तिसंपत्समृद्धस्य दासजनस्य सुलभ अभक्ताना दुर्लभ - अत एव विस्मयनीय सरसिजवासिन्या श्रिय स्पृहा विषयभूत स्वरूपावलम्बनरा दुष्प्राप अस्मत्स्वामी मन्थदण्डकलमथनसमुत्पन्न नवनीतमोषणनिमित्तेन उर प्रदेशे (अथवा) उदर प्रदेशे बद्धो भूत्वा उलूखलेन सह एक्य प्राप्य खिन्न आसीदिति चरितेनानेन प्रतिपन्नम सौलभ्य हाहन्त कीदृग्विधम्! [ सर्वात्मना विस्मयनीयमिति व्यामुह्यति मुनिसार्वभौम ]

* * * भगवान् सुलभ इत्युक्ते कस्य सुलभ इति पृच्छा ह्यवतरति । सर्वेषा सुलभ इति तु न वक्तु शक्यम् । मणिमाणिक्यादीनि दुर्लभानि सन्त्यपि केषाचित् सुलभानि भवन्ति, ये खलु महासपन्ना । एवमेव भगवानपि भक्ति-सपत्समृद्धाना सुलभ । भक्तौ पर्वभेदास्सन्ति बहव । केषाचिद्भक्तिरङ्कुरदशाया स्यात्। इतरेषा तु पल्लवदशाया स्यात् । अपरेषा तु कोरकदशाया स्यात् । एव नाम दशाविशेषा उच्चावचा हि भक्ते । कीदृशदशापन्नभक्ति-शालिना सुलभो भगवानिति पृच्छा स्यात् । * मित्रभावेन सप्राप्त न त्यजेय कथवन * इति वक्तुर्भगवतो हृदय-मनुरुद्ध्य खलु अत्र प्रतिवक्तव्यम । तथा च अङ्कुरावस्थभक्तिमतामपि सुलभस्स इति वक्तु योग्यम् । भक्त्युत्पत्ते प्राक्तना दशा काचिदस्ति, या त्वद्वेषपदेनोत्यभिधीयते । तस्या वर्तमानानामपि सुलभो भगवानित्युक्ते सत्य भगवन परिपूर्णतृप्तिरुदियात् । यतो हि स अद्वेषवतोऽपि जनान् परमभक्तियुक्ताना स्थाने परिगणयति । भगवानित्युक्ति-मात्रेऽपि 'कोऽसौ भगवान्नाम? कुत्र वर्तते स? किमद्धा त्व त दृष्टवानसि?' इत्येवमधिक्षिपद्भिरेव धूर्तैस्सान्द्रे जगत्यस्मिन् अद्वेषशाली कश्चिदुपलभ्येत चेत्, स प्रह्लादविभीषणनिर्विशेषो हि मन्तव्यो भवति ।

मूले भक्ताना सुलभ इत्यनुक्त्वा भक्तिसंपन्नाना दासाना सुलभ इत्युक्तिदर्शनात् आत्मनस्सप्रतिपन्ना सपत् भक्तिरेवेत्युक्त भवति । रावणेन * त्वा तु धिक्कुलपासनमिति धिक्कृतम्, रामचन्द्रकिङ्करैस्सुग्रीवादिभिश्च्या-श्रित मर्यादा निरालम्ब निभीषणमधिकृत्य * अन्तरिक्षगतश्श्रीमानिति खल्वाह वाल्मीकिर्महर्षि । तदात्वे विभीषण-निष्ठा श्री काऽसिदिति पर्यालोचनीयम । रामदासो भूयासमित्याशसामात्रमेव हि तदात्वे तस्य वर्तते । तावतैव हि स श्रीमानित्यदिश्यत । तथाविधाना सुलभ इत्युक्ते कोऽर्थ? तन्नियोगानुसारेण कार्यकरणमवद्ध इत्यर्थ । विभीषणस्योपसर्पणात्पूर्वम् * तपसा सेतुबन्धन सागरोच्छोषणेन वा । सर्वथा सुसमर्थोऽस्मि सागरस्यास्य लंघने * इत्यवलीलया कथितवान् दाशरथि विभीषणस्वीकरणसमनन्तर सागरतरणविषये विभीषणनिदेश प्रत्यैक्षत, विभीषणश्चाह * समुद्र राघवो राजा शरण गन्तुमर्हतीति । अथ रामो * ममाप्येतद्धि रोचते * इति तस्यैवादेश-मवलम्बयन् सागरशरणागतो प्रावर्तत । * सेनयोरुभयोर्मध्ये रथ स्थापय मेऽच्युत! * इति पार्थेन नियुक्तस्स

सधस्तयाऽकरोदित्यादीनि चरितान्यत्रानुसन्धेयानि। अस्माभि. क्रीतं वस्तु यथा ह्यस्माकं यथेष्टविनियोगार्हं भवति, तथैव भवति भक्तिक्रीतो जनार्दनः। "दूतो भव नः" इति निस्संकोचं नियोज्यश्च खल्वासीदसौ।

अथ, 'इतरेषां दुर्लभ' इति विशेषणं भक्तजनसमाश्वासनाय कल्पते। यदि भगवान् भक्तानामिव अभक्तानामपि तथा विधेयस्स्यात्, तर्हि सुमहान् खलु भवेदपाय.। अनयाऽऽशय अभक्तानां दुरासद इति कण्ठरवेण कथनीयमासीत्। भगवति सानन्तविस्रम्भविरहिता ये, ते खन्निरे। तेषां दुरवगमो दुरधिगमश्च। 'भगवान् न केवलमुपेय., उपायश्चापि' इति दृढाध्यवसायरहिताः अचेतनक्रियाकलापेषु सावनताधियं स्वल्पशोऽपि ये न बिभ्रति परमैकान्तिन., तेषामेवासौ सर्वथा धुरन्धरो शौरीति; साध्योपायसङ्कलनस्सन्नेव स भगवान् कार्यं कर्तुं कुशलस्स्यात्, अन्यथेति धिया अचेतनक्रियाकलापेष्वेवानुरक्तानां तु विषये स्वयमुदासीन एव भवतीति प्रथमपादतात्पर्यं सर्वम्। अर्जुनदुर्योधनाविह स्मर्तव्यौ। उभावपि कृष्णसकाशमायातौ युद्धसाहाय्यलिप्सया। * कृष्णाश्रया. कृष्णबलाः कृष्णनाथाश्च पाण्डवा· * इति प्रथा दुर्योधनपक्षे नैव बभूव। अत्र च महाभारतकथा यथायथमनुसन्धेया।

अथ च विस्मयनीय इति तृतीयं विशेषणं भगवति भूयोभि प्रकारैरस्यितमाश्चर्यावहत्वं नामिव्रैति। प्रकृते यदुक्तं भक्तानां विषये सौलभ्यमितरेषां विषये दौर्लभ्यं चेति, अत्रैव विस्मयनीयता। * देवानां दानवानां च सामान्यमधिदैवतमिति प्रमाणप्रतिपन्नोऽपि भगवान् भक्तेषु विधेयश्च, इतरेषु दुरासदश्चास्तीति विस्मयः।

अथ च [मलर्मकळ् विरुम्बुम्] इत्यनेन विशेषणेन श्रिय.पतित्वमुच्यते। अधस्तनदशकावसाने नारायण इति प्रोक्तम्। अधुना लक्ष्मीपतिरित्युच्यते। शारीरकमीमांसायां तावत् नैकस्मिन्नपि सूत्रे नारायण-नामनिर्देशोऽस्ति; न चापि लक्ष्मीपतिरित्युक्ति। तस्मिन् शास्त्रे निगूहितानां विषयाणामेवंविधानां भूयसाम् अस्मिन् शास्त्रे सुष्ठु प्रकाशनमित्येव विशेषोऽवधेय। अत्र च लक्ष्मीपतिरित्यपि कण्ठतो नोक्तम्; लक्ष्मीस्पृहा-विषयभूत इति तावदुक्तम्। तदिदं चारुतातिशयशालि रसिकभक्तभाषितं मन्तव्यम्। सर्वेऽपि जनाः श्रियं कामयन्ते, सा हि भगवन्तं कामयते इति रसवतो व्याहार। सा चात्र श्रीरितिपदेन वा लक्ष्मीरिति पदेन वा न निर्दिष्टा। अपितु सरसिजवासिनीपदेन निर्दिष्टा। परमसुकुमारे सरसिजकुसुमे कृतनिवासाऽपि सा *पादारुन्तुदमेव पङ्कजरज * इति मत्वा, 'न मे स्थलमिदं शोभनम्, पुष्पहाससुकुमारस्य भगवत उरस्स्थलमेव मम साध्यम्' इत्याकलय्य, तदुपेक्ष्य अत्र महतीमुत्कण्ठां प्रकाशयतीति प्रोच्यते। सा हि भगवतस्सम्बन्धेन स्वस्योत्कर्षं मन्यते। अहह ! मनोरमेयं घटना। * श्रद्धयाऽदेवो देवत्वमश्नुते * इति भगवती श्रुतिराह। तदिदमुपबृंहयति * अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा * इति इतिहासरत्नम्। [श्रद्धया—श्रीमहालक्ष्म्येत्यर्थ.॥]

अथ च [अरुम् पेरल्] इति विशेषणेन दुर्लभत्वमुच्यते। हन्त किमर्थमिदमिदानीमुच्यते? भक्तानां सुलभ इतरेषां दुर्लभ इति तावत्पुरस्तादेव ननूक्तम्। पुनरपि दुर्लभ इति कथने को विशेष इति चेत्; दुर्लभत्व-गिरा 'उत्तमोत्तमं वस्तु' इत्येतावदेव प्रत्याय्यते। लक्ष्मीसनाथत्वकथनसमनन्तरं ह्येतदुच्यते। दीप्त्या खलु रत्न-मुत्कृष्यते। भगवान् रत्नम्; श्रीस्तु दीप्तिः। श्रीयोगेन भगवतो य अतिशय उत्पन्न, स तावदत्रानुसन्धीयत इति प्रतिपत्तव्यम्। अथ च अस्मत्स्वामीति विशेष्यनिर्देश। दिव्यदम्पत्योरभिमाने वर्धमाना वयमिति सन्तोषसीमोक्ति·।

गाथायामस्यामनुसंधित्सितस्य सौलभ्यस्य सम्यगुपपादनाय भगवत कृष्णकिशोरस्य चर्याविशेष. प्रस्तूयते। भगवतो नन्दनन्दनस्य नवनीते महती समुत्कण्ठेति जानीमहे। अस्तु। नवनीतचोर इति गव्यमोषक इति च

प्रथाऽस्य समजनि । किमर्थमनेन स्तेयं कर्तव्यमिति विचार आवश्यकः । नवनीतं मे प्रदेहीति यद्ययं मुक्तकण्ठं काङ्क्षेत्, तर्हि कृत्स्नोऽपि व्रजः कृत्स्नमपि गव्यं सादरं सबहुमानं चास्मै यावच्छक्ति प्रदातुं सन्न एव ननु। कृष्ण एव परं दैवमित्यध्यवस्यति व्रजे सर्वस्वदानसमुत्सुके मोषणप्रसक्तिरेव नास्त्यस्येति किंनु वक्तव्यम्? कुतस्तर्हि सोऽयं नवनीतचौर्ये प्रवृत्त इति पर्यालोचनायामिदं व्यक्तीभवति - नवनीतममुं कण्ठा व्याजमात्रम् । चौर्यापराधनिमित्तेन बद्धो भवानीति भृशमुत्कण्ठितोऽसौ, प्रार्थनया गव्यमुपलभ्य यद्ययमश्नीयात्तर्हि उलूखलबन्धादिशिक्षाप्रसक्तिर्नैव स्यात् खलु । स्वकीयमत्यन्तविधेयत्वं प्रदर्शयितुं ह्यस्य महती रुचिः । तस्करवृत्तिमन्तरा तन्न सुकरमिति मेने । अत एव * मुहुः प्रवृत्तं नवनीतचौर्ये वत्सान् विमुञ्चन्तमदोहकाले * (यादवाभ्युदये) इत्युक्तरीत्या गव्यमोषणादिषु दुश्चरितेषु बहुषु प्रववृते । अस्मादृशां संसारबन्धमोक्षणविचक्षणोऽयं महापुरुषः स्वकीयं बन्धं स्वयं विमोचयितुमशक्तस्ताम्यति हा वतेति महामनीनामपि चित्तं द्रवयितुं बन्धस्थितिं स्वयमेव स्पृहयते स्म ।

कृष्णो मुष्णातीति सविशङ्का यशोदा 'यदाऽयं हस्तगतो भवति तदा बद्धव्य' इति धिया गृहे तत्रतत्र दामानि निगुह्य निक्षिपेत् । कृष्णस्तु तद्विदित्वा (गव्यमोषणप्रवृत्तेः प्राक्) दामानि तानि शिथिलयित्वा तदनु मोषणे प्रवर्तेत । अदसीयासु लीलासु इदमप्यन्यतमं ध्येयम् । रहसि मुषित्वा भुक्त्वा परैरगृहीत एव सन् अन्यतो गन्तुं समर्थोऽप्यसौ बन्धलोलुपतायैव मातुश्चक्षुर्गोचरो ग्रहणविषयश्च जोभवीति । कदाचन मातुश्चक्षुर्गोचरोऽपि सन् अग्राह्य एव धावति च । तदास्तां नाम । यदा गृहीतो भवति तदा * उलूखले कुत्रचिदात्तपुण्ये बन्धुं सुतं बन्धुमियेष माता * (यादवाभ्युदये) इत्युक्तरीत्या बन्धं प्रापयितुमिच्छन्ती माता करेणैकेन गृहीत्वाऽमुं रज्जुमादातुं प्रयतते । अथ पश्यति च सा दाम्नां शिथिलीकृतत्वम् । बन्धनाद्भीतेन कृष्णडिम्भेनैव कृतमिति च प्रतिपद्यमाना सा त्वामद्य दाम्ना बद्धं करिष्याम्येवेति कथयन्ती शिथिलीकृतानां दाम्नां सन्धाने प्रयतते । एकेन करेण कृष्णं गृहीत्वा अपरेण करेण दामग्रन्थने प्रवर्तते सा । कथञ्चित् प्रग्रथितया दाम्ना बन्धने समुद्युक्तायां तस्याम्, मायामानुषविग्रहः कृष्णः स्वात्मनो देहं पृथूकरोति यथा वा तया दाम्ना बन्धो न सुशकः स्यात् । सा च तदात्वे बन्धनमशक्यं विदन्ती 'अद्य गच्छतु तावदयम्' इति विमोक्तुमिच्छति । तदवबुध्य कृष्णो 'हन्त ! बन्धप्राप्त्यर्थमेव खलु मया मोषणं कृतम्, तदधुना अवश्यं बद्धो भवानि' इत्यध्यवस्यन् पृथूकृतं स्वशरीरं स्वयमेव कृशीकरोति । * अणोरणीयान् महतो महीयान् खल्वेष । तदात्वे शक्यबन्धन एवायमिति मत्वा यशोदा * दाम्ना चैवोदरे बध्वा प्रत्यबध्नादुलूखले * इति पुराणश्लोकरीत्या ससन्तोषमिमम् उलूखले निबद्धमारचयति । अत्रैव यादवाभ्युदयश्लोकोऽनुसन्धेयः —* आनीतमग्रे निजबन्धनार्थं दामाखिलं संहितमप्यपूर्णम् । विलोक्य निर्विण्णधियो जनन्याः सकोचशक्त्या स बभूव बध्यः ॥ * इति । एवं नाम बन्धनमुलूखले प्रापितोऽयं कृष्णकिशोरः परमानन्दकन्दलितस्वान्तोऽपि सन् प्राकृतजनवत् परितापमभिनयन् प्रलपति विलपति, मात्रा बिभीषितो मुक्तकण्ठं विलपितुमशक्तस्ताम्यति च । तादृशीं दशामनुसन्दधानो मुनिवरोऽसौ [ * एत्तिरमुरल्लिनोडु इणैन्दिरुन्देङ्गियवेळिवे * ] इति तस्मिन् सौलभ्ये विद्धहृदयस्सन्नवसीदति । अत्र चैतदैतिह्यमनुसन्धेयम्—इमां गाथामभिगाय शठकोपमुनीन्द्रोऽयं मासषट्कं व्यामुग्ध आसीदिति । तदिदं सूचितं च श्रीकूरनाथगुरुवर्यैरतिमानुषस्तवे—* त्वामयगोपगृहगव्यमुपः यशोदा गुर्वी त्वदीयमवमानममृष्यमाणा । प्रेम्णाऽथ दामपरिणामजुषा बबन्ध तादृक्न ते चरितमार्यजनास्सहन्ते ॥ * इत्यनेन पद्यरत्नेन । अत्र च 'आर्यजना' इतिपदं श्रीशठकोपमुनीन्द्राभिप्रायकम् । 'न सहन्त' इत्येतत् व्यामुग्धत्वप्रतिपादकम् ॥ .... ... ... (१)

(गाथा.) एळिवरु मियलविनन् निलै वरम्बिल पल पिरप्पाय् *
ओळिवरु मुळुनलम् मुदलिल केडिल वीडाम् *
तेळिवरु निलैमयदोळिविलन् मुळुवदुमिरयोन् *
अळिवरु मरुळिनोड्ड अहत्तनन् पुरत्तननमैन्दे ॥ २ ॥

सौलभ्यैकस्वभावः, व्यवस्था नियमं च हित्वा नानायोनिषु जायमानः, तादृशेन जननेन मालिन्यलेशमप्यनुद्वहन् शाणोल्लीढमणिवदत्यन्तमौज्ज्वल्यमधिवहद्भिः उत्पत्तिविनाशविरहित-नित्याभिव्यक्तशुभगुणैः सदा विभासुरः, मोक्षाख्यपुरुषार्थस्थानविशेषप्रदस्वरूपं स्वैकान्तिकं स्वभावं कदाऽप्यविजहत् निर्हेतुककृपाविशिष्टस्सन् अन्तरङ्गभक्तानामत्यन्तसन्निकृष्टः बहिरङ्गज-नानां दवीयांश्च भवति भगवान् ॥

अधस्तनगाथाया गोपालचूडामणे कृष्णस्य नवनीतस्तेये सैवन्धन दामबन्धनमनुसन्दधतः मुनिसार्वभौमः षण्मासानपि व्यामुग्ध एवासनस्थे इति सम्प्रदायपरम्पराप्राप्तमेतत्क्षमाचार्या विलिलिखु । श्रीकूरनाथगुरुचरणाश्च अतिमानुषस्तव—* ग्रामस्यगोपगृहगव्यमुष यशोदा गुर्वी त्वदीयमवमान ममृष्यमाणा । प्रेम्णाऽथ दामपरिणा-मजुषा बबन्ध तादृक्न ते चरितमार्यजनास्सहन्ते ॥ * इति यदनुजगृहु तत्र "तादृके चरितमार्यजना न सहन्ते" इत्येतत् उक्तमैतिह्यमेव स्मारयति । अत्र आर्यजना इत्यनेन श्रीशठकुशमुनीन्द्रा एव विवक्षिता, इति प्रथमगाथाटीकायामवोचाम । एवं षण्मासान व्यामुह्य स्थितो मुनिवरः कालपाकेन प्रबुध्य, अधस्तन-गाथायां स्वात्मना भगवान् भक्तसुलभ इति कीर्तितोऽभूदिति विज्ञाय, भक्तसुलभ इति कथनं नोचितम्, लोके परत्वसीम्नि स्थितानां चक्रवर्तिप्रमुखानामपि तदेदं भक्तजनसौलभ्यं कदाचिद्भवेत कामम्, भगवति नैव वक्तव्य-मिति प्रतिपद्यमानः सौलभ्यैकस्वभाव इति विशिष्य कथयते । क्षेत्रेषु जनानां सुलभः इति कथने किमस्ति वैभवम्? सौलभ्यमेवास्य स्वाभाविको वेष इति हृदयम् । भगवान्‌ यदा भक्तेषु सौलभ्यसौशील्यादिगुणान् प्रकाशयति, तदा अनुभोक्तारो रसिका मन्यन्ते 'अस्य परत्वमागन्तुकमेव' इति ।

अथ [व्यवस्थां नियमं च हित्वा नानायोनिषु जायमानः] इत्यत्र निर्वाहभेदोऽवधेय । 'अमुके योनौ जायेय, अमुक योनौ न जायेय' इति व्यवस्थाविरहेण * पिता पुत्रेण पितृमान् योनियोनौ * इति काठकश्रुत्याम्नातरीत्या सर्वास्वपि योनिषु प्रादुर्भावो य स व्यवस्थाविरहेण जननम्, 'अमुकं चेष्टितं करवाणि, अमुकं चेष्टितं न करवाणि' इति संकल्पभिदाविरहेण निर्विशेषं सर्वचेष्टितकरणेन (चेष्टिते) नियमाभाव —इति प्राचामाचार्याणां निर्वाहः । श्रीपराशरभट्टार्यास्तु—प्रोक्तमर्थद्वयमपि * व्यवस्थां हित्वे-त्यत्रैवोपन्यस्य, अथ नियमं च हित्वेत्यस्य 'अवतीर्य सुलभताप्रकाशनावसरे परत्वस्यापि प्रकाशनम् नियम-प्रहाणम्' इत्यन्वगृह्णन्, पार्थसारथिर्भूत्वा नैच्यं प्रकाशयन्नपि विश्वरूपप्रदर्शनमप्यकरोत् खलु, * पुत्रीयया किल वर वत्रे वृषाङ्कादिःपुरुरीत्या वृषध्वजसकाशे पुत्रवर याचमानोऽपि सन् घण्टाकर्णाय मोक्षं प्रददौ खलु, एवमाद्यश्चर्यविशेषा भट्टपादहृदि स्थिताः ॥

[**नानायोनिषु जायमानः**] संसारिणो वयमपि नानायोनिषु जायामहे, * पिता पुत्रेण पितृमान् **योनियोनौ** * इति उदाहृतचर काठकश्रुत्याम्नातरीत्या भगवानपि नानायोनिषु जायते, अस्माकं जननं कदाचिद्विरमति, भगवतो जननं तु न कदाऽप्युपरमति; किं कारणम्? अस्माकं जन्मनो हेतुः पुण्यपापरूपं कर्म; भगवतो जन्मनो हेतुः करुणा। * तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति * इत्याम्नातरीत्या अस्मदीयस्य कर्मणः कदाचिद्विधूननसमवेन कर्मनिबन्धनस्य जन्मनो विनाशसम्भवति, भगवज्जनन-हेतुभूताया करुणाया कदाऽपि विनाशावकाशविरहेण तादृशकरुणानिबन्धनजन्मन कदाऽप्युपरतिर्न भवति। तथा च **नानायोनिषु जायमान** इति वर्तमानार्थकशानजन्तप्रयोगस्सुशोभनः। अथ [**तादृशेन जननेन मालिन्यलेशमप्यनुद्वहन्**] इति। संसारिणो वयं तु कर्महेतुकैर्जन्मभिर्मालिन्यमश्नुमहे, भगवांस्तु नैवम्, * स उ श्रेयान् भवति जायमानः * इति हि श्रुतिराम्नाति। श्रुतेरस्याः स्वादीयानर्थोऽवधीयताम्। * स उ श्रेयानित्यत्र, उः—अवधारणार्थकः। [प्रणवे इव.] अयमुकारः कुत्रान्वेति? स, श्रेयान्, भवति, जायमान इत्येतेषु चतुर्ष्वपि पदेषु अव्याहतान्वय एव। स एव जायमानः श्रेयान् भवति। स जायमान एव श्रेयान् भवति। स जायमानः श्रेयानेव भवति, स जायमानः श्रेयान् भवत्येव—इत्थं नाम चतुर्विधोऽप्यन्वयश्चारुतरः। सत्यप्यन्वयचातुर्विध्ये निष्पद्यमानोऽर्थस्त्वेक एव। स एवार्थः समनन्तरमेव मुनिवरेणैव स्वयं प्रपञ्च्यते [**शाणो-ल्लीढमणिवदत्यन्तमौज्ज्वल्यमधिवहद्भिः**] इत्यादिना। जन्मसु जन्मसु गुणोत्कर्षमप्रमेयमवाप्नोति भगवा-नित्युक्तं भवति॥

अथ [**मोक्षाख्यसुप्रसन्नस्थानविशेषप्रदत्वरूपं स्वसैकान्तिकं स्वभावं कदाऽप्यविजहत्**] इत्यनेन विशेषणेन मोक्षप्रदत्वं भगवतोऽसाधारणमहिमेति सम्प्रदायसरण्याम् अत्यन्तमन्तरङ्गभूतोऽर्थः प्रकाश्यते। * यतो वा इमानि भूतानि जायन्ते। येन जातानि जीवन्ति। यत्प्रयन्त्यभिसंविशन्ति, तद्ब्रह्म * इत्युपनिषदा, * जन्माद्यस्य यतः * इति ब्रह्मसूत्रेण च सृष्टिस्थितिसंहाराख्यं कृत्यत्रयमेव परस्य ब्रह्मणः प्रत्यपादि। भगवान् यामुनार्यः स्तोत्ररत्ने * त्वदाश्रिताना जगदुद्भवस्थितिप्रणाशसंसारविमोचनादयः * इत्यनया सूक्त्या मोक्षप्रदत्वरूपं संसारविमोचनमपि सृष्टिस्थितिसंहारैस्सह समयोजयत्। श्रीभाष्यमङ्गलश्लोके * अखिलभुवनजन्मस्थेमभङ्गादि-लीले * इत्यादौ * विनतविविधभूतव्रातरक्षैकदीक्षे * इति द्वितीयपादेन मोक्षप्रदत्वं पृथगुक्तम्। पूर्वत्र भङ्गादी-त्यत्र आदिपदेन मोक्षप्रदत्वस्य ग्रहीतुं शक्यत्वेऽपि * अन्तः प्रविष्टः शास्ता जनानां सर्वात्मा * इत्युपनिषदुक्त-अन्तःप्रवेशनियमने आदिपदग्राह्ये भूयास्ताम्, मोक्षप्रदत्वं तु कण्ठत एव वक्तव्यमित्याशयेनैव द्वितीयपादेन प्रत्येकशः तदनुगृहीतम्। अत्र श्रुतप्रकाशिका ससेव्या। एवं नाम यामुनार्योक्तौ श्रीभाष्यकारोक्तौ च निदानम् प्रकृतगाथासूक्तिरेवेति सत्सम्प्रदायवृद्धाः। मोक्षस्य सुप्रसन्नस्थानत्वेन व्यपदेशः प्राकृतभूमेरस्याः कलुषमयत्वं स्मारयति॥ शेषं सुस्पष्टम्॥ (२)

(गाथा.) अमैवुडै यरनेरि मुल्लवदु मुपर्वर वुयन्दु * अमैवुडै मुदल्केडन्द्र् ओडिविडै यर निलमदुवाम् *
अमैवुडै यमररुम् यावैयुम् यावरुम् तानाम् * अमैवुडै नारणन्मायैयै अरिपवर्यारे॥ ३॥

सातिशयान् धर्ममार्गानशेषान् अविकलमनुष्ठाय सर्वोत्कर्षेण विराजमानानाम् सृष्टिसंहारावान्तरसंहारकार्येष्वत्यन्तकुशलानां ब्रह्मादिदेवानाम् अथ च सर्वेषामपि चेतनाचेतनवस्तूनां वाचकाः शब्दा यस्मिन् भगवति पर्यवस्यन्ति, एतादृशातिशयवतो भगवतो नारायणस्य आश्चर्यशक्तियोगं को वा जानाति हन्त! ॥ (न कोऽपि ज्ञातुं प्रभवतीति यावत्।)

भगवतोऽवताररहस्य कस्यापि बुद्धेरगोचर इत्युच्यते गाथयाऽनया। [redacted] भगवान् कीदृश इतिचेत्, सर्ववस्तुसामानाधिकरण्यार्ह इत्यभिधीयते। लोके यस्यकस्यापि वस्तुनो वाचको य कोऽपि शब्द अपर्यवसानवृत्त्या भगवद्वाचको भवतीति वेदान्तिना सिद्धान्त। ब्रह्मरुद्रादीना वाचका शब्दा अपि भगवति नारायण एव पर्यवस्यन्तीति विवक्षु मुनिवर प्रथमतस्तान् ब्रह्मादिदेवान् प्रस्तौति। ते विशेष्यन्ते सातिशयान् धर्ममार्गानशेषाननुष्ठायेत्यादित। * युगकोटिसहस्राणि विष्णुमाराध्य पद्मभू। पुनस्त्रैलोक्यधातृत्व प्राप्तवानिति शुश्रुम॥ *महादेवस्सर्वमेधे महात्मा हुत्वाऽऽत्मान देवदेवो बभूव॥ * इत्यादि प्रमाणशतप्रतिपादितरीत्या अतिशयितान् धर्ममार्गानशेषाननुष्ठाय सर्वोत्कर्षेण विराजमानास्ते अमरप्रवरा। पुन कीदृशास्ते? सृष्टौ संहारे अवान्तरसंहारे च भगवदाज्ञाबलेन प्राप्ते सति, तन्निर्वाहे अत्यन्तकुशला। 'किमेतानि कृत्यानि परमपुरुषेणैव कृतानि?' इति शङ्कितु योग्यतया तत्तत्कार्यनिर्वाहनैपुणा इति यावत्। तत्तत्कार्यनिर्वहणे ते निपुणा भवन्ती युक्त भवति। तेषा वाचका शब्दा भगवति पर्यवस्यन्ति। भगवत्पर्यन्ताभिधायकास्ते ते शब्दा इति यावत्॥

न केवलमेतावदेव, तादृशदेवताविशेषवाचका चेतन वाचकाश्च तथा निखिलचेतना शब्दा अन्ततो य परमपुरुषमभिधाय विश्राम्यन्ति, तत्तादृशवैभवशालिनो भगवतो नारायणस्य अवतार रहस्य न कोऽपि ज्ञातुमीष्टे। सर्वथा स्वप्रकारभूतेषु प्राणिषु अन्यतमेन केनचित्प्राणिना मदीयोऽय पुत्र इत्यभिमन्तु योग्यतयाऽवतीर्णस्य तस्य अवताररहस्य विपुलविज्ञानशालिनामपि दुरवबोधमित्युक्त भवति। अत एव गीतायाम् अवताररहस्याध्याय इति प्रसिद्धे चतुर्थाध्याये * जन्म कर्म च मे दिव्यमेव यो वेत्ति तत्त्वत। त्यक्त्वा देह पुनर्जन्म नैति मामेति सोऽर्जुन॥ * इति स्वेनैव गीयते स्म। * पिता पुत्रेण पितृमान् योनियोनौ। नावेदविन्मनुते त बृहन्तम् * इति श्रुत्यर्थो गाथयाऽनया विवृतोऽभूदिति प्रतिपत्तव्यम्॥ मूले "नारायणस्य आश्चर्य शक्तियोग को वा जानाती" त्यनेन वाक्येन विवक्षितम् अवतार रहस्यज्ञानस्य दुरवगमत्वमेव॥ को वा जानातीत्यत्र आचार्याणा मेव रसघन सूक्तिविन्यास,—नित्यमुक्ता परत्वानुभवनिरतास्सन्तो न जानन्त्येतत्, संसारिणो नास्तिक्येन न विदन्ति, ब्रह्मादयो देवास्तु अवलेपभूम्ना नावबुध्यन्ते। पराङ्कुशादिसूरिवराणा [redacted] व्यामोहो बोधप्रतिबन्धको भवति। स्वतस्सर्वज्ञस्सर्वेश्वरोऽपि * सो अङ्ग वेद यदि वा न वेद * इति श्रुत्याम्नातरीत्या सदेग्धि केवलम् इति॥ (३)

(गाथा) यारुमोर्निलैमैयनेन अरिवरिय वेम्बेरुमान् * यारुमोर्निलैमैयनेन अरिवेळियवेम्बेरुमान् *
पेरुमोरायिरम् पिरपल वुडैयवेम्बेरुमान् * पेरुमोरुरुवुम् उळदिल्लै यिलदिल्लै पिणक्के॥

अतिशयितज्ञानवतामपि सताम् इत्थंभूतोऽयमिति स्वयत्नेन निर्धारयितुमशक्यः, निजनिर्हेतुकानुग्रहलक्ष्यभूताना जघन्यजनानामपि सता निर्धारयितुं शक्येन स्वभावेन

विशिष्टः, परस्सहस्रैर्नामभिः तदनुगुणरूपविशेषैश्चोपलक्षितोऽस्मत्स्वामी नामरहितो रूपरहित इति केषाञ्चित्प्रतिपत्तिभाजनम्; नामरूपविशिष्ट एवेति वैदिकानां प्रतिपत्तिभाजनम्। अत्र हन्त! नित्यमनुवर्तते विवादः ॥

श्रीपराशरभट्टार्या श्रीरङ्गराजस्तवोपक्रमे * अस्ति वस्तिदमित्थत्व प्रसङ्ख्यानपराङ्मुखम्। श्रीमत्यायतने लक्ष्मीपदलाक्षैकलक्षणम् ॥ * इत्यनुजगृहुर्यत्, तदस्या गाथाया प्रथमपादसमीक्षया। इदत्वेन इत्थंत्वेन च प्रसङ्ख्यातुमयोग्य वस्तु यत्, तत् तुच्छमेव खलु भवितुमर्हतीति नाशङ्कनीयम्, तादृशशङ्काव्युदासायेव हि * अस्तीत्युपक्रान्तम्। सदेव वस्तु स्वरूपरूपगुणविभूत्यादीनाम् आनन्त्यात् उत्तुङ्गताभूम्ना च अस्मादृशामितम्पचमतीनाम् इदत्वेन इत्थत्वेन च प्रसङ्ख्यातुमशक्य भवति। भगवद्यामुनार्या स्तोत्ररत्ने * नमो नमो वाङ्मनसातिभूमये नमो नमो वाङ्मनसैकभूमये * इतिपूर्वार्धे निबध्य, एनेन पादद्वयेनोक्तमर्थं स्वयमेव व्याचक्षते उत्तरार्धेन * नमो नमोऽनन्तमहाविभूतये नमो नमोऽनन्तदयैकसिन्धवे * इति। अत्रेद विमृश्यते मनाक्। अपरिच्छेद्यमहाविभूतिकत्वेन हेतुना वाङ्मनसातिभूमिर्भवति भगवान्। अनन्तदयैकसिन्धुत्वेन हेतुना वाङ्मनसैकभूमिश्च स भवति। * यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह * यद्वाचानभ्युदितम् * इत्यादिष्वभिप्रेत परमयोगिनामपि वाङ्मनसाभ्याम परिच्छेद्यत्व यदस्ति भगवद्विभूतीनाम्, तत्तस्य परस्य पुसो वाङ्मनसातिभूमित्व जनयति। गोपगोपिकादीनामपि वाङ्मनसयोरेकभूमित्व यदस्य समजनि, तत् तदीयाप्रतिमपरमकृपाबलप्रयुक्त भवतीति भाव। एवमेवात्रापि **अतिशयितज्ञानवतामपि मताम् इत्थंभूतोऽयमिति स्वयत्नेन निर्धारयितुमशक्य** इति कथनम् अपरिच्छेद्यविभूतिकत्वप्रयुक्तम्, भगवदनुग्रहपात्रत्वविरहप्रयुक्त वा भवितुमर्हति। * समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभम्, भक्तजनैरदुर्लभम् * इति श्रीकूरनाथगुरुवरसूक्तिश्चात्रानुसन्धेया वरदराजस्तवीया। * दाशाय कीशाय च राक्षसाय * इत्युक्तरीत्या, * निषादाना नेता कपिकुलपति काऽपि शबरी कुचेल कुब्जा सा व्रजयुवतयो माल्यकृदिति * इत्युक्तरीत्या च क्षोदीयाम इति भावयितुमर्हाणा गुहादीनामपि हि सुलभस्सुगमश्च समभूद्भगवान् ॥ * नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम * इत्यौपनिषदी सरस्वती चात्र साक्षिणी शोभतीति।

[**परस्सहस्रैर्नामभिः तदनुगुणरूपविशेषैश्चोपलक्षितः**] महाभारते भीष्म प्राह—* सहस्रास्यस्सहस्राक्ष सहस्रचरणो विभु। सहस्रबाहुस्सर्वज्ञो देवो नामसहस्रवान् ॥ इति। कल्याणगुणवत्ताप्रकाशकत्वेन स्वरूपवाचकत्वेन च प्रथमानानि भगवन्नामानि परस्सहस्राणि, तत्तन्नामावबोधितानि रूपाणि च तथा। एव सत्यपि भगवदनुग्रहपात्रताविरहितैः विमतजनैः हन्त! नामरूप विरहितत्वेन प्रतीयते। अत्र यद्यपि विमताना विवादोऽस्ति, परमैकान्तिना तु नैव विवादगन्धोऽपि ॥ (४)

गाथा) पिणक्कर् अरुवहैचमयमुम् नेरियुळ्ळि युरैत्त * कणक्करु नलत्तनन् अन्दमिलादि अम्भगवन् * वणक्कुडै त्तवनेरि वळिनिन्रु पुरनेरि कळैकट्टु * उणर्न्दुमिन् मनैयर अवनुडै युणर्वुकोण्डुणर्न्दे ॥

वैदिकसमयविप्रतीपाना सांख्ययोगकाणादजैनबौद्धपाशुपताख्यानां षण्णा दर्शनाना वैदिकसमयेन सह स्थितस्य विरोधस्य शमनार्थम् असंख्येयकल्याणगुणगणशालिना अपरिच्छिन्नै-

भवशालिना जगन्निदानभूतेन च भगवता परमात्मनाऽवतारिते गीताशास्त्रे निष्णातास्सन्तो भो जनाः! तत्प्रोक्तभक्तिमार्गे प्रतिष्ठिता भूत्वा विषयान्तरसङ्गं सवासनं विहाय तस्य परमात्मनो भजनप्रकारं बुध्वा प्रकृतिसंबन्धं सवासनं शोषयत॥ [इति परेभ्य उपदिशति ॥]

गाथायामस्यां गीताशास्त्रं प्रमाणीक्रियते। * वेदेषु पौरुषं सूक्तं पुराणेषु च वैष्णवम्। भारते भगवद्गीता धर्मशास्त्रेषु मानवम्॥ * इत्युक्तप्रक्रियया महाभारतमात्र सारभूतं न गीताशास्त्रम्; अपि तु सर्वोपनिषत्सारभूतं च प्रथते। सङ्ग्राहकशास्त्रेभ्योऽपि अङ्गाहकशास्त्रस्य अभ्यर्हितत्वात् भगवता वासुदेवेन स्वयमवतारितमिति हेतुना विशिष्यते चैतद्गीताशास्त्रम्। तदिदमस्यां गाथायां कस्मिन्नंशे प्रमाणीक्रियत इतिचेत्; अथस्तनगाथाप्रस्तुतो विवादो न प्रामाणिक इत्यंशे, भजनोपायबोधनांशे च। बाह्यसमयपटकस्य वैदिकसमयेन सह विरोधो वर्णन इत्येतत् सुप्रसिद्धमेव ननु वेदान्तिनां समाजे। भगवद्गीताप्रपञ्चितार्थसार्थत बाह्यदर्शनार्थ प्रत्याख्यानसंभवेन विरोधशमन जायत इत्यभिसन्धि। तथाच बाह्यदर्शनार्थ निरासक गीताशास्त्र प्रदायकत्वरूपं वैभवमिह भगवतः प्रतिपादितं भवति। स भगवान् कीदृश? [कणकरु नलत्तनन्] असंख्येय कल्याणगुणगण विभूषितः। अथवा अपरिच्छेद्यप्रेमभरित। * न काङ्क्षे विजयं कृष्णेत्यभिधाय विसृज्य सशरं चाप रथोपस्थ उपविष्टः पाण्डुतनयो यद्यपि * पृच्छामि त्वां धर्मसंमूढचेताः शिष्यस्तेऽहं शाधि मां त्वां प्रपन्नम्। यच्छ्रेयस्स्यान्निश्चितं ब्रूहि तन्मे * इति प्रार्थितवान्, तथाऽपि अधुना गीतायामुपलभ्यमानानां मुपायविशेषाणा मशेषा मुपदेष्टव्यता स मनसाऽपि नाकलयतिस्म; तस्य युद्धप्रोत्साहनार्थं यावदुपदेष्टव्यम्, न हि खलु तावदेवोपदिष्टमिह; तत्तदधिकारानुरूपाणां भूयसामुपायानां यदस्ति प्रतिपादनमिह, तत्सत्वमस्मादृशेषु संसारिषु प्रेमपारवश्यादेव खलु; तदेव सूच्यते अपरिच्छेद्यप्रेमभरितत्व विशेषणेन।

स भगवान् पुन कीदृशः? भगवच्छब्दवाच्यत्वेन अपरिच्छिन्नवैभवशाली, जगन्निदानभूतश्च। "निदानं त्वादिकारणम्।" एतादृशेन भगवताऽनुगृहीते अध्यात्मशास्त्रनलुजे श्रीमति गीताशास्त्रे * मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम्। कथयन्तश्च मां भक्त्या तुष्यन्ति च रमन्ति च॥ * मन्मना भव मद्भक्तो मद्याजी मां नमस्कुरु। मामेवैष्यसि युक्त्वैवमात्मानं मत्परायण॥ * इत्यादित प्रतिबोधिते तपोरूपभक्तिमार्गे निष्णाता भूत्वा विप्रतीपमार्गश्रद्धाव्युदसनपूर्वकं व्याप्रियध्वम्। * विषया विनिवर्तन्ते निराहारस्य देहिनः। रसवर्जं, रसोऽप्यस्य परं दृष्ट्वा निवर्तते॥ * इति गीतोक्तरीत्या परमपुरुषदर्शनन्तरभाविनिवृत्तिको रसोऽपि यथा नाम अत्रैव शुष्येत्तथा व्याप्रियध्वम्॥ . . ... .. (५)

(गाथा.) उणर्न्दुणर्न्दु इळिन्दहत्त उयर्न्दुरु वियन्द विम्मिलैमै *
उणर्न्दुणर्न्दु उणरिलुम् इरैनिलै युणर्वरिदुयिर्हाळ् *
उणर्न्दुणर्न्दु उरैत्तुरैत्तु अरियय नरनेच्चु मिवरै *
उणर्न्दुणर्न्दु उरैत्तुरैत्तु इरैञ्जुमिन् मनप्पट्टदोन्रे॥ ६॥

ज्ञातृत्वैकस्वरूपम् ज्ञानतस्सर्वगतम् प्रकृतिविनिर्मुक्तस्वरूपं(जीवात्मस्वरूपम्) यद्यपि यथायथं विशदमवबोद्धुं शक्येत, तथाऽपि आश्रयणरुचिशालिभक्तजनसमाश्रयणीयत्वा

ण्यादिरूपेणावतीर्णः स एष सर्वेश्वरो ब्रह्मा वा? शिवो वा? नारायणो वा? इति संदेहमपहाय निष्कृष्टार्थावबोधनम् असुलभम्। तर्हि का गतिरिति चेत्, हरिः अजः हर इत्येतास्तिस्रो देवता अधिकृत्य बहुशास्त्रश्रवणमननान्याकलयत। तथा करणे एकैव देवता संप्रतिपन्नसर्वेश्वरत्वेन भायात्; अथ तामाश्रयत ॥

सूरिवरस्यास्योपदेशं शृण्वतां संसारिणामियं पृच्छा समजनि—भगवन् मुनिसार्वभौम! अवतारे समाश्रयतेत्युपादेशि तत्रभवता, * मध्ये विरिञ्चगिरिशं प्रथमावतार * (श्रीरङ्गराजस्तवे) इत्युक्तरीत्या ब्रह्मरुद्रयोर्मध्ये अवतरणं प्रथमावतरणं श्रूयते, तत्र त्रयो देवास्तुल्यकार्यत्रयाविष्कृता इति हेतुना त्रयोऽपि देवाः प्रधानभूताः किमु? त्रिष्वेकः प्रधानतमः किमु? उताहो त्रिभ्योऽप्यन्यः कोऽप्यभ्यर्हितः? इत्येवमेव संदेहा उपजायन्ते नः, निस्संदेहं निष्कृष्य संप्रतिपन्नदेवताश्रयणेन समुज्जीवितुमशक्तानामस्माकं परदेवतापारमार्थ्यनिष्कर्षपूर्वकम् आश्रयणीयं वस्तुनिर्देशं किं न क्रियेत तत्रभवतेति। तत्रोत्तरमुदीर्यते गाथयाऽनया। 'प्रत्यक्षपरिदृश्यमानो देह एवात्मा' इत्येवंविधं भ्रममपहाय देहातिरिक्त किमप्यात्मवस्तु अस्तीत्यवबोधो न सुलभः, कथञ्चित्तत्सौलभ्ये सञ्जातेऽपि, ब्रह्मरुद्रादिशरीरकस्य सर्वान्तर्यामिणस्सर्वेश्वरस्य प्रक्रिया दुरवबोधा कामम्, शृणुत, यूयं न तावदचेतनाः, चैतन्यफलभूतायां विवेकशक्तौ किमहो प्रयोजनं नार्जनीयम्? ननु भवन्त एव विविञ्चताम्। हरिश्च अजश्च हरश्चेति देवतात्रितयस्य स्वरूपं स्वभावं च श्रवणमननादिभिस्सम्यक् परिशीलयत, तथा नाम परिशीलने कृते 'वेदापहारगुरुपातकाद्यापदाश्रयभूतं देवताद्वितयम्, तत्तादृशापद्विमोचनमहिष्ठफलप्रदानादिभिरनन्यसामान्यरक्षणक्रियास्पदभूतो देवताविशेषः' इति स्वत एव मनसि भायात्, पक्षे पननमन्तरं, मनसि स्फुरन्तीमेकां देवतामाश्रयत। सा च नारायण एव—इति ॥

अत्र केचित्प्रलपन्तितिष्ठन्ते गुरुकुलवासविमुखाः, "श्रीमन्नारायण एव युष्माकमाश्रयणीया देवता" इति सुदृढमवधार्य प्रतिपादयितव्ये तथा प्रतिपादनमुत्सृज्य मनसि प्रतिभातां कामपि देवतां समाश्रयतेति प्रतिपादनमिह सूरिवरस्यास्य तटस्थतां पिशुनयति, एवंस्थिते तत्त्वे नारायणपारम्यप्रतिपादनपरत्वेन व्याख्यानमभिमानकल्पमिति। इदमिहावधेयम्। श्रीशठकोपमुनीन्द्रस्य चतुर्ष्वस्य दिव्यप्रबन्धे, गतेषु त्रिषु प्रबन्धेषु श्रीमन्नारायणस्यैव परत्वं भूरिशो निर्णीतम्। अस्यामपि सहस्रगीत्याम् अधस्तादुपरिष्टाच्च स एष निर्णयो निराबाधः। एवं च प्रबन्धुरभिसन्धेरनुरूपतयैव व्याख्येयत्वात् विप्रतीपव्याख्यानमुत्सृष्टमिति सर्वथा साधु। प्रामाणिकानां मतानां सूक्तिवैखरी तावदुच्चावचा, तास्वियमन्यतमेति प्रतिपत्तव्यम्। समनन्तरगाथाश्चैनमर्थं व्यवस्थापयन्तीति प्रेक्षितव्यं प्रेक्षकैः। अष्टमगाथायाम् "श्रियः पत्युरस्मत्स्वामिनः श्चरणारविन्दे नमस्कुरुतेति" सुस्पष्टमनुगृहीतमवधेयम्। तत्त्वहितपुरुषार्थेषु सुनिष्कृष्टज्ञानशालिषु दिव्यसूरिषु मध्ये स एष दिव्यसूरिवरोऽग्रेसर इति न कदाऽपि विस्मर्तव्यम् ॥ .... (६)

(गाथा.) ओन्ऱेन प्पलवेन अरियरुम् वडिविनुळ् निन्ऱ *
नन्ऱॆॆॆळिल् नारणन् नान्मुहन् अरनॆन्ऱु मिवरै *
ओन्ऱ नुम्मनत्तु वैत्तु उळ्ळि नुम्मिरुपसै यरुत्तु *
नन्ऱेन नलमॆय्दुदु अवनिडै नम्मुडै नाळे ॥ ७ ॥

नारायणश्चतुर्मुखो हर इत्येतन्मूर्तित्रयम् एकात्माधिष्ठितं वा? अनेकात्माधिष्ठितं वेति प्रतिपत्तुमयोग्ये प्रकारेऽवस्थितं तन्मूर्तित्रयमुद्दिश्य श्रवणमननादिकमनर्हितेन मनसा कलयत। मूर्तित्रये तस्मिन्नेकैकमूर्तिरस्मै ऐश्वर्यसम्पन्नेति वो मनसि माभूत्। ब्रह्मरुद्रयोरसर्वात्मनाऽप्यसंभावितान् कल्याणगुणान् बिभ्राणो नारायण एव तादृशी व्यक्तिरिति सत्यं भायात्। ततश्च तद्व्यतिरिक्तब्रह्मरुद्रविषयिणीमीश्वरत्वशङ्कामुत्सृज्य भगवन्नारायण एकस्मिन्नेव अनन्यप्रयोजनतया अस्मदीयशरीराद्युपकरणैर्वरिवस्याविरचनेन कालयापनं संप्रतिपन्नम्। अस्थिरस्य जीवितकालस्य मोघीकरणं माभूत्॥

अनन्तरगाथाया एव शेषभूता सेयमपि गाथा। विशेषास्तु—अल्पायुष्ट्वात्मनामनात्मस्य वृथाकालहरणमयुक्तम्, आत्मापोद्दापनो विमर्शपूर्वकमेकैव देवता सर्वाधिकेति विनिश्चित्य तस्याः क्षिप्रं प्रवणा भवत युक्ति। मूर्तित्रयमेकात्माधिष्ठितं वा? अनेकात्माधिष्ठितं वेति निर्धारणमशक्यमिति यदत्र प्रतिपाद्यते, तदेवं प्रतिपत्तव्यम्। आत्मा तु प्रतिशरीरं भिन्न इति जानन्ति नाम सर्वे। ब्रह्मरुद्रनारायणाख्यमूर्तित्रये एक एवात्मा व्याप्यावस्थितो वर्तते वा? उत भिन्नभिन्न आत्माऽवतिष्ठते वा? इति विचिकित्सायां जातायाम्, यदा मूर्तयस्तिस्रः, तदा आत्मानोऽपि त्रय इति कश्चन कल्पः उदियात्। अथ च "यस्य चेतनस्य यद्द्रव्यं सर्वात्मना स्वार्थे नियन्तुं धारयितुं च शक्यम्, तच्छेषतैकस्वरूपम् तत्तस्य शरीरम्" इति परिष्कृतस्य शरीरलक्षणस्यैव प्रजापतौ पशुपतौ च सद्भावेन शरीरमात्रमेव तौ, आत्मा तु नारायण एव इति अपरः पक्षः उदियात्। वस्तुतः अयमेव ध्रुवमुदारः कल्पः; तथाऽपि कल्पेऽस्मिन् दृढप्रत्ययस्य दुर्घटत्वात् प्रतिष्ठितप्रज्ञः असमविनीतमिसन्धिना "प्रतिपत्तुमयोग्ये" इति मुनिवरः प्राह।

सुबालोपनिषदि * एष सर्वभूतान्तरात्मा अपहतपाप्मा दिव्यो देव एको नारायणः * इति यदाम्नातं तदेव हृदि निदधानो मुनिवरोऽत्र द्वितीयपादोपक्रमे नारायणं सविशेषमुपादत्ते [* नम्मेळिल् नारणन् * इति।] * रूपश्रिया परमया परमेण धाम्ना चित्रैश्च कैश्चिदुचितैर्भवतश्चरित्रैः। चिह्नैरनिह्नवपरैरपरैश्च कैश्चिन्निश्चिन्वते त्वयि विपश्चित ईशितृत्वम्॥ * इति [श्रीवैकुण्ठस्तवे] श्रीकूरनाथगुरुवरोपपादितरीत्या परत्वस्य असाधारणास्पदभूतो नारायण इति तदर्थः। उपात्तसुबालोपनिषद्वाक्यस्य तावदयमर्थः,—[एष सर्वभूतान्तरात्मा] अत्र भूतशब्दस्य सत्तायोगिवस्तुवाचकत्वात् उभयविभूत्यन्तर्गतं चिदचिद्वस्तुजातमनेन भूतशब्देन निर्दिश्यते। [अपहतपाप्मा] पूर्वोक्तपृथिव्यादितमःपर्यन्तेषु वस्तुषु अन्तर्यामितया सन्नपि तद्गतदोषैरसंस्पृष्टः। [दिव्यः] दिवि स्थितः, परमपदनिलय इत्यर्थः। [देवः] द्योतनादिगुणविशिष्टः। [एकः] अद्वितीयः, समाभ्यधिकरहित इत्यर्थः। * एकश्चोलनृपस्सम्राडद्वितीयोऽस्ति भूतले। इति तत्तुल्यनृपतिनिवारणपरं वचः॥ न तु तद्भृत्यतत्पुत्रकलत्रादिनिवारणम्॥ * इति भगवद्यामुनार्यसूक्तिरत्रानुसन्धेयम्॥ तथा चैतादृशवैलक्षण्यविशिष्टे नारायणे चिन्तनमात्रे सत्येव तस्य स्वव्यतिरिक्तसर्ववस्तुप्रकारित्वम् इतरयोर्विधिशिवयोः सृष्टिसंहारोपकरणत्वं च मनसि प्रतिष्ठितं भविष्णु, ततश्च * न्यायस्मृतिप्रभृतिभिर्भवता निसृष्टैर्वेदोपबृंहणविधावुचितैरुपायैः। श्रुत्यर्थमर्थमिव मानुषरैर्विभेजुः त्वद्भक्तिभावितविकल्मषशेमुषीकाः॥ * इति [श्रीवैकुण्ठस्तवे] श्रीकूरनाथगुरुवरोक्तरीत्या न्यायश्रुत्यादिसहकारेण च सुविमर्शे कृते नारायणस्यैव परिबृढत्वम् इतरयोरवरत्वं च हृदयमवगाहेत च। तदा तस्यामेव परदेवतायामनन्यप्रयोजनभक्तिविरचनं वरम् इत्युक्तं भवति॥

एवं कथयति मुनिवरे "भवतु नाम; भविष्यति तावत् कालक्रमेण; का त्विदिदानीं त्वरा!" इति स्थितेषु संसारिषु, अथ विशेषतोऽभिधीयते [नम्मुडैनाळे] इति। स्वकीयमल्पायुष्ट्वं नावगच्छथ यूयमिति प्रोक्तं भवति। * नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ। आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम्॥ * इति भरतं प्रति रामश्चित्रकूटे प्राह यत् तदिह स्मर्तव्यम्। [आदित्ये उदिते नन्दन्ति] यदा सूर्य उदेति, तदा द्रव्यार्जनकालस्समुपस्थित इति मोदन्ते मर्त्याः। [रवावस्तमिते च नन्दन्ति] उदिते सूर्ये अस्तं गच्छति च 'आर्जितद्रव्यविनियोगेन क्षुद्रविषयोपभोगकालस्समुपस्थित इति प्रमोदन्ते। आयुषो वृथाक्षयमवेक्ष्य शोचन्मनुष्यो नैकोऽपि हन्त। * यन्मुहूर्तं क्षणं वाऽपि वासुदेवो न चिन्त्यते। सा हानिस्तन्महच्छिद्रं सा भ्रान्तिस्सा च विक्रिया॥ * एकस्मिन्नप्यतिक्रान्ते मुहूर्ते ध्यानवर्जिते। दस्युभिर्मुषितेनेव युक्तमाक्रन्दितुं नृणाम्॥ * इत्यादि प्रमाणगतीरहह! नानुसन्दधते जडा जना इति मुनिवरस्य हार्दो निर्वेदः शब्दसंदर्भगर्भितः॥ .... (७)

(गाथा.) नाळु निनैन्दु नमपळमै अङ्गोडुविनै युडने
माळुम् * ओर् कुरैविल्लै मननह मलमर कळुवि *
नाळु नन्दिरुवुडै यडिहळ्दम् नलङ्गळल्ल वणङ्गि *
माळु मोरिडत्तिलुम् वणकोडु माळ्वदु वलमे॥ ८॥

मानसं त्रिमूर्तिसाम्याशङ्काजनितसंशयात्मकमलविहीनम् अत एव विशुद्धं विधाय, श्रियः-पत्युः परमपुरुषस्य परमभोग्यचरणारविन्दवन्दने कृते निरन्तरमस्माकं विविधां बाधामुत्पादयन्ति अनादिकालसञ्चितानि भगवदनुभवविरोधीनि पापानि सद्य एव क्षीयेरन्; न काचिदपि भविता न्यूनता। निर्याणकालेऽपि वा * द्विधा भज्येयमप्येवं न नमेयं तु कस्यचित् * इत्युक्तवतो रावणस्येव विषमं व्रतं विसृज्य प्रह्वीभावेन मरणं वरम्॥

उपदेशपात्रभूतासु जनतासु स्वकीयदुरितप्राबल्यमनुचिन्त्य 'प्रबलदुरितभरितानामस्माकं हन्त! कथमिव घटेत मुनीन्द्र! भवदीयोपदेशसार्थक्यसम्पादनम्' इति विचारविह्वलासु सतीषु * मेरुमन्दरमात्रोऽपि राशिः पापस्य कर्मणः। केशवं वैद्यमासाद्य दुर्व्याधिरिव नश्यति॥ * इत्यादिप्रमाणगतीरनुसन्दधानो मुनीन्द्रः प्रतिजानीते भगवत्प्रणामाभिमुख्यमात्रे जाते सकलपापक्षयस्सद्यो भवितेति। गाथायामस्यां साधनं साध्यं चेत्युभयमुपदिश्यते। निःशेषपापविलयः साध्यम्। लक्ष्मीपतिचरणारविन्दवन्दनं साधनम्। भगवच्चरणारविन्द-वन्दनमात्रेण सकलदुरितविततिविलयः प्रोच्यमान इह कथमिव घटेत? पाप्मनामनुभवैकविनाश्यत्वं हि व्याहरन्ति * नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपीत्यादीनि शास्त्राणि? इतिचेत्; तिष्ठन्तु नाम तथाविधानि सामान्यवचनानि। * तद्यथेषीकतूलमग्नौ प्रोतं प्रदूयेत एवं हास्य सर्वे पाप्मानः प्रदूयन्ते * यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते * तरति शोकमात्मवित्... न कर्मणा लिप्यते पापकेन * इत्यादीन्यौपनिषदवचनानि बलीयांसि हि जाग्रति। ब्रह्मविद्या विषये पूर्वाघविनाशः उत्तराघाश्लेषश्च प्रामाणिक इति प्रतिपत्तव्यम्। भगवच्चरणारविन्दवन्दनसमनन्तरक्षण एव पापानि सकलानि प्रणश्येयुरिति यदत्र प्रतिपादितम्, तदिदं ब्रह्मविद्याफलतसिद्धिमद्विषयमेवेति बोध्यम्। * तमेव विद्वानमृत इह भवति। नान्यः पन्था

अयनाय विद्यते * इत्यादीन्यपि प्रमाणान्यत्रानुसन्धेयानि । अव्याजकरुणानिधिर्भगवान् ब्रह्मविद्यासिद्धिविरहितानपि भक्तान् स्वचरणकमलप्रणाममात्रेन एव प्रसन्नस्सन् यदि निष्पन्नब्रह्मविद्यानित्रानुगृह्णीयात्तदा नैव परमपुरुषो दण्डधारितो भवितुमर्हतीति सहस्रनामभाष्ये भट्टपादानामनर्घामिसन्निप्रदर्शनमिहानुसन्धेयम् ॥

[ न काचिदपि भवित्री न्यूनता ] इत्यस्य हृदय द्वेधा ; (१) विरोधिव्यपगममात्रमेव न ; सकलविधसम्पत्समृद्धिरपि स्यादिति । (२) युष्माभिराचर्यमाण वन्दन फल प्रदाय न विरमेत् ; * शुभानि पुण्यानि न जातु हीयते * इतिवत् भगवत्श्रेनसि नित्यप्रतिष्ठितं स्यादिति च ॥ तृतीयपादे लक्ष्मीसनाथस्य भगवतः पादवन्दनविधानबलेन * लक्ष्मी पुरस्कारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षण भवेत् ॥ * इति भगवच्छास्त्रसिद्धपुरस्कारत्वविशिष्टा श्रिय पुरस्कृत्य भगवन्तं प्रपद्यमानानां न फलव्यभिचार इति शास्त्रार्थोऽवबोध्यते । श्रीपराशरभट्टार्यसकाशे नञ्जीयर्नामा वेदान्तियतिवर. पप्रच्छ-स्वत.परमकारुणिकस्य भगवतः प्रपदने किमहो फलं व्यभिचरेत् ? कास्विदावश्यकता लक्ष्मीपुरस्करणे ? इति । तदा भट्टार्य इमामेन गाथा प्रमाणमूर्धन्यत्वेनोपन्यास्थदित्याचार्या. ॥

[ निर्याणकालेऽपि वा प्रह्वीभावेन मरणं वरम् ] इत्यनेन, स्वत एवानुग्रहोन्मुखस्य भगवतो यत्किञ्चिद्व्याजमात्रप्रतीक्षिता प्रोक्ता भवति । यावच्छरीरपातं प्रातिकूल्ये व्यवसिता स्थिता अपि अन्त्यकाले यदि प्रह्वीभूतास्सन्तो म्रियेरन् तर्हि द्वारकाकूक्षी भगवान् मामय प्रणमन्नेव प्रामीयतेति प्रमोदमानः प्रसीदेदित्युक्त भवति । * द्विधा भज्येयमप्येवं न नमेय तु कस्यचित् * इति कृतसङ्कल्पाद्रावणादल्पीयसीं व्यावृत्तिमेव निरीक्षते लक्ष्मीपतिरिति वस्तुस्थिति ॥ * सर्वज्ञोऽपि हि विश्वेश सदा कारुणिकोऽपि सन् । संसारतन्त्रवाहित्वाद्(क्ष्या)क्षापेक्षा प्रतीक्षते ॥ * इति प्रमाणोदितरक्षापेक्षायाम् इदमप्यन्तर्भावयति भगवानिति मुनिवरस्य हृदयमिव ॥ ... ... .. .. .... (५)

(गाथा. वलत्तनन् तिरिपुर मेरित्तवन् इडम्पेर त्तुन्दि
वलत्तु * एल्लदिशैमुहन् पडैत्त नल्लुहमुम् तानुम् *
पुलप्पड प्पिन्नुम् तनुलहत्तिल् अहत्तनन् ताने *
शोलप्पुहिल् इवैपिन्नुम् वयित्तुळ इवैयवन् तुयक्के ॥ ९ ॥

त्रिपुरदहनकर्ता रुद्रो दक्षिणपार्श्वमाश्रित्य लब्धसत्ताकः ; चतुर्मुखोऽपि स्वोत्पादितभुवनवर्गेण सह सविकासनाभीकमलमाश्रित्य लब्धसत्ताकः । स च भगवान् स्वयं सकलमनुजनयनविषयतां प्रेप्सुर्जगति नानावतारान् वितनोति केवलनिजेच्छया । अवतीर्य तेन कृतानां क्रियमाणानां च चेष्टितानाम् अपरिच्छेद्यतया, बहुशः कथनेऽपि सङ्क्षेपतैव सत्यम् । तस्य माया च महती बत ! ॥

अधस्ताद् ब्रह्मरुद्रयोरवरत्वम् श्रीमतो नारायणस्य पारम्य च प्रत्यपादि । अधुनाऽस्यां गाथायाम् ते उभे अपि दैवते भगवन्तमाश्रित्य लब्धसत्ताके इति प्रतिपादनपूर्वकम् भगवतोऽवतारचेष्टितानामपरिच्छेद्यत्वं

व्यामोहकत्व च प्रतिपाद्यते । अवतारावसरेषु स्वकीयपरत्वनैद्यमपि कासुकासुचिद्दशासु प्रदर्शयति यत्, तत एव व्यामोहकत्वप्रतिपादनमप्यत्र जातम् ।

[ त्रिपुरदहनकर्ता रुद्रो दक्षिणं पार्श्वमाश्रित्य लब्धसत्ताकः ] इत्यत्र पूर्वाचार्या प्रमाणद्वितय प्रदर्शयन्ति । * पश्यैकादश मे रुद्रान् दक्षिण पार्श्वमाश्रितान् * इति मोक्षधर्मवचन षट्त्रिंशत्सहस्रिकायामुदाहृतम् । * तपसा तोषितस्तेन विष्णुना प्रभविष्णुना । स्वपार्श्वे दक्षिणे शम्भोर्निवास परिकल्पित ॥ * इतीद वचन चतुर्विंशतिसहस्रिकायामुपात्तम् । प्रमाणद्वितयेनापि भगवत शीलगुणातिशयो द्योतितो भवति । यस्मिन्वक्षस्स्थले भगवान् दिव्यमहिषीं श्रिय बिभर्ति तस्यैव वक्षस पार्श्वविशेषे तामसदेवताया अप्यवकाशमदिशादिति महत्तरो ह्यय शीलगुण । रुद्रस्येव चतुर्मुखस्यापि स्ववक्षसि स्थान दत्तवानिति मुनिवरोऽसौ प्रतिपादयत्यसकृत् । उपरि चतुर्थशतके अष्टमदशकप्रथमगाथादिषु प्रेक्ष्यमेतत्, एव लक्ष्म्या सह तयोरप्यवकाशप्रदान किं ननु सार्वदिकमिति केचिदाशङ्केरन् । आशङ्कामिमामाचार्या एव स्वयमुत्थाप्य समादधिरे, आपत्कालविशेषेषु भगवास्तयोरात्मनो वक्षसि स्थान दिशति, तदेतन्महान् हि गुणविशेष । गुणविद्वा दिव्यसूरयस्तदिद सार्वदिकमिव सचक्षते - इति समाहितिसार ।

"त्रिपुरदहनकर्ता रुद्र" इत्यत्र किञ्चिदस्ति वक्तव्यम । अग्रस्तात्प्रथमदशके अष्टमगाथायाम् "पुरमोरुमून्रॆरित्तु" इत्यनया सूक्त्या त्रिपुरदहनमपि भगवतो नारायणस्यैव कृत्यमिव प्रदर्शितम्, अत्र तु तत्कर्ता रुद्र इत्युच्यते, कथमिह सगमनमिति विचारो माभूत् । तन्महत्तर कृत्य विष्णोस्तेजोबलेनैव निर्वृत्तमिति प्रमाणान्युद्घोषयन्तीति प्रपञ्चितचरम् । तत्कृत्यकरणे रुद्र पुरोगम आसीदिति हेतुना तस्य कर्तृत्वकथन च नासाधु ।

गाथायामस्या पूर्वार्धे शीलगुणमनुमहितवता मुनिवरेण शीलगुणपरमकाष्ठाभूतमवतरणमुत्तरार्धेऽनुसन्धीयते । अत एव ह्यतिमानुषस्तवे * शील क एष तव हन्त ! दयैकसिन्धो ! क्षुद्रे पृथग्जनपदे जगदण्डमध्ये । क्षोदीयसोऽपि हि जनस्य कृते कृती त्वम् अत्रावतीर्य ननु लोचनगोचरोऽभू ॥ * इति श्रीकूरेशमिश्राविभवावतारान् शीलगुणपरीवाहभूताननुजगृहु ॥ (९)

(गाथा.) तुयकरु मदियिल् ननूजानसुल्ल् अमरैर् तुयक्कुम् *
मयक्कुडै मायैहल् वानिलुम् पेरियन वल्लन् *
पुयर्करु निरत्तनन् पेरुनिलम् कडन्द नल्लडिप्पोदु *
अयर्प्पिल नलत्तुनन तल्लवुनन् वणङ्गुव नमन्दे ॥ १० ॥

**संशयविपर्ययादिरहितमतिविलासशालिनां महाज्ञाननिधीनाममराणामपि धियं व्यामोहयितुं शक्तैरपरिच्छेद्यैराश्चर्यगुणचेष्टितैर्विभूषितस्य लोकविक्रान्तचरणारविन्दम् प्रयोजनान्तरवैमुख्येन क्षणमात्रविस्मरणमप्यन्तरेण प्रजल्पामि; संश्लेष्टुकामोऽस्मि; मूर्ध्ना च नमस्यामि ॥**

गाथायामस्या चरमचरणार्थस्यैव प्राधान्यम् । परमपुरुषचरणारविन्दप्रजल्पनम् तत्सश्लेषणाद्रक्षणम् तत्प्रणमन च प्राधान्येन प्रतिपाद्यते । स परमपुरुष कीदृश इति चेत् तत्प्रकृतिप्रतिपादन प्राथमिकपादद्वितयेन

वस्तुनस्तु वे आर्तनाद का सहन नहीं करेंगे; अत उनसे कहो। कहने मे तुम्हें सरूपसिद्धि, उन्हें गुण सिद्धि, और मुझे सत्तासिद्धि भी मिलेगी। इतने फलों का कारण तुम्हारा कथनमात्र होगा॥ (२)

(गाथा) एन्नीमें कण्डिरक्कि इदुतहा देन्नाद *
एन्नील मुहिल्वण्णर्कु एन्शोल्लि यान्शोल्लुहेनो *
नन्नीमें चिनिपनर्कण् तन्नादेन्नु ओरुवायूचोल्ल *
नन्नील महन्निल्लहाव् नल्हुदिरो नल्हीरो॥४॥

**भो मेचककौञ्चपक्षिणः! मदीयां परिस्थितिमवेक्ष्य निर्वेदं प्रकाश्य 'एवं नाम विश्लेषणमनुचितम्' इति प्रतिपत्तिविहीनस्य मदीयस्य नीलनलाहकसवर्णस्य भगवतोऽहं हन्त! कं वा संदेशं दिशेयम्? [निष्फलसंदेशप्रापणे नास्ति मम समुत्साहः।] तथाऽपि एवं संदेष्टुमिच्छामि; "इतः परं तद्वक्तौ सत्ता न घटेत" इति। एवंविधमेकं वाक्यं तत्सविधे विज्ञापयिष्यथ वा न वेति न जाने॥**

नीलक्रौञ्चपक्षिविशेषानुद्दिश्य सदेशो गाथायामस्या निबध्यते। कुररी नाम पक्षिविशेष प्रसिद्ध। क्रौञ्चपक्ष्यपि तज्जातीय। सहचरविश्लेषमणुमात्रमपि न सहते विहगोऽयमिति द्राविडग्रन्थैर्बहुभि प्रतीयते। सहचर वियोगत सदा रोदनमेव पक्षिणोऽस्य निरूपकमिति निगदन्ति। * कुररि! विलपसि त्व वीतनिद्रा न शेपे * इत्यादि श्रीभागवतश्लोकतोऽपि सुगममेतत्। एव भगवद्विश्लेषकातरास्तीव्रभक्तियुक्ता महान्त इह विवक्षिता। पराङ्कुशनायिका स्वकीयपरिस्थितिमवेक्ष्य दयामकुर्वते निर्घृणाय भगवते हन्त! किमस्ति वक्तव्यमिति प्रथमतो वैराग्यमाविष्कृत्य, अथापि किमपि कथयानीति कथयत्युत्तरार्धेन। पुरा कोऽपि द्रमिडपण्डित श्रीपराशरभट्टार्याणा सविधे काञ्चिदाशङ्कामुदघाटयत्, (किमिति) 'इद तावद्वाक्य विश्लेषकालिकम्, न तु सश्लेषकालिकमिति व्यक्तम्। एतदीयाया परिस्थिते श्रवणमेव खलु योग्य विश्लेषकाले, अवेक्ष्येति कथमिह कथ्यते? निशम्येति खलु युक्तम्' इति। सच एव भट्टार्या प्रत्यूचिरे। तत्साराश एष,—विश्लेषकालिकपरिस्थितिरत्र न विवक्षिता, अपि तु भगवता बहुशस्साक्षात्कृता सश्लेषकालिकी परिस्थितिरेव विवक्षिता। गाढाश्लेषदशायामपि मध्येमध्ये आश्लेषस्य मनाक् विच्छेदो भवेत् खलु, तादृशक्षणिकविच्छेदावसरेऽपि असहिष्णुतया क्लेशमनुभवन्त्यासीदिय नायिका। तदिद प्राथमिकप्रबन्धभूते तिरुविरुत्ताख्ये दिव्यप्रबन्धे द्वित्रगाथाभिराविष्क्रियते। लोके साधारणललनानामप्येष स्वभावो द्राविडकवितासु क्षुण्ण। तादृशानि कतिपयान्युत्तुङ्गमर्यस्थानि द्राविडपद्यान्युदाहृत्य भट्टार्या "भो पण्डितप्रकाण्ड! 'मदीय विश्लेषासहत्वरूप स्वभाव सश्लेषकाले परिरम्भशैथिल्यत प्रजातेनाक्षिविकारेण स्वय साक्षात्कृत्यापि हन्त विश्लिष्टस्म निर्घृणो भगवान्' इति तावदत्र कथ्यते, काचिदनुपपत्तिरिह?" इति पप्रच्छु। स चैतन्निशम्य समाहितमना बभूव, प्रशशस च भट्टपादाना मेधाविलासम्। असह्यशोकसमयेऽपि "मदीयस्य नीलनलाहकसवर्णस्य" इति कथनेन भगवतो भव्यतातिशय स्वदिव्यमङ्गलविग्रहसुषमया वशीकर्तृत्व च प्रकाश्येते। स भगवानिदानीमत्रागत्य मदीया परिस्थितिमवेक्षेत चेदवश्यमेव तस्य मनसि निर्वेदो

जायेत; अस्या विप्रयोगस्सर्वथा नोचित इत्यपि स मन्येत; एवमकुर्वतस्तस्य भगवतः—इत्यपि प्रथमपादार्थस्सुवचः। एतादृशेऽर्थे मदीयं परिस्थिति मित्यनेन इदानीन्तन्याः स्थितेरेव विवक्षण नानुचितमिति प्रोक्तं भवति।

निष्फलसंदेशप्रापणे नास्ति मम समुत्साह इति नैराश्यं प्रकाश्यापि पुनः संदेशप्रदाने यदौत्सुक्यमजायत, अत्र व्याख्यातारो महामतय आचार्यवर्या अतिशोभनमुदाहरणं निदर्शयन्ति। यदा नन्दनन्दनो भगवान् व्रजान्मथुरां पुरीं प्रतस्थे तदा गोप्यस्सर्वा अपि * मथुरां प्राप्य गोविन्दः कथं गोकुलमेष्यति। नगरस्त्रीकलालापमधु श्रोत्रेण पास्यति॥ * इत्यादिकमभिधाय निर्विण्णा बभूवुः। अथ च कालान्तरे कृष्णो गोपीरनुस्मृत्य तासां पुरतः स्वयं गन्तुं चकित इव * संदेशैस्साममधुरैः प्रेमगर्भैरगर्वितैः। रामेणाश्वासिता गोप्यः * इत्युक्रीत्या अग्रजं बलरामं प्रजिघाय व्रजं व्रजयोषितामाश्वासनाय। अथ व्रजमागतं हलायुधमवलोक्य काश्चन गोप्यः कृष्णकुशलविचारप्रवणा बभूवुः। तदात्वे अपरा गोप्य आहुः * अथवा किं तदालापैः क्रियन्तामपराः कथाः * इति। एवं नाम नैस्स्पृह्यं प्रकाशितवत्योऽपि मध्ये कथयन्ति * अप्यसौ मातरं द्रष्टुं सकृदप्यागमिष्यति * इति; पुनस्तमुपालभन्ते * *पिता माता तथा भ्राता भर्ता बन्धुजनश्च किम्। संत्यक्तस्तत्कृतेऽस्माभिः अकृतज्ञध्वजो हि सः॥* * इति। पुनश्च स्पृहां प्रकाशयन्ति * तथापि कच्चिदालापमिहागमनसंश्रयम्। करोति कृष्णो वक्तव्यं भवता राम! नानृतम्॥ * इति। तदिदं श्रीविष्णुपुराणे पञ्चमांशे चतुर्विंशाध्याये सुविशदम्। तदेतदत्र सुचारु निदर्शनम्। रोषकषायितहृदामपि भगवति नैराश्यं चिरमनुवर्तितुं न प्रभवति, क्षणभङ्गुरमेव स्यादित्युक्तं भवति।

इतः परं स्वस्य सत्ता न घटेतेति संदिश्यत इह। चिन्तयन्त्या इव स्वस्यापि प्राणाः प्रसभमुत्क्रामेयुरिति मन्यमाना हि पराङ्कुशनायिका एवमाचष्टे। सत्यमस्मादृशां भाग्यवशादेव मुनिवरस्यास्य जीवितमनुवर्तत इव। सहस्रगीतिरूपदिव्यसूक्तिलाभाय महाभाग्यमस्मासु संकल्पितं खलु सत्यसंकल्पेन परमपुरुषेण। "तत्सविधे विज्ञापयत" इत्यनुक्त्वा "विज्ञापयिष्यथ वा न वेति न जाने" इति कथनम् अवसादातिशयद्योतकम्। युष्माकमितः प्रस्थानावधि जीविष्यामि वा न वाऽहमिति हार्दो भावः॥ .... .... (४)

**(हिंदी) हे काले क्रौञ्चपक्षियो! मेरा स्वभाव देखने पर भी दया-प्रकाशन पूर्वक, जो इतना भी ख्याल न करते हैं कि यह वियोग इसके लिए अनुचित है, ऐसे मेरे नीलमेघश्याम भगवान को मैं कौनसा संदेश भेजूं? [अर्थात् व्यर्थ संदेश भेजने में मुझे उत्साह नहीं होता।] तथापि यह एक वचन सुनाना चाहती हूं कि अब से वह (नायिका) जीवित न रहेगी। मैं यह नहीं जान सकती कि क्या तुम उनसे यह एक बात सुनाओगे कि नहीं॥**

इस गाथा में काले क्रौंच नामक पक्षियों का सबोधन किया जाता है। कुररी नामक एक पक्षी प्रसिद्ध है। क्रौंच भी इसी जाति का है। द्राविड साहित्य में यों कहा गया है कि यह पक्षी क्षण भर के भी वियोग का सहन नहीं कर सकता। वियोग होने पर सदा रोते रहना इसका स्वभाव है। श्रीभागवत में एक कुररीगीत भी प्रसिद्ध है। तथाच क्रौंच शब्द से इस पक्षी की भांति क्षणमात्र के भी भगवद्वियोग का सहन नहीं कर सकनेवाले, अर्थात् ऐसे तीव्रभक्तिवाले महात्मा लोग संबोधित किये जाते हैं। पराङ्कुशनायिका, अपने विरहासहिष्णुस्वभाव देखकर भी दया नहीं करनेवाले निर्दय भगवान को संदेश भेजना व्यर्थ मानती

हुई, पहले वैराग्य का अवलम्बन कर, फिर कुछ सोचकर, कुछ न कुछ संदेश भेजना चाहती है, गाथा के उत्तरार्ध से। यहां पर आचार्य एक ऐतिह्य बताते हैं—एक द्राविडी पंडित ने श्री पराशर भट्टार्य स्वामीजी से इस गाथा के बारे में एक प्रश्न किया। तथाहि—इस दशक में विश्लेष दशा का वर्णन है, ननु संश्लेष का। इस समय आळ्वार की दशा को भगवान सुन ही सकते हैं, न तु देख सकते हैं। अत कहना उचित था कि "मेरा स्वभाव सुनकर।" इससे विरुद्ध, प्रकृत गाथा में "मेरा स्वभाव देखकर" कैसे कहा गया? भट्टर स्वामीजी ने तुरंत इसका यह प्रत्युत्तर दिया—प्रकृत वाक्यखंड में उपवर्णित आळ्वार की दशा विश्लेष काल की नहीं है, अपितु बहुश भगवान के परिचित संश्लेष काल की ही है। तथाहि—गाढ आलिंगन करने के समयों में भी मध्ये कदाचित्, हाथ बदलने के जैसे प्रसंगों में, अल्प विश्लेष होना स्वाभाविक है। प्रकृत पराङ्कुशनायिका का स्वभाव इतना कोमल है कि वह इस अत्यल्प विश्लेष का भी सहन न कर सकती थी, जिसे भगवान भी ठीक जानते थे। यह अर्थ आळ्वार से ही तिरुविरुत्त नामक अपने पहले ग्रंथ में दो तीन जगहों बताया गया है। एव द्राविडसाहित्य में अन्यत्र भी अनेकत्र विलक्षण नायिकाओं का यह सुकोमल स्वभाव उपवर्णित है। श्रीभट्टर स्वामीजी ने ऐसे दो ती प्रसिद्धग्रंथस्थ उदाहरण बताकर उस पंडित से कहा कि, "पंडितराज! श्री पराङ्कुशनायिका का यह कहना है कि, 'संश्लेप काल में आलिंगन की थोडी सी ढिलाई हो जानेपर भी मुझे विश्लेप का दुख लगता और मेरा शरीर विवर्ण हो जाता था। मेरे ऐसे असाधारण विरहासहन स्वभाव को प्रत्यक्षत देखकर जाननेपर भी निर्दय भगवान ने हाल में मुझे यह विश्लेषदुख दिया है।' अब कहो, इसमें कौनसी अनुपपत्ति है?" यह सुनकर वह पंडित बहुत प्रसन्न हुआ और भट्टर स्वामीजी की बुद्धिमत्ता की खूब प्रशंसा करने लगा। ऐसे महान विश्लेष दुख के समय में भी, [मेरे नीलमेघश्याम] कहनेवाली नायिका का यह भाव है कि, "जो भी हो, भगवान मेरे परवश हैं, और अपनी शरीरकाति से मुझको अपने वश कर लेते हैं।" अथवा पहले पाद का यह भी अर्थ हो सकता है कि, "**मेरी अब की स्थिति देखकर कृपा न करनेवाले।**" इसका यह तात्पर्य है—यदि वे भगवान अब यहां पधारकर मेरी दशा देखेंगे, तो अवश्य ही अपने मन में पछताते हुए यों कहेंगे कि 'इसे वियोगदुख देना सर्वथा अनुचित है।' परंतु यह अर्थ जाननेवाले निर्दय वे इधर आते ही नहीं।

हमारे आचार्य, भगवान के पास व्यर्थ संदेश भेजने में अपना अनुत्साह बताकर, तो भी, फिर संदेश भेजने की चेष्टा करनेवाली नायिका के इस विलक्षण चेष्टित के एक बहुत ही सुंदर दृष्टांत देते हैं। जब भगवान श्रीकृष्णचंद्र अक्रूर के साथ व्रजसे मथुरा पधारे, तब गोपियाँ विश्लेप से बहुत दुखी हो गयीं। कुछ दिनों के बाद भगवान को इनका स्मरण हुआ। तब उन्होंने शायद स्वय इनसे मिलने में सकुचाते हुए बलराम जी के द्वारा इन्हे गर्वरहित, मृदु व मनोहर संदेश भेजा। तब व्रज आये हुए उन बलराम को देखकर सभी गोपियाँ उनसे मिलने गयीं। कितनी ही गोपियों ने उनसे श्रीकृष्णका कुशल पूछा। दूसरी कितनियों ने रोष से कहा, "अथवा किं तदालापै क्रियन्तामपरा कथा। यस्यास्माभिर्विना तेन विनास्माकं भविष्यति॥ (उसकी बात छोडकर दूसरी कोई बात करो, जिसका हमारे विना काम चल सकता है, उसके

बिना हमारा काम भी अवश्य चलेगा; अर्थात् जब श्रीकृष्ण अपनी भक्त हमारी याद किये बिना आनंद से रहता है, तब क्या हम उसकी याद किये बिना न रह सकेंगी? अतः निर्दय उसकी बात बद करो।) रोष से यह कहने के बाद वे पूछती हैं "हमारी बात जैसी भी हो; क्या श्रीकृष्ण अपनी माता के दर्शनार्थ भी एकबार व्रज नहीं आयंगे?" इसके बाद फिर रोषकी बात चलती है—"हमने उसके लिए अपने माता, पिता, भाई, पति, और दूसरे बंधुओं को भी छोड दिया; परंतु वह सर्वथा कृतघ्न बन बैठा है।" इसके बाद फिर आशा प्रकट करती हैं—"अहो राम! सत्य कहो। क्या श्री कृष्ण फिर कभी इधर आनेकी बात कर रहा है?" यह वृत्तात श्री विष्णुपुराण में (५-२४) उपवर्णित है। इस प्रकरण का यह फलितांश है कि भगवान के प्रति भक्तों के मन में उत्पन्न होनेवाली निराशा (एव तत्प्रयुक्त रोष, विरक्ति इत्यादि) बहुत समय तक टिकेगी नहीं; किंतु शीघ्र मिट जायगी। इसी प्रकार हाल में श्रीपराङ्कुशनायिका भी अपनी निराशा छोडकर, फिर भगवान से मिलने की आशा से उन्हें संदेश भेजती है।

संदेश यह है कि "अब से मेरी सत्ता न रहेगी।" आळ्वार का यह अभिप्राय है कि चिंतयन्ती की भाति अपना भी शरीर अब छूट जायगा। यह बात बिलकुल सत्य है; परतु हमारे जैसे संसारियों के भाग्य से ही उनकी आयु कुछ बढती रहती है। अर्थात् सत्यसंकल्प भगवान सकल्प कर चुके कि संसारियों के उद्धार के लिए आळ्वार के श्रीमुख से सहस्रगीति निकालना ही चाहिए। अतः तब तक आळ्वार का इस संसार में विराजना भी निश्चित हुआ। इसके अतिरिक्त, दूसरे किसी कारण से आप इस भूमंडल पर नहीं रह सकते। कहना था कि "भगवान से यह विनती करो।" उसके बदले में "न जाने तुम यह काम कर चुकोगे या नहीं" कहना आळ्वार के सीमातीत दुःख का द्योतक है। उनका भाव है कि "न जाने, तुम्हारे यहा से प्रस्थान करने तक मैं जीवित रहूंगी या नहीं॥" .... (४)

(गाथा.) नल्हित्तान् काचलिकुम् पोलिलेलुम् विनैयेर्के *
नल्हत्ता नाहादो नारणनै कण्डकाल् *
मल्हुनीर् प्पुनर्प्पेडप्पै इरैतेर्वण् शिरुकुरुहे *
मल्हुनीर् कण्णेर्कु ओर् वाशहम् कोण्डरुळाये ॥ ५ ॥

समृद्धसलिलसंभृतेषूद्यानवनेष्वशनगवेषणपरतया स्थित भो धवलबालबक! अश्रुसमृद्धनयनाया मम सकाशात् संदेशं संगृह्य नारायणसकाशे कृपया प्रापय। (अथवा) तत्सकाशे निवेद्य ततः प्रत्युक्तिं मां प्रापय। स नारायणो दृष्टश्चेदेवं कथय। (किमिति) सप्तलोकीमपि स्वयंप्रयोजनताधियाऽभिरक्षतस्तस्य नारायणस्य पापिन्या ममैकस्या एव रक्षणं किमहो दुश्शकमिति॥

गाथाया अस्या हार्दमभिसन्धिमाचार्या मर्मग्राहं गृहीत्वोपवर्णयन्ति—अद्य स्थित्वा अद्यैव वा श्वः परश्वो वा निर्यास्यन्त्या मम कथा दूरे तावदास्ताम्; शाश्वतिकस्य तस्य नारायणत्वं तावदवश्यमभिरक्षणीयम्; मदेकवर्जमवशिष्टस्य कृत्स्नस्य जातोऽभिरक्षणे कृतेऽपि नारायणत्वं वैकल्यमेव प्राप्नुयाद्धन्त! तथा नाम तस्य वैकल्यसम्पादनश्रद्धा माभूदिति कथयतेति सदेशसार.। ननु किं नाम नारायणत्वम्? नारशब्दवाच्यानां

सर्वेषामपि चिदचिदात्मकानां वस्तूनां स्वस्मिन्नवस्थितत्वम्, स्वस्य तेष्ववस्थितत्वं च केवलं न नारायणशब्दप्रवृत्तिनिमित्तम्, अपि तु * माता पिता भ्राता निवासः शरणं सुहृद्गतिर्नारायणः * इत्युपनिषदाम्नातरीत्या सर्वविधबन्धुभावेन सर्वजनसंरक्षणमेव हि तत्। मामिव अन्यानपि कति कति मत्कानेवमुपेक्षेत इति न जाने। एवमुपेक्षकस्य नारायणत्वं कथमिव प्रतिष्ठितं भवेदिति प्रोच्यतामिति संदिश्यते। स नारायणो दृष्टश्चेदिति कथनस्यायमाशयः। * न चक्षुषा पश्यति कश्चनैनम् * न मांसचक्षुरभिवीक्षते तम् * इत्याद्याम्नातप्रक्रियया चक्षुरविषयभूतस्स भगवान् * इच्छागृहीताभिमतोरुदेहः * इत्युक्तप्रक्रियया, * तासामाविरभूच्छौरिः स्मयमानमुखाम्बुजः। पीताम्बरधरस्स्रग्वी साक्षान्मन्मथमन्मथः * इत्याद्युक्तप्रकारेण च निरतिशयसौन्दर्यलावण्यनिधिदिव्यमङ्गलविग्रहपरिग्रहेण, * दशशतपाणिपादवदनाक्षिमुखैरखिलैरपि निजैश्वररूप्य विभवैः * इत्याद्युक्तैश्वररूप्यपरिग्रहेण च मया सह संश्लिष्य इतस्सादमुपार्ज्य निष्क्रान्तः पुनरपि तदेव रूपम् [* न मांसचक्षुरभिवीक्षते तम् * इत्याद्युक्तं] परिगृहीतवानिव। अतस्तस्य दर्शनं दुर्घटम्, यदि स कदाचित् * भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन। इति स्वोक्तरीत्या भवादृशां भक्तिधनानां चक्षुर्विषयस्स्यादिति।

बकसन्बोधनमिह निबद्धम्, अत्र वक्तव्या अर्थविशेषाः प्रथमगाथाविवरणे प्रोक्ताः प्रेक्ष्याः। (बकस्य) स्वाभाविकस्यापि धावल्यस्य कथनम् * मम चाप्यन्तरात्माऽयं शुद्धं वेत्ति विभीषणम् * इति वानरेन्द्रप्रोक्तशुद्धिविशेषपरं ध्येयम्। बालत्वोक्तिश्च * पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत् * इत्याम्नातबाल्यद्योतिका। समृद्धसलिलसंभृतपुष्पोद्यानेषु नैष्प्रकटनगवेषणपरत्वोक्तिश्च सुसमृद्धार्थभरितशास्त्रेभ्यो नानाविधस्वादुतमार्थसंग्रहणसमुत्सुकताव्यञ्जनी विभाव्या। अश्रुसंभृतनयनाया ममेति कथनं स्वस्य तथाविधनामविशेषवत्त्वप्रकाशनाय। * आह्लादशीतनेत्राम्बुः पुलकीकृतगात्रवान्। सदा परगुणाविष्टो द्रष्टव्यस्सर्वदेहिभिः ॥ * इत्यादिवचनविषयभावे मुनिवरोऽयमेव हि प्राथमिकपदमर्हति। प्रथमप्रबन्धे [तिरुविरुत्ते] द्वितीयगाथायामेव हि स्वस्य प्रवहदश्रुपूरत्वमभ्यधादसौ ॥ .. .. (५)

(हिंदी) समृद्ध जलयुत सुशीतल उपवनों में शिकार की प्रतीक्षा करनेवाले हे श्वेत बालबक! अश्रुपूर्णनयनवाली मेरी ओर से संदेश लेकर, उसे कृपया नारायण को पहुंचा दो। (अथवा उन्हे संदेश पहुंचाकर उनका प्रत्युत्तर लेते आवो।) यदि वे नारायण दीखेंगे तो उनसे यह बात कहो कि, प्रयोजन निरपेक्ष होकर सातों लोकों का रक्षण करनेवाले नारायणबिरुद-धारी उन्हे, क्या अकेली मेरा रक्षण ही अशक्य है?"

हमारे आचार्य इस पद्य का निगूढ भाव जानकर यों बताते हैं—"मैं (श्री पराङ्कुशनायिका) आज जीवित होती हुई भी कल या परसों मरनेवाली हूं, अतः मेरी चिंता सुदूर छोड दी जाय। परंतु शाश्वत विराजनेवाले भगवान के नारायणत्व का रक्षण अवश्यकर्तव्य है। मुझ एकके सिवाय समस्तलोकगत दूसरी सारी जनता की रक्षा करने पर भी नारायणत्व अधूरा ही रह जायगा। अतः उनसे कहो कि इस प्रकार अपने नारायणत्व को अपूर्ण करना अनुचित है। यह तो एक समस्या सा है। अतः इसका कुछ विवरण अपेक्षित है। साधारणतया लोग नारायणशब्द का यह अर्थ जानते हैं कि भगवान 'नार'

कहलानेवाले समस्त चेतनाचेतन पदार्थों के आधार हैं, और स्वय उनके अतर्यामी भी हैं। परतु उस शब्द का यह पूरा अर्थ नहीं। "माता पिता भ्राता निवास शरण सुहृद् गति नारायण॥" इत्याद्युपनिषद् के अनुसार, प्रत्येक चेतन के मातापितेत्यादि समस्तविध बधु रहकर सर्वदा उनकी रक्षा करनेवाले ही नारायण कहलाते हैं। परतु ऐसे रहने योग्य भगवान, न जाने, मेरी (पराकुशनायिका की) भाति और भी कितने भक्तों को सता रहे हैं। अत उनसे पूछो कि यों उपेक्षा करनेवाले वे कैसे नारायण बिरुदधारी हो सकेंगे। [यदि वे नारायण दीखेंगे तो] इत्यादि कहने का यह तात्पर्य है—"न चक्षुषा पश्यति कश्चनैनम्॥" (कोई भी अपने नेत्र से भगवान को देख नहीं सकता।) इत्यादि वेदवाक्योक्त प्रकार भगवान आखों के विषय न बनते हैं। तथापि वे कदाचित्, "इच्छागृहीताभिमतोरुदेह॥" (अपनी इच्छा से परिगृहीत, अपने इष्ट श्रेष्ठ दिव्यमगलविग्रहवाले), "तासामाविरभूच्छौरि स्मयमानमुखाम्बुज। पीताम्बरधर स्रग्वी साक्षान्मन्मथमन्मथ॥" (रासक्रीडा के मध्य में अकस्मात् अदृश्य हुए श्रीकृष्ण भगवान के विरह से सतप्त होकर जब गोपियां बहुत दुखी हुई थीं, तब फिर भगवान पीताबर और दिव्यमालाओं से अलकृत होकर, एव मन्मथ के भी चित्त का मथन करने में समर्थ अलङ्कृत सौंदर्यवाले होकर, मदहास दिखाते हुए, उनके सामने प्रकट हुए।) इत्याद्युक्त प्रकार असीम सौंदर्य लावण्यादियुत दिव्य मगल विग्रह लेकर, एव हजारों सिरपादनेत्रादिवाला विश्वरूप भी लेकर, यहा पधारकर, मुझसे मिलकर, मेरा सारा सार निकालते हुए लौटकर, पुनरपि शायद उन्होंने अपने अतीद्रिय रूप का ही स्वीकार कर लिया। अत यद्यपि उनके दर्शन मिलना कठिन है। तथापि "भक्त्या त्वनन्यया शक्य" इत्यादि श्रीमुख की वाणी के अनुसार, वे तुम्हारे जैसे भक्तों के प्रत्यक्ष भी होते होंगे।

इस गाथा में बक का सबोधन किया गया है। बकशब्द का व्यग्यार्थ पहली गाथा की टीका में बताया गया है। बक तो स्वभाव से सफेद ही रहता है, तथापि उसे फिर 'श्वेत बक' कहने से, बक शब्द के विवक्षित महात्माओं की अतरशुद्धि सूचित की जाती है, जैसे कि विभीषणशरणागतिप्रकरण में, श्रीरामचद्र जी से ठीक समझाये जाने पर सुग्रीव जी ने कहा, "मम चाप्यन्तरात्माऽय शुद्ध वेत्ति विभीषणम्।" (मेरी आत्मा भी विभीषण को शुद्ध मानती है।) इस वाक्य का यही तात्पर्य होगा कि विभीषण का मन शुद्ध है। बाल बक कहने से बालक की तरह निष्कपट एव निराडंबर व्यक्ति सूचित की जाती है। [समृद्ध जलयुत सुशीतल उपवनों में शिकार] करने का यह अर्थ है कि मधुर रसभरित शास्त्रों से नानाविध सरस अर्थ ढूढ निकालना। [अश्रुपूर्णनयनवाली मेरी] कहने से आळ्वार अपने उस स्वभाव का वर्णन करते हैं, जो "आह्लादशीतनेत्राम्बु पुलकीकृतगात्रवान्। सदा परगुणाविष्ट द्रष्टव्यस्सर्वदेहिभि॥" इत्यादि से बताया गया है। उक्त पद्य का यह भाव है—नेत्र से शीतल आनदाश्रु बहानेवाले, रोमाचित शरीरवाले, और भगवद्गुणों में तनमन लगानेवाले भक्त के दर्शन प्रत्येक मानव को अवश्य कर्तव्य है। इस भक्तलक्षण का पहला लक्ष्य आळ्वार ही हैं। प्रथम प्रबंध "तिरुविरुत्तम्" की दूसरी गाथा में ही आळ्वार ने अपने आनदाश्रुप्रवाहकत्व का वर्णन कर दिया। अत हाल में भी इसी अर्थ की सूचना की जा सकती है॥ ... . .... (५)

(गाथा.) अरुळाद् नीररुळि अवरावि तुनरामुन् *
अरुळाळि प्पुळ्कडवीर् अवर्वीदि योरुनाळेन्नु *
अरुळाळि यम्मानै कण्डक्काल् इदुशोल्लि अरुळ् *
आळि वरिवण्डे यामुमेन् पिळैत्तोमे ॥ ६ ॥

अयि गम्भीरस्वभावान्वित सुन्दरभ्रमर! करुणावरुणालयो भगवानवलोकितश्चेत् तमुद्दिश्य कथयतादेवम्; 'अद्यापि निर्घृणो भवान् स्वाभाविकीं घृणां प्रदर्श्य [कुरुकापुरवासिनः शठकोपनाम्नः] तस्य व्यक्तिविशेषस्य पञ्चत्वप्राप्तेः पुरस्तादेव परमकारुणिके गरुत्मन्तं तद्वीथीपथेन सकृदपि वा संचालय भगवन्।' इति। इत्थं त्वया कृपा कर्तव्या भो भृङ्गराज! किमपराद्धमस्माभिर्हन्त ॥

अधस्तनगाथाया स्वकीया नारायणसमाख्या मरक्षणीयेति कथयेति चक्रपक्षिणमुद्दिश्य प्रोक्तम्। एवं प्रोक्ते सति भगवानथ किमपि दारुणमुत्तरं ब्रूयादिति मेने पराङ्कुशनायिका, (किं तदिति चेत्,) मदीय नारायणत्व भन्यना कामम्, दोषभूयिष्ठया तया सह संश्लिष्य अवद्यलाभादपि नारायणत्वभङ्गसम्पादनं वरमिति मन्ये—इति भगवान् प्रत्युत्तरयेदपि इति मेने। मन्वैवमस्यां गाथायामाह—तत्सत्यनद्य मा भूत्, ममापि सत्ताहानिर्मा भूत्, तया नाम कमपि कथयाम्युपायविशेषम्, भगवतस्तस्य वीथीषु स्वच्छन्दविहारं, गजेन्द्रादि-भक्ताभिरक्षणार्थं पात्राप्रस्थानम् इत्येवप्रकारा प्रयाणविशेषास्सन्ति खलु निसर्गतः, तादृशसञ्चारमर्यादया ममापि वीथीपथेन सकृत्प्रयातु नाम, एवं सति तस्य न किमपि स्यादवद्यम्, मया सह संश्लेषे खल्ववद्यं स्यादिति स मन्यते, संश्लेषस्तु मा भूत्कामम्, पतगराजमारुह्य सकृदेव मम वीथ्या प्रयातु, तावता मे सत्ता समुन्मिषेत्—इति ॥ भ्रमरापदेशेन आचार्या एव विवक्षिताः, तत्रैता उपपत्तयोऽववेया। (१) भ्रमरचञ्चरी-कादिव्यपदेशा सततभ्रमणं सततसञ्चरणं प्रयुक्ता हि भवन्ति भृङ्गजाते। एवम् * श्रीरङ्गं करिशैलमञ्जनगिरिं तार्क्ष्याद्रिसिंहाचलौ श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम्। श्रीमद्द्वारवतीप्रयागमथुरायोध्यागयापुष्कर सालग्रामगिरिं निषेव्य रमते रामानुजोऽयं मुनिः ॥ * इत्याद्युक्तरीत्या नानादिव्यदेशेषु तत सञ्चरणशीला महान्तो-ऽभिविवक्षिताः। (२) भृङ्गजाते मधुपानलोलुपत्व तदन्यविमुखत्वं च प्रसिद्धम्, अत एव मधुपशब्दाभिधेयता च। एवं * विष्णोः पदे परमे मध्व उत्सः * इति श्रुत्युक्तरीत्या, * तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छतीति भगवद्यामुनार्यसूक्तिरीत्या च भगवत्पादारविन्दमधुपानसमुत्सुकाः परमरसिका विवक्षिताः। [मध्व उत्सः] मधुन इत्यर्थे मध्व इति छान्दसं रूपम्। उत्सः-प्रवाहः ॥ (३) भगवन्मन्दिरान्तः प्रवेशे अस्मादृशां क्षुद्रकानां प्रतिरोधो यद्यपि भवति, भ्रमराणां तु स नैव भवति, स्वच्छन्दमनायासतश्चान्तः प्रविश्य भगवतस्सर्वेषु दिव्यावयवेष्वपि हि वलन्ते ते। एवम् भगवदन्तरङ्गस्थानेषु सर्वत्र चाप्रतिहतगतयः भगवतस्सर्वावयवमङ्गलैकभाग्यभाजश्च महाचार्या विवक्षिताः। पुरा यः श्रीनिवासमहाविद्वत्सल्लजः श्रीनिवासभगवत्सिसेविषया श्रीवेङ्कटाद्रिमध्यासीत्, तत्र कतिपयानि दिनानि स्थित्वाऽपि मन्दिरान्तः प्रवेशलेशमप्यलभमानस्ताम्यन् * ऐश्वर्यमदमत्तोऽसि मां न जानासि माधव। परे परिभवे प्राप्ते मदधीना तव स्थितिः ॥ * इति विज्ञाप्य प्रणम्य प्रयाणोन्मुखो यदाऽऽसीत्तदा अर्चकमाविश्य परमकृपामयी मनुज्ञा-

मनुगृह्य विद्वद्वरेण्यं तं सरभसमन्तरानाय्य परिपूर्णानुभवं प्रादादितीतिहासः प्रथते। एवं निरवग्रहानुग्रहपात्रभूता महानुभावा. कालत्रितयेऽपि सुलभा ननु। (४) श्रीशठकोपमुनिवरोऽसौ स्वकीयप्रथमप्रबन्धे [तिरुविरुत्ते—५५] भगवत्सविधे संदेशप्रापणाय स्वेनाहूयमानान् द्विरेफानुद्दिश्य कथयति "जलजातेषु स्थलजातेषु तरुजातेषु च पुष्पेषु मधुपानेन सानन्द चरता वा किमपि ब्रवीमि भो.।" इति। कमलादीनि जलजातानि; मल्लिकामालती प्रभृतीनि स्थलजातानि; वकुलपाटलपारिजातादीनि पुष्पाणि तरुजातानि। एवं त्रिविधेष्वपि कुसुमेषु लोलुपता भृङ्गजातेर्नैसर्गिकी। आचार्या अप्येवम्। क्षीराब्धिनाथ व्यूहाधिष्ठितवासुदेवमुपभुञ्जाना महान्तो जलजन्मकुसुमोपभोक्तार·। स्थलविहरणेन मोदमानाना रामकृष्णादि विभवमूर्तीनामर्चामूर्तीना चानुभवोत्सुका स्थलजन्मकुसुमानुभवसक्ता·। उत्तुङ्गस्थाने परमे पदे विराजमानं श्रीवैकुण्ठनाथमिहैवानुभवन्तो महान्तस्तरुमूर्धजपुष्पोपभोक्तार। अस्मदीयपूर्वपुरुषाणामेव केवल योग्याभि भोग्याभिश्चैवंविधविलक्षणानुभवप्रणालीभि भृङ्गसाधर्म्यघटना सुशोभना।

[**अयि गभीरस्वभावाश्रितसुन्दरभ्रमर!**] इत्युक्तिबलेन, [**त्वया कृपा कर्तव्या**] इति प्रार्थनाबलेन च महागुरुचरणा एवात्र विवक्षिता इत्यवधारणमनर्गलम्। * अभय सर्वभूतेभ्यो ददाम्येतद् व्रत मम * मित्रभावेन सम्प्राप्त न त्यजेय कथञ्चन * इत्याद्यनघोक्तिप्रसादेन प्रकाशितपरमकरुणाबलस्य भगवतो विषये "**अद्यापि निर्घृणो भगान्**" इत्युक्तिर्मुनिवरस्यास्य मुखात्कथमिव निस्सरतीति न विद्मो हन्त! आर्त्यतिशय खल्वेषमाख्यापयति। पतगराजारूढभगवत्सिसेविषाप्रकाशनमिह स्थितम्, * केचित्तत्वविशोधने पशुपतौ पारम्यमाहु· परे व्याजहु: कमलासने नयविदामन्ये हरौ सादरम्। इत्येवं चलचेतसा करधृत पादारविन्द हरेस्तत्र दर्शयतीव सम्प्रति नृणा तार्क्ष्य श्रुतीना निधि॥ * इत्युक्तरीत्या वेदात्मना विहगेश्वरेण करधृतिव्याजेन अयमेव परम· पुमानिति सुस्पष्टं प्रदर्श्यमानं परमतत्व सर्वेऽपि विदित्वा सुप्रसन्नचेतसो भवन्त्वित्यभिसन्धिना। स्वीवीथीपथेन सचरणप्रार्थनमिह यदातन्यते तत्रेदमवबोद्धव्यम्। श्रीकुरुकापुर्यां श्रीमदादिनाथभगवन्मन्दिरान्तस्तिन्त्रिणीमूलधाम्ना सता मुनिवरेण नावदिय सूक्तिरनुगृह्यते; तत्र वीथी न काचिदस्ति, तथाऽप्येत्र प्रार्थितवनो मुनिवरस्य हृदयमाकर्णयत। पश्चात्तत्रतत्र दिव्यदेशेषु तस्य मन्दिरप्रतिष्ठा भवित्री; तच्च मन्दिर यत्र वर्तते तत्र "आळ्वार् तिरुवीथी"ति प्रथा भवित्री; तस्या वीथ्या भगवतो गरुडारूढस्य यात्रा भूयादिति। मत्यमिममाशंसा काञ्च्यां श्रीहस्तिगिरिक्षेत्रे विराजमानाऽद्यापि वर्ततीति सर्वेऽपि साक्षात्कुर्वते। अत एव प्रथमप्रबन्धप्रथमगाथायास्तृतीयचरणे, अस्यास्सहस्रगीते प्रथमगाथायास्तृतीयचरणे च देवाधिराजमगवन्नामग्रहण दैवेच्छया समजनि। श्रीमान् वेङ्कटनाथार्योऽपि * प्रथमशतके वीक्ष्य वरदम् * इति पूर्वाचार्यपरम्परासमागतमैतिह्यमन्वगादीत्—इति रस्य रहस्यम्। अधस्तादशकस्यास्य प्रथमगाथायां पतगराजप्रस्तावे तस्य तैक्ष्ण्यमुक्तवत्या पराङ्कुशनायिकयाऽत्र गरुत्मत परमकारुणिकत्वेन विशेषणम् स्वकार्यस्य निष्प्रत्यूहसिद्धये। कस्याश्चन ललनाया वीथ्यामसङ्गतसञ्चारे य कोऽपि लोकापवादरममुन्मिषेदिति स मा स्म विभेदिति विवक्षुरिव सकृदिति सगदति। पश्चात्प्राप्तः पुरस्तादेवेत्यश्लीलवाचोऽपि व्याहरणमपरिच्छेद्यमार्त्यतिशयमाविष्करोति। "रमन्तमविरहा समागच्छतादित्यनभिधाय "गरुत्मन्तं सञ्चालय भगवन्"इति प्रार्थनया व्यज्यत एतत्—भगवन्तं स्वस्कन्धमधिरोप्य समागतो गरुत्मान् ज्ञानभक्तिसौरभमभृतमस्या दिव्यमङ्गलविग्रहमवेक्ष्य तवश्चलितुमशक्तस्सन् तत्रैवावतिष्ठेत, तदा 'चलो चलो' इति भावना कथयितव्य भवेदित्युन्नयनीति॥ .... ... .. (६)

(हिंदी) हे गंभीरस्वभाववाले सुंदर भ्रमर! दयासागर भगवान को देखने पर उनसे यह कहो—"अभी तक निर्दय रहनेवाले आप, अपनी स्वाभाविक कृपा दिखाते हुए, (कुरुकापुरी के शठकोपसूरी अथवा परांकुशनायिका नामक) उनका शरीर छूटने के पहले ही, परमकारुणिक गरुडजी को उनके मार्ग से (माने उनके घरके सामने से) अंततः एक ही बार चलाइये।" हे भ्रमरराज! तुम मेरे ऊपर इतनी कृपा करो तो सही। हाय! मैंने कौनसा अपराध किया?

पिछली गाथा में नायिका ने भगवान के अपने नारायणत्व की रक्षा करने पर जोर दिया। फिर उसने सोचा कि, "मेरा यह संदेश सुनकर भगवान अवश्य ही अप्रसन्न होंगे और यह फटकार सुनायगे कि, 'मैं बेशक अपना नारायणत्व खो बैठ सकूंगा, न तु अतिदोषयुत उससे (नायिका से) मिल कर स्वय भी दोषी बन सकूंगा।" अब प्रकृत गाथा में भगवत्कृपा पर जोर डालकर यह संदेश भेजती है—मैं ऐसा एक सुंदर उपाय बताऊगी जिससे भगवान को दोष न लगेगा, और मैं भी अपना सत्तानाश होने से बच जाऊगी। भगवान गजेंद्रादियों की रक्षा करने के लिए और लीलाविहार के लिए गरुडारूढ होकर कभी कभी वीथियों में निकलते हैं न? ऐसी यात्रा के बहाने आप कदाचित् मेरी वीथी से भी यदि निकलने की कृपा करें, तो उतने मात्र से भी मैं कृतकृत्य हो जाऊगी, और उन्हें भी कोई दोष न लगेगा। मुझसे मिलने पर ही उन्हें दोष लगेगा। मैं मिलना नहीं मागती, गरुडारूढ उनके, मेरे घर के आगे से निकलने मात्र से मेरी सत्ता सुरक्षित हो जायगी।

इस गाथा में भ्रमरशब्द से आचार्यों का ही संबोधन किया जा रहा है। इसमे औचित्य इस प्रकारों का है—(१) भ्रमर, चचरीक इत्यादि अपने नामों के अनुसार, भँवर सदा चलने फिरनेवाला प्राणी है; आचार्य भी तीर्थयात्रा, धर्मोपदेश इत्यादि व्याज से सदा फिरते रहते हैं, जैसे कि श्रीरामानुजस्वामीजी के बारे में गाया जाता है—श्रीरङ्ग करिशैल मञ्जनगिरिं तार्क्ष्याद्रि सिंहाचलौ इत्यादि। [इसका यह भाव है—श्री रामानुजस्वामीजी, श्री रग, श्री काची, श्री वेंकटाचल, श्री यादवाद्रि, श्री बदरीनाथ, नैमिशारण्य, श्रीद्वारका, प्रयागराज, श्री मथुरा, श्री अयोध्या, गया, श्री पुष्करक्षेत्र, श्री सालग्रामक्षेत्र इत्यादि दिव्यदेशों का सेवन कर आनंदित रहते हैं।] (२) मधुप कहलानेवाला भँवर मधु पीने में ही आसक्त होकर दूसरा कुछ नहीं पीता; "तवामृतस्यन्दिनि पादपङ्कजे निवेशितात्मा कथमन्यदिच्छति" इत्यादि स्तोत्रश्लोक प्रकार, आचार्य भी भगवत्पादारविन्द मधु का ही पान करनेवाले परमरसिक होते हैं। (३) हमारे जैसे साधारण लोग कभी कभी भगवान के मंदिर में प्रवेश नहीं कर पाते हैं, भ्रमर तो कीसी रोकटोक के विना सदा अंदर जा सकते हैं और साक्षात् भगवान के दिव्यावयवों का भी अनुभव कर सकते हैं, एव भगवान के अनरग कैंकर्य में निरत श्री काचीपूर्णस्वामी, श्री पराशरभट्टरस्वामी इत्यादि महान लोग मंदिरों में सकोच के विना भगवत्संनिधि तक पहुच सकते हैं और उनका अनुभव भी कर सकते है। इस विषय में यह एक ऐतिह्य जानने योग्य है—किसी समय एक महाविद्वान श्रीनिवास भगवान के दर्शन करने के उद्देश्य से श्री वेंकटाद्रि गये। परतु बहुत प्रयत्न करने पर भी कितने ही दिनों उन्हे दर्शन नहीं मिले। तब बहुत दु खी

होकर उन्होंने द्वार पर ही भगवान को लक्ष्य कर प्रणाम करते हुए यह विनती की—" ऐश्वर्यमदमत्तोऽसि मां न जानासि माधव । परैः परिभवे प्राप्ते मदधीना तव स्थितिः ॥" अर्थात् हे माधव!- ऐश्वर्यमद से मस्त होकर अब तुम मुझ पर ध्यान नहीं दे रहे हो । अस्तु; परंतु याद रखो कि जब दूसरे लोग आकर तुम्हारे ऊपर नानाविध आक्षेप करें (अर्थात् निरीश्वरवाद का अथवा देवतांतर पारम्यवाद का प्रकाशन करते हुऐ तुमको अनीश्वर बतावें), तब तुम्हारी सत्ता मेरे अधीन रहेगी। (अर्थात् जबतक मैं तुम्हारा पक्ष लेकर उन दुर्वादियों के मत खण्डन कर तुमको ही भगवान सिद्ध न करूं, तब तक कोई तुमको भगवान नहीं मानेगा।) इतना कहकर, जब उस पंडित ने वहाँ से लौटना चाहा, तब भगवान ने अपने अर्चकपर आविष्ट होकर, उसे सबहुमान मंदिर के अंदर लिवाकर, अपने परिपूर्ण दर्शन भी दिलाये। इस प्रकार भगवान के विलक्षण अनुग्रह के पात्र कोई कोई महात्मा लोग तीनो कालों में मिलते हैं। (४) श्री शठकोपसूरी अपने पहले प्रबंध "तिरुविरुत्तम्" में (गाथा ५५) भगवान के पास भ्रमरों को दूत बनाकर भेजते हुए, उनका यों वर्णन करते हैं—जल, स्थल व वृक्ष मे समुत्पन्न पुष्पों में मधु पीकर सानंद फिरनेवाले हे भ्रमर!" यह तो स्वभावोक्ति है कि भ्रमर, पानी में उगनेवाले कमल इत्यादि, भूमिपर उगनेवाले मल्लिका इत्यादि, तथा वृक्षों पर फूलनेवाले चंपक पाटली इत्यादि, कुल तीन प्रकार के पुष्पों से मधु चूसते हैं। परंतु इससे क्षीरसागर-शायी भगवान के, श्री रामकृष्णादिरूप से तथा अनत अर्चारूपों से भूतल पर विराजमान भगवान के, एवं श्री वैकुंठ नामक, वृक्ष जैसे ऊंचे स्थल पर विराजमान भगवान के कल्याणगुणों का अनुभव करनेवाले महात्माओं की सूचना अवश्य ही मिलती है। अतः हमारे पूर्वाचार्य, अपने ही असाधारण ऐसे अनेक प्रकारों से भ्रमर के समान माने जा सकते हैं।

भ्रमर को [गंभीर स्वभाववाले सुंदर भ्रमर] कहने से, एवं उनकी दया मांगने से यह स्पष्ट सूचित किया जाता है कि आचार्यों का ही यह संबोधन है। "अभयं सर्वभूतेभ्यो ददाम्येतद्व्रतं मम," (मैं अपनी शरण में आनेवाले को समस्त भूतो से अभय देता हूं) "मित्रभावेन संप्राप्तं न त्यजेय कथचन" (मित्र की भावना से मेरी शरण में आनेवाले का, मेरा कुछ भी हो, त्याग नहीं करूंगा) इत्यादि परमशोभन अभयप्रदान करनेवाले परमकारुणिक भगवान को, उनकी कृपासे पूर्ण परिचित आळ्वार, अब [अभीतक निर्दय रहनेवाले] कह रहे हैं। यह तो अवश्य ही अत्याश्चर्य की बात है। सीमातीत दुःख ने ही उनके मुख से यह वचन निकाला है। यहा पर आळ्वार गरुडारूढ भगवान के दर्शन करना चाहते हैं। इसका यह तात्पर्य है—भगवान के अनेक वाहन होते हैं; परंतु गरुडजी में एक विशेषता है, जिसका वर्णन "केचित्तत्वविशोधने पशुपतो" इत्यादि पद्य में किया गया है। (पूरा पद्य संस्कृत विभाग में दिया गया है।) पद्य का यह भाव है—परतत्वनिर्णय करने में प्रवृत्त कितने ही लोगों ने शिवजी को परतत्व माना; किन्हींने ब्रह्माजी को परतत्व बताया; दूसरों ने हरि को ही परतत्व कहा। इस प्रकार विवाद होने से साधारण जनता व्याकुल हो उठी। यह दुरवस्था देखकर स्वयं वेदात्मा गरुडजी, अपनी दोनों हथेलियों में भगवान के उभयचरणारविंद रखकर सब को बता देते हैं कि, "यह देखो! यही परतत्व है।" कहने का यह तात्पर्य हुआ कि गरुडवाहन भगवान के परत्व का बोधक वाहन है।

  

आल्वार, अपनी वीथी से गरुडवाहन भगवान की सवारी निकालने की इच्छा प्रकट करते हैं। आल्वार की जीवनी में बताया गया है कि उन्होंने कुरुकापुरी में श्रीमदादिनाथ भगवान के मंदिर में एक इमली के पेड के नीचे ही विराजकर अपने सभी दिव्यप्रबंध गाये। उधर तो कोई वीथी है ही नहीं। फिर आल्वार की इस विलक्षण इच्छा का अर्थ क्या होगा? अपनी असाधारण दिव्यदृष्टि से आल्वार ने देखा कि बाद मे दिव्यदेशों म अपने (आल्वार के) मंदिरों की भी प्रतिष्ठा होगी, और वहा आल्वार तिरुवीथी नामक वीथिया भी होंगी। तब उनकी ऐसी इच्छा हुई कि उक्त वीथियों में गरुडवाहन की सवारी निकलें। गरुडवाहन बारबार होनेवाला उत्सव नहीं है, परतु सालभर में एकाध बार ही होगा। अत एक बार सवारी निकालने की बात भी ठीक लगती है। आल्वार की यह इच्छा श्रीकाची क्षेत्र में श्रीवरदराज भगवान के मंदिर में प्राचीन काल से ही सफल हो रही है। अर्थात् ब्रह्मोत्सव में (एव और भी दो बार) जब भगवान का गरुडवाहनोत्सव होता है, तब वह सवारी आल्वार तिरुवीथी से ही निकलती है। मालूम पडता है कि देवाधिदेव श्रीवरदराज भगवान के प्रति आल्वार का कोई विशेष भक्तिभाव था। अत एव उनके प्रथम प्रबध 'तिरुविरुत्तम्' की पहली गाथा के तीसरे पाद में, एव प्रकृत सहस्रगीति की पहिली गाथा के तीसरे पाद में उन्ही भगवान का नाम कीर्तित हुआ। श्रीवेदातदेशिक स्वामीजी ने भी अपने विरचित 'द्रमिडोपनिषत्सार' में "प्रथम शतके वीक्ष्य वरदम्" (सहस्रगीति का सारा पहला शतक वरदराज भगवान की स्तुति हैं) कहते हुए सप्रदाय परपराप्राप्त इसी अर्थ का वर्णन किया।

प्रकृत दशक की पहली गाथा मे गरुडजी को तीक्ष्णपक्षवाले कहनेवाले आल्वार, हाल में उनको [परमकारुणिक] कह रहे है। अपनी इच्छा की निर्विघ्न पूर्ति के लिए यह कहा गया है। [एक ही बार] निकालने की प्रार्थना इस लिए की जाती है कि बारबार एक महिला की (पराकुशनायिका की) वीथी में से निकलने पर भगवान को कलक लगने का भय हो सकता है। [उनके शरीर छूटने से पहले] इत्यादि अश्लील वार्ता कहने का भी कारण आल्वार का अत्यधिक दुःख ही है। कहना था कि "गरुडवाहन हमारी वीथी से होकर निकलें," इसकी जगह "भगवान गरुडजी को हमारी वीथी से चलावें" कहने का यह तात्पर्य है—भगवान को अपने कधो पर विराजमान कर निकलने वाले गरुडजी आल्वार के मकान के सामने आनेपर, उनके ज्ञानभक्त्यादि विभूषित दिव्यमगलविग्रह के दर्शन कर, परवशचित्त होकर वहीं खडे हो जायगे, तब भगवान को "आगे चलो चलो" कहते हुए उनको चलाना पडेगा॥ (६)

(गाथा) एन्विळै कोप्पदु पोल पनिवाडै यीर्हिन्र ※
एन्पिळैये निनैन्दरुळि अरुळाद तिरुमालार्कु ※
एन्पिळैत्ताव् तिरुवडियिन् तहविनुक्के ओरुवाय् शोल्ल ※
एन्विळैक्कु मिळङ्किळिये यान् वळर्त्त नीयलैये॥ ७॥




अयि मोः शुकशाव! अस्थिग्रन्थौ तन्तुप्रवेशनवत् शिशिरः पवनो मा हिनस्ति हन्त। अस्यां दशायां ममापराधमेव निचिन्त्य कृपामकुर्वतो लक्ष्मीपतेस्सविधे "तवभवतः स्वाभा-

**विकृकृपागुणस्य विघातकतया किमपराद्धमनेन जनेन" इत्येकस्यास्संदेशवाचः कथने हन्त! का ते क्षतिर्भवित्री? किं त्वं मयाऽभिवर्धितः शुको न भवसि? ॥**

*अधस्तनगाथाया गरुडारूढस्य भगवत स्वरथ्यायामागमनं सदिष्टमभूत्, तत्रैव भगवन प्रत्युक्तिस्स्यात्-स्वकीयापराधभूयस्त्वामविचिन्त्य एवमभ्यर्थने किं नाम फलं स्यादिति; इति मन्यमाना पराङ्कुशनायिका शुकशाब-मुदिश्य सदिशति गाथायामस्याम्*—स्वकीय मपराधसहत्वरूपं क्षमागुणमविचिन्त्य मदपराधमात्रविचिन्तनमुचित वेति कथयेति ।

शुकशावत्वेनात्र विवक्षित शिष्यलक्षणसम्पन्नश्छात्र इति ग्राह्यम्। यद्यप्याचार्येष्वपि शुकसाधर्म्य सूपपादम्, तथाऽप्यत्र शावत्वेन सम्बोधनात् 'मदभिवर्धित किं त्व न भवसी'ति कथनाच्च शिष्यविवक्षणमेव संप्रतिपन्नम्। शुकसाधर्म्योपपादन [illegible] शिष्याणामाचार्याणामप्यविशेष वेदितव्यम्। एकस्या एव व्यक्ते कदाचि-च्छिष्यताम् अन्यदा आचार्यता च ननु पश्याम । श्रीवत्साङ्कमिश्रगुरुवर स्तुवन् कोऽपि महानाह—* कूराधीश गुरुतरदयादुग्धसिन्धु तमीडे श्रीवत्साङ्क श्रुतिमतगुरुच्छात्रशीलैकधाम * इति । गुरुशील छात्रशील च कतिपयेषु गुरुवरेषु सामानाधिकरण्येन नृत्यत इव । अथ शुकसाधर्म्यप्रकारा अमी । (१) यथाशिक्षणमनूच्चारण शुकेषु प्रसिद्धम्, रङ्गरङ्ग! रामरामेति कथनमनुवदन्ति शुका इति प्रेक्षामहे । दक्षिणचित्रकूटक्षेत्रवर्णने श्रोत्रियद्विजन्म-वरसंनिहिता शुका वेदानूच्चारणमपि कलयन्तीति कलिजित्सूरिराह बृहत्सूक्ते । एव महद्भिरुपदिष्टानर्थविशेषान् शब्दविशेषांश्च अविपर्ययेण अनुवदन्तस्सच्छात्रा विवक्षिताः । "भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्यास्संचिक्षिपु ; तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते" इति श्रीभाष्यमुपक्रममाणै र्भगवद्रामानुजैस्स-दर्शित पन्थानमभिरक्षन्त. प्रमाणपरतन्त्रा विवक्षिता । व्यासजैमिनिमुन्यो र्गुरुशिष्यभाव [illegible]स्तयोरपि सेश्वर-वादनिरीश्वरवादनिबन्धनमतभेदशालित्वापख्यातिर्यथा प्रसृता तथा येषां न भवति ते खलु शुकसाधर्म्यं प्राधान्ये-नानुविन्दन्ति । (२) सरसचरणशीलान् शुकान् पञ्जरेषु बध्नन्तीति प्रेक्षामहे । किमत्र कारणम्? * शुक! पञ्जरबन्धस्ते मधुराणां गिरां फलम् * इति चन्द्रालोके पठाम । मधुरवाणीश्रवण कुतूहलेनैव हि शुकान् पञ्जरे बध्नन्ति। एव मधुरतरवाग्व्याहरणेन श्रोतृजनहृदयमुपच्छन्दयितु प्रभवन्तोऽन्तेवासिनः स्वच्छन्दसचरणप्रतिरोध-पूर्वक क्वचिन्नियन्त्रिता भवन्तीति पश्याम । * श्रीरङ्गं करिशैलमञ्जनगिरिमित्यादिश्लोकोक्तरीत्या नानादिव्यदेश-पर्यटनप्रावण्यजुषो भगवद्रामानुजमुने * द्वयमर्थानुसन्धानेन सह सदैव वक्ता यावच्छरीरपातमत्रैव श्रीरङ्गे सुखमास्व इति श्रीरङ्गनाथ भगवत्कृतमाज्ञापन चात्रानुसन्धेयम्। (३) पक्षिजातौ शुकतुल्यसौन्दर्यशालिन पक्षिणो नान्ये, स्पृहणीयतनवो हि शुकाः। एवम् आत्मसौन्दर्यमिव शारीरसौन्दर्यमपि येषु वर्तते ते विवक्षिता । * काषायशोभि कमनीयशिखानिवेश दण्डत्रयोज्ज्वलकर विमलोपवीतम्। उद्यद्दिनेशनिभमुल्लस-दूर्ध्वपुण्ड्रं रूप तवास्तु यतिराज! दृशोर्ममाग्रे ॥ * इत्युपश्लोकनार्हविलक्षण दिव्यमङ्गलविग्रहसुषमासुभगा इत्युक्त भवति। (४) शुका. स्वामिवर्धननिरतानां करतलमश्नन्त तत्प्रदत्त बिम्बफलादिकमश्नन्तीति पश्याम। एवम् * उपायो नेप्ये * इत्युक्तया स्वान्तिक एव स्थापयित्वा विवर्धयता माचार्याणां सर्वथा परतन्त्रा भूत्वा तत्प्रदत्तान् सदर्थानुपभुञ्जानास्सच्छिष्या विवक्षिता । एवमन्येऽपि साधर्म्यप्रकारा उन्नेया ।

प्रथमपादे शिशिरवातेन स्वस्य भृशं बाध्यमानतामाचष्टे पराङ्कुशनायिका। लोके दाम्पत्येन वर्तमानाः शिशिरसमीरणमन्विष्य गच्छन्तीति, विरहिणो जना स्तादृशपवनस्पर्शमात्रेणाप्युद्विजन्त इति च पश्यामः। पम्पासरस्तीरमनुप्राप्तस्सीताविरहितो रामचन्द्रः "पद्मसौगन्धिकवहं शिवं शोकविनाशनम्। धन्या लक्ष्मण! सेवन्ते पम्पोपवनमारुतम्॥ * इति सौमित्रिं प्रति कथयन् खिद्यते। अत्र द्वितीयपादे शोकविनाशनमिति मारुतविशेषणं विमर्शास्पदम्। विरहिणो रामचन्द्रस्याथ मारुतः शोकविवर्धन एव न तु शोकविनाशनः; तत्कथमुच्यते शोकविनाशनमितीति विमर्श आवश्यकः। उत्तरार्धे * धन्या लक्ष्मण! सेवन्ते * इत्युक्तत्वात् सेवमानानां धन्यानां दृष्टया तयोक्तिरिति केचन व्याचक्षते। रसिकाग्रेसराणां श्रीकलिवैरिगुरुवराणां व्याख्यानं तु विलक्षणं परमशोभनं च। नात्र शोकनाशनमित्युक्तम्, अपि तु शोकविनाशनमिति। शोकस्यात्यन्तिकनाशकत्वमुक्तं भवति। शोकस्यात्यन्तिकनाशः कदा भवेत्? शरीरं यावदवतिष्ठते तावन्नैव भवेत्। संयोगाना विप्रयोगान्तत्वात् नष्टः शोकः पुनरुद्भवेदेव। पुनरिति किम्? पुनःपुनरुद्भवेदेव। यदा तु निधनं संघटते ततःपरं शोकस्य प्रसङ्ग एव न स्यात्; आत्यन्तिकविनाश एव तस्य। तथाच प्राणापायकरोऽयं शीतवातपोत इति सिध्यति। एतादृशीं बाधामनुभवामि बतेति कथयति पराङ्कुशनायिका। हिंसाया दृष्टान्त उच्यते **अस्थिग्रन्थौ तन्तुप्रवेशनव**दिति। अस्थिपुञ्जे रन्ध्राणि कृत्वा तत्र तन्तुप्रवेशने कृते यादृशी बाधा भवेत्तादृशीति कथितं भवति।

अथ स्वदेशगोचरीभूतो भगवान् विशेष्यते **ममापराधमेव विचिन्त्य कृपामकुर्वतो लक्ष्मीपते**रिति। अपराधकर्तृत्वं मम सहजस्वभावो यथा तथा तस्य अपराधसहत्वं प्रकृतिः खलु। तत्र विस्मरणम् मदपराधेष्वेव स्मरणं च नोचितमिति कथय। एतेन भगवतः क्षमागुणोद्बोधनं क्रियते। सहस्रनामस्तुतौ **अविज्ञाते**ति भगवत एकं नाम। * अविज्ञाता हि भक्तानामागस्सु कमलेक्षणः * इति तन्निरुक्तिः। भक्तापराधेष्वविज्ञातेति प्रसिद्धस्स इदानीं तेषु प्राज्ञो बभूवेव। स्वगुणेष्वविज्ञाता, परदोषेषु प्राज्ञश्च बभूविथ किम्? इति पृच्छेत्युच्यत इव। [**कृपामकुर्वतो लक्ष्मीपतेः**] कृपाराहित्यस्य लक्ष्मीपतित्वस्य च सामानाधिकरण्यं कथं संघटेत हन्त। लक्ष्मीस्तावत् * न कश्चिन्नापराध्यतीति क्षमनशीला। * पितेव त्वत्प्रेयान्....भवति च कदाचित्कलुषधीः। किमेतन्निर्दोषः क इह जगतीति त्वमुचितैरुपायैर्विस्मार्य स्वजनयसि माता तदसि नः॥ * इत्युक्तरीत्या भक्तनिग्रहाभिमुख्यनिवारणपूर्वकं तदनुग्रहौन्मुख्यसंधुक्षणशीला च। तादृश्या पतिर्भूत्वा कथमिव मम दोषाननुचिन्तयतीति पृच्छ—इति वेदान्तियतीन्द्र (नञ्जीयर) निर्वाहः। श्रीकुरुकेशार्यनिर्वाहस्तु—लक्ष्मीः स्वकीयविभ्रमभ्रमिषु तं विनिमज्जयन्ती सती तस्य आन्यपर्यं निरुणद्धि; अत एव तस्यामेवास्तमितान्यभावस्सन् हन्त मामुपेक्षत इव इति। [**किमपराद्धमनेन जनेनेति कथय**] स्वस्मिन्नपराधो नास्तीति कथनं नात्र विवक्षितम्। तदीयक्षमागुणभूम्नो निरीक्षणे इतोऽपि भृशमपराद्धव्यम्; तावत्तु नैवापराद्धमित्येव विवक्षितम्। सुग्रीवसख्यसमनन्तरं वालिवधादिनिर्वर्तनादूर्ध्वं वर्षाकाले वहिः प्रयाणमनुचितमिति मन्यमानेन दाशरथिना मासद्वयावधिर्दायि वानरपतये। अत्रविस्तारतीतं। सुग्रीवो भोगप्रवणस्सन्नत्यन्तमेव विसस्मार रामचन्द्रम्। तदात्वे कोपकषायितहृदयः काकुत्स्थः * समये तिष्ठ सुग्रीव! मा वालिपथमन्वगाः॥ न च संकुचितः पन्था येन वाली हतो गतः। .... हनिष्यामि सबान्धवम् * इत्यादिकमतिपरुषमभिधाय किष्किन्धाद्वारं प्रजिघाय

लक्ष्मणम् । स च तत्र गत्वा दारुणं ज्याघोषमुपबृंहयति स्म । तदा विदितोदन्ता तारा बहिरागत्य * किं कोपमूलं मनुजेन्द्रपुत्र! कस्ते न सन्तिष्ठते वाङ्निदेशे? * इत्यप्राक्षीद्रामानुजमिति विलिखति वाल्मीकिः । अत्रेदं विचार्यम् । किं न जानाति कोपमूलं तारा? कथं न जानाति? सम्यगेव जानाति । ज्ञात्वाऽपि कथमेवमनुयुङ्क्ते । स्वस्मिन्नपराधो नास्तीति न; कोपप्रतिबन्धके क्षमागुणे त्वयि वर्तमाने सति हन्त कथमिव कोप उदियाय? इति तावत्प्रश्नाभिप्रायः । कार्यसामान्यं प्रति कारणकलापसमवधानमात्रस्य हेतुकमिति स्थितम् । तत्समवधानेऽपि प्रतिबन्धकसद्भावे कार्यं नैवोदेति । ततश्च प्रतिबन्धकाभावसमवहित कारणकलापसद्भावः कार्यसामान्यं प्रति कारणमिति परिष्कुर्वन्ति पण्डिताः । एवं निग्रहं प्रति अपराधस्य कारणसद्भावमात्रमप्रयोजकम्; प्रतिबन्धकाभाववैशिष्ट्य चास्यपरम् । प्रकृते तद्दुर्लभम् । क्षमायाः निग्रहप्रतिबन्धकत्वात्, तत्स्मरणे कृते निग्रहौन्मुख्यं विहाय अनुग्रहाभिमुखस्स्याद्भगवानिति पराङ्कुशनायिकायास्सुशोभनं हृदयम् ।

[किं त्वं मयाऽभिवर्धितः शुको न भवसि?] यद्यपि भर्ता हिंसां कर्तुं प्रभवति; मयाऽभिवर्धितस्य तवापि हिंसाकृत्यं किमुचितम्? इत्येको भावः । दूत्याय झटिति प्रस्थानादर्शनेनैवमुच्यते । स्वयं परमकारुणिको भगवान् मत्सम्बन्धवशादेव हि विपर्यस्तप्रकृतिं समनुपेक्षते, तस्मिन्निव त्वय्यपि मत्सम्बन्धसद्भावात् तवाप्युपेक्षणमुचितमेवेत्यपरो भावः ॥ [किमपराद्धमनेन जनेन] इत्यत्र व्याख्यातृमहाभागा एवमनुगृह्णन्ति—'तत्रभवतः कृपायाः प्रतिबन्धकत्वेन किं मया प्रदक्षिणनमस्कारादिकं किञ्चिदनुष्ठितमिति प्रष्टव्यम्' इति श्रीमत्कलिवैरिगुरुवरा अनुजगृहुः —इति । अत्रेदं विचार्यम्—प्रदक्षिणनमस्कारादिकं किं भगवत्कृपायाः प्रतिबन्धकम्? प्रत्युत अभिवर्धकमेव खलु । एवमनुगृहीतवन्त आचार्यचरणाः किं नान्वतिष्ठन् प्रदक्षिण नमस्कारादिकम्? इति । अत्रेदमभिसंहितम् । प्रदक्षिणनमस्कारादिषु कृत्यकलापेषु आकारद्वयमस्ति तावत्, कैङ्कर्यरूपता साधनानुष्ठानरूपता चेति । कैङ्कर्यधिया तदनुष्ठातारः अतीव विरलाः; * निजकर्मादि भक्त्यन्तं कुर्यात्प्रीत्यैव कारितः । उपायतां परित्यज्य न्यस्येद्देवे तु तामभीः ॥ * इति गीतार्थसंग्रहे भगवद्यामुनमुनीन्द्रानुगृहीतरीत्याऽनुष्ठातारो नात्र विवक्षिताः । प्राकृतजनानिव किमस्मानपि साधनानुष्ठानवैयग्र्येण भवत्कृपाप्रतिरोधजनकान् मन्यसे? इति पृच्छेत्युक्तं भवति ॥ (७)

**(हिंदी) हे बालशुक! सुई में गुंथे जाने वाले सूत की तरह अतिशीतल दक्षिणमारुत, हाय! मुझे बहुत त्रास दे रहा है। ऐसी दशा में मेरे अपराधों पर ही नजर डालकर कृपा न करने वाले लक्ष्मीपति, भगवान से यह एक संदेशवचन कहने में तुम्हें कौन-सी हानि होगी कि "इससे ऐसा कौनसा अपराध किया गया, जो कि आपकी स्वाभाविक कृपा की प्रतिबंधक होगी?" क्या तुम मेरे पालित शुक नहीं?**

पूर्वगाथा में भगवान को गरुडारूढ होकर अपनी वीथी से पधारने का संदेश भेजने पर पराङ्कुश नायिका ने सोचा कि, शायद भगवान इसका यह प्रत्युत्तर देंगे कि, 'अपने सीमातीत अपराधों का ख्याल न करके ऐसी प्रार्थना करने में क्या लाभ है?' अतः वह प्रकृतगाथा में एक बालशुक के द्वारा यह संदेश भेजती है कि, क्या भगवान को, अपने अपराधसहनशीलता नामक गुण का ख्याल न करते हुए मेरे अपराधों की ही चिंता करना उचित होगा।

यहा पर बालशुक शब्द से शिष्यलक्षण सपन्न चेले सूचित किये जाते हैं। यद्यपि शुक के वक्ष्यमाण लक्षण, शिष्य की तरह आचार्य में भी घटित होते हैं, अत उनकी भी सूचना हो सकती है; तथापि प्रकृत गाथा में 'बाल' शुक कहने से, तथा 'मेरे पालित' कहने से शिष्य का ही ग्रहण करना उचिततर है। हाल में जो किसी का शिष्य रहता है, वही, बाद में दूसरों का आचार्य बन जाता है। अत शिष्यत्व व आचार्यत्व, ये परस्परविरुद्ध धर्म नहीं हैं। अत एव किसी एक महात्मा ने श्रीकूरेशस्वामीजी की यह विलक्षण स्तुति की—"कूराधीश गुरुतरदयादुग्धसिन्धु तमीडे श्रीवत्साङ्कं श्रुतिमतगुरुच्छात्रशीलैक-धाम।" (श्रीकूरनामक नगर के स्वामी, अत्यधिक दयागुण के सागर, वेदोक्त समस्त गुरु व शिष्यों के लक्षणों से परिपूर्ण, श्रीवत्साङ्क नामक महात्मा की स्तुति करता हू।) इससे स्पष्ट होता है कि कतिपय महात्माओं में शास्त्रोक्त सभी शिष्यलक्षण व आचार्यलक्षण परिपूर्ण रूप में विराजते हैं। अस्तु। अब शुक का व्यग्यार्थ बताएंगे। (१) किसी प्रकार का परिवर्तन किये बिना, सिखाये हुवे शब्द का ज्यों का त्यों उच्चारण करना शुक का गुण है, श्रीपरकालसूरी अपने बृहत्सूक्त में दक्षिणचित्रकूट क्षेत्र के वर्णन प्रसग में कहते हैं कि उधर के ब्राह्मणों के यहा बसनेवाले तोते वेद का भी पाठ करते हैं। इसी प्रकार श्रेष्ठ शिष्य भी गुरुके उपदिष्ट शब्दों व अर्थों का ठीक उसी प्रकार अनुकरण करते हैं, अर्थात् वे उनमें कोई अन-पेक्षित परिवर्तन नहीं करते। यथा श्रीरामानुजस्वामीजी ने अपने श्रीभाष्य के प्रारभ में लिखा—"हमारे पूर्वाचार्यों ने भगवान बोधायन मुनिके विरचित, विस्तृत ब्रह्मसूत्र व्याख्यान का सग्रह किया। उनके मतानुसार अब मैं उन्ही ब्रह्मसूत्रों के अक्षरलभ्य अर्थों का विवरण करूगा।" अर्थात् श्री रामानुज स्वामीजी यह प्रतिज्ञा करते हैं कि पूर्वाचार्यों के वचनानुसार और सूत्रकार के हृदयानुसार ही आप श्रीभाष्य की रचना कर रहे हैं; न तु स्वकपोलकल्पित किसी मतके अनुसार। पूर्वमीमासा सूत्र के रचयिता महर्षि जैमिनि भगवान वेदव्यासजी के शिष्य थे। परतु उनका अपने गुरु के विरुद्ध निरीश्वरवादी होने का अपयश हो गया। इस प्रकार जिसको अपने गुरु के विरुद्ध होने का अयश न लगे, ऐसे, सर्वथा तन्मार्गानुसारी शिष्य शुक शब्द के अर्थ होते हैं। (२) तोते की मधुरवाणी सुनने के लिए लोग उसे स्वेच्छाविहार करने से रोक कर पजर में बधित रखते हैं। इसी प्रकार श्रोतृजनमनोहारि प्रवचन करने मे समर्थ विद्वानों को, इनकी वाणी सुननेके लिए रसिकजन यथेच्छसचार से रोक कर एक स्थल पर उन्हे स्थापित कर देते हैं। श्रीरगनाथ भगवान ने, "श्रीरङ्ग करिशैलमञ्जनगिरिम्" इत्याद्युक्त प्रकार दिव्यदेशयात्रा करने में निरत श्रीरामानुजस्वामीजी को "अत्रैव श्रीरङ्गे सुखमास्स्व" (इसी श्रीरगक्षेत्र में नित्यनिवास करो) कहते हुए एक स्थल पर रोक दिया। (३) पक्षिजाति म तोते सबसे सुदर होते हैं, इससे मनोहरदिव्यमगलविग्रहवाले महात्मा लोग सूचित किये जाते हैं। यथा श्री रामानुजस्वामीजी की यह स्तुति है—"काषायशोभि कमनीय-शिखानिवेशं दण्डत्रयोज्ज्वलकरं विमलोपवीतम्। उद्यद्दिनेशनिभमुल्लसदूर्ध्वपुण्ड्रं रूपं तवास्तु यतिराज दृशोर्ममाग्रे।" (हे यतिराज! मेरी आँखों के सामने आप अपने दिव्यमगलविग्रह के दर्शन देते रहें, जो कि, काषाय से (गेरुआ वस्त्र) सुशोभित, सुदर शिखावाला, त्रिदड से शोभायमान हस्तवाला, शुभ्रयज्ञोपवीतवाला, उगनेवाले सूर्य की भाति प्रकाशमान और चमकनेवाले ऊर्ध्वपुड्र से विभूषित है।) (४) शुक, अपने पालक की हथेली पर बैठकर उसके प्रदत्त फलादि खाता है, एव "उप त्वा नेष्ये" (तुझे अपने पास लूगा) इत्याद्युपनयन

मतोक्तप्रकार, आचार्य, शिष्य को अपने पास ही रखकर मदर्थरूप आहार देकर, उसका पालन करते हैं, ऐसा शिष्य शुक कहला सकता है। ऐसे और भी सादृश्य के अनेक प्रकार होते हैं।

गाथा के पहले पाद में नायिका शीतउपवनबाधा का वर्णन करती है। यह तो लोकानुभव की बात है कि सश्लिष्ट कामी लोग शीतलपवन की खोज में जाते हैं, परन्तु विश्लेष काल में उन्हें वही पवन दुःखद होता है। सीताविरहित श्रीरामचंद्र जी पपासरोवर के पास पहुंचकर प्रलाप करते हैं—"पद्म सौगन्धिकवह शिव शोकविनाशनम्। धन्या लक्ष्मण! सेवन्ते पम्पोपवनमारुतम्॥" (हे लक्ष्मण! कमलपुष्प की सुगध का वाहक, मगलमय, एव दुःखविनाशक, पपासर के उपवनों से होकर बहनेवाले इस पवन का सेवन करनेवाले धन्य हैं।) यहा एक शका होती है कि हाल में विरही श्रीरामचद्रजी अपना सताप बढानेवाले इस पवन को कैसे 'शोकविनाशन' कह रहे हैं। कुछ लोग इसका यह समाधान करेंगे कि उत्तरार्ध में 'धन्य' शब्द आता है, अत ऐसे धन्यों के अभिप्राय से शोकविनाशन कहा गया है। यह तो ठीक है, परतु रसिकाग्रेसर चक्रवर्ती श्री कलिवैरिस्वामीजी इसका दूसरा ही एक परमभोग्य विवरण करते हैं—मूलशब्द है शोकविनाशनम्, न तु शोकनाशनम्, अर्थात् 'नाशन का एक उपसर्ग दिया गया है-वि। वि माने विशेषन। तथाच शोक का सर्वथा विनाश कहा गया। यह सर्वथा दुःखनाश तो इस शरीर के रहते हुए न मिलेगा, क्योंकि कदाचित् सश्लेषानद पानेवाले भी बाद में विश्लेषदुःख भोगते ही हैं। अर्थात् ससार का यह स्वभाव है कि यहा किसीको नित्यसुख नहीं मिलता, अपितु सुख व दुःख दोनों मिले ही रहते हैं। शरीर के छूट जाने पर तो फिर विश्लेष प्रस्ताव के अभाव से शोक का पूर्ण नाश होगा। तथाच हाल में श्रीरामचद्रजी का यह अभिप्राय है कि यह पपोपवन-पवन इतना क्रूर है कि यह मेरा शरीरनाश ही करा देगा। अब पराकुशनायिका यह कहती है कि अब मै भी दक्षिण मारुत के कारण ऐसे असह्य दुःख भोग रही हू। दुःख का दृष्टांत दिया जाता है—[अस्थि में सूत्र घुसे जाने की तरह]। यह भाव है—अपनी हड्डी में छेद बनाकर उसमें सूत्र घुसेड़ने से मानव को जितना और जैसा दुःख लगेगा, ठीक वसा ही दुःख यह दक्षिण-मारुत मुझे भी दे रहा है।

सदेश के लक्ष्य भगवान का विशेषण दिया जाता है—[**मेरे अपराधों पर ही नजर डालकर कृपा न करनेवाले लक्ष्मीपति**] जैसे अपराध करना मेरा स्वभाव है, वैसे उनकी क्षमा करना आपका स्वभाव है। यह स्वभाव भूलकर मेरे दोषों का ख्याल करना आपके लिए अनुचित है। इस विनती से भगवान की क्षमा उद्बोधित की जाती है। श्रीविष्णुसहस्रनाम स्तोत्र में भगवान का यह एक नाम गाया गया है—अविज्ञाता। अविज्ञाता माने जो कुछ भी न जानता है, अर्थात्—अज्ञानी। भक्तों के अपराध नहीं जानने से भगवान अज्ञानी कहे गये! एव अविज्ञातृत्वेन सस्तुत भगवान अब भक्तापराधों के ज्ञाता बन गये होंगे। भगवान से यह पूछो कि क्या अब आप स्वगुणों के अविज्ञाता और भक्तदोषों के ज्ञाता बन गये। [**कृपा न करनेवाले लक्ष्मीपति**] यह तो शब्दों का विचित्र मिश्रण है। लक्ष्मीपति और कृपाशून्य का कौनसा सबध होगा? कुछ भी नहीं। लक्ष्मीजी का सिद्धान्त है—न कश्चिन्नापराध्यति (माने ससार में अपराध न करनेवाला कोई भी नहीं)। और अपराधी को दड देने में उद्यत भगवान को भी उस काम से

रोककर, उलटा कृपा करने की प्रेरणा देना लक्ष्मीजी का स्वभाव है। अतः, श्री वेदांतिस्वामी नामक नञ्जीयर ने इसका यह तात्पर्य बताया, कि ऐसी महालक्ष्मीजी के पति होते हुए भी, हे भगवन्! आप अब मुझ पर कैसे निर्दय बन गये? पट्सहस्री व्याख्याकार श्री कुरुकेशस्वामीजी का विवरण यह हुआ—इस समय भगवान लक्ष्मीजी के भोग में आसक्त होकर, उसीमें लीन होनेके कारण ही शायद मेरी उपेक्षा कर रहे हैं। [इससे एसा कौनसा अपराध किया गया] इत्यादि से आळ्वार अपने निरपराध होने का दावा नहीं कर रहे हैं; किंतु उनका यही तात्पर्य है कि भगवान के असीम क्षमागुण पर ध्यान देने पर कहना पड़ता है कि अभी तक हमने इतने पाप नहीं किये, जो उनकी क्षमाके पर्याप्त हों; अतः हमें और भी बहुत पाप करना चाहिए; अबके हमारे पाप अत्यल्प हैं। अर्थात् यह भगवान की क्षमा की प्रशंसा है, ननु अपने में अपराधाभाव का दावा। श्रीरामायण में किष्किंधाकांड की कथा है। वालिवध के बाद श्रीरामचंद्रजी ने उपस्थित वर्षाकाल में रावण पर विजययात्रा करना अशक्य मानकर, उतने समय सुग्रीव को आराम करने की अनुमति दी। साथ ही उन्होंने यह भी आज्ञा दी कि चौमासे के समाप्त होते ही रावणवध के लिए अवश्य प्रयत्न करना चाहिए। परंतु अपने कामभोगों में मस्त सुग्रीव श्रीरामचंद्र जी को सर्वथा भूल गया। इससे कुपित श्रीरामचंद्रजी ने लक्ष्मणजी के द्वारा उसे यह संदेश भेजा कि, "अरे! वानर, सुग्रीव! अपनी प्रतिज्ञा पर ध्यान रखो। मारे हुए वाली का गया मार्ग अभी संकुचित नहीं हुआ। अपनी प्रतिज्ञा का ख्याल न रखनेवाले तुमको मैं वाली के पीछे उसी राह भेज दूंगा। (अर्थात् वाली की भांति तुमको भी मार डालूंगा; इतना ही नहीं; वाली एक ही गया; सत्यमार्ग से भ्रष्ट तुम्हें तो तुम्हारे बंधुमित्रों के साथ मार डालूंगा।) इत्यादि। तब लक्ष्मणजी ने भी वेगसे किष्किंधा पधारकर, सुग्रीव के महल पर पहुंचकर उसे अपने आनेकी सूचना देने के लिए धनुष का टंकार किया। महर्षि वाल्मीकी लिखते हैं कि यह समाचार पाकर ताराने अंतःपुर से बाहर आकर लक्ष्मणजी से यह विनती की कि "किं कोपमूलं मनुजेन्द्रपुत्र! कस्ते न संतिष्ठति वाङ्निदेशे" इत्यादि (हे राजपुत्र! आपके कोप का कारण क्या है? आपके आज्ञानुसार कौन न चलेगा?) अहो! यह कैसी बात है? क्या तारा लक्ष्मणजी का कोपकारण नहीं जानती? ठीक जानती ही है। जानकर भी वह यह कौनसा प्रश्न कर रही है? आचार्य इसका भाव यों बताते हैं—तारा यह नहीं कह रही है कि अपने में दोष नहीं; परंतु भगवान में (एवं लक्ष्मणजी में भी) इतनी क्षमा है कि वे इससे सौगुने अपराध का भी सहन कर सकते हैं। तथाच तारा का यह प्रश्न है कि, "प्रभो! ऐसा असीम क्षमागुण के भंडार होते हुए आप कैसे रुष्ट हो रहे हैं?" इस न्याय से परांकुशनायिका का यह अभिप्राय है कि भगवान को अपनी (भगवान की) क्षमा की याद दिलाने पर, आप भक्त के निग्रह की चिंता छोड़कर अनुग्रह करने के तैयार हो जायगे।

नायिका की यह बात सुनकर भी जब वह शुक भगवत्सनिधि जाने के लिए झट न उठा, तब नायिका उससे पूछती है—[क्या तुम मेरे पालित शुक नहीं?] भर्ता होने से भगवान कदाचित् मेरी हिंसा भी कर सकते हैं, मेरे पालित तुम भी कैसे हिंसा कर सकते हो? (अर्थात् मेरे कथनानुसार भगवान के पास न जाते हुए मेरी उपेक्षा कर, क्यों कर तुम मुझे दुःख दे रहे हो!) अथवा, स्वय

कारुणिक स्वभाव भगवान ही जब मेरे संबंध से निर्दय बन गये; तब उसी मेरे संबंध से तुम भी मुझ पर निर्दय बन गये हो; यह तो उचित ही है।

[इसने ऐसा कौनसा अपराध किया गया?] यहां पर सहस्रगीतिटीकाकार आचार्य, श्रीकलिवैरिगुरु नामक नम्पिळ्ळै स्वामीजी एक विलक्षण वचन लिखते हैं—"भगवान से यह पूछो कि आपकी कृपा का प्रतिबंध करते हुए क्या मैं ने प्रदक्षिण नमस्कारादि कुछ भी अनुष्ठान किया!" यह तो एक विचित्र-सी बात है। प्रदक्षिण नमस्कार इत्यादि भगवत्कृपा के प्रतिबंधक नहीं हो सकते हैं; वरन् उत्तेजक ही होंगे। अन्यथा पूछना पड़ेगा कि क्या श्रीकलिवैरिगुरु ने कभी भगवान का प्रदक्षिण अथवा प्रणाम नहीं किया। इसका यह भाव है—प्रदक्षिण प्रणाम इत्यादि कार्य के दो आकार होते हैं—भगवत्कैंकर्य होना, और किसी फलका उपाय होना। अर्थात्, श्रीमद्यामुनाचार्य स्वामीजी के अपने गीतार्थसंग्रह में प्रदर्शित प्रकार, फलकामना छोड़कर, साक्षात् भगवान को ही उपाय मानते हुए, केवल कैंकर्यभावना से प्रदक्षिण इत्यादि कार्य करने में कोई आपत्ति नहीं हो सकती। परंतु इन्हीं कार्यों को उपायबुद्धि से करने पर वे अवश्य ही भगवत्कृपा के प्रतिबंधक बन जाते हैं। अर्थात् यों करनेवालों के प्रति भगवान का यह विचार होता है कि, "ठीक है; ये लोग अपने प्रयत्न से पुरुषार्थ कमाने की चेष्टा करते हैं; अतः हाल में मुझे इन पर कृपा करने की आवश्यकता नहीं होगी। अतः हाल में श्रीपरांकुश नायिका भगवान से यह पूछना चाहती है कि क्या मैंने आपको ही उपाय न मानती हुई, आत्मकल्याण के लिए प्रदक्षिण प्रणामादि साधनों का अनुष्ठान कर आपके कृपाप्रवाह को रोक दिया॥ .... .... .... (७)

(गाथा.) नीयलैये शिरुपूवाय् नेडुमालार् केन्तूदाय् *
नोयेनदु तुवलेन्ब तुवलादे यिरुन्दोळिन्दाय् *
शायलोडु मणिमामैं तळर्न्देन् नान् * इनियुनदु
वायलहि लिन्नडिशिल् वैप्पारै नाडाये॥ ८॥

अयि भो बालशारिके! भूरिव्यामोहशालिनो भगवतस्सकाशे मम दूती सती गत्वा मदीयां व्यथां निवेदयेत्युक्ताऽपि त्वं अनिवेद्य जोषमवतिष्ठसे हन्त!. किं त्वं विपर्यस्तप्रकृतिरसि? अहं तावत् प्रनष्टसौन्दर्यलावण्या समभूवम्। इतः परं त्वच्चञ्चूपुटे भोग्यं भोज्यं ये विन्यस्येयुः तान् त्वमेवान्विष्य संपादयतात्॥

सैषा गाथा मुनीन्द्रस्य चरमसंदेश इवावतरति हन्त। जगति प्रायस्सर्वेऽपि स्वस्य चरमकाले कमपि कमपि संदेशं दिशन्ति पुनर्जीवितनैराश्येन; स एव चरमसंदेशः प्रथितः। तादृशोऽयं संदेशोऽयमिति- चरमचरणेन व्यज्यते। "इतः परं त्वत्पोषकान् त्वमेव मृगयस्व" इति तावदन्त्यपादेनाभिधीयते।, ततश्च तादृशी दशा साम्प्रतं समजनीति प्रतिपत्तव्यं भवति। शारिका नाम शुकजातौ जातः पक्षिविशेषः। अवस्तनगाथायां शुकसाधर्म्यप्रकारा येये निरूपितास्तेऽत्रापि विभाव्याः। * नीयलैये शिरुपूवाय्! * इति तावद् गाथोपक्रमः। शारिकायास्संबोधनात्प्रागेव किं त्वं विपर्यस्तप्रकृतिरसि? इत्युच्यते।, अत्रायमभिसन्धिः, लोके बन्धुजना रुग्णास्सन्ति चेत्, आप्तेषु जनेषु

**[नीलादेवी के लिए गोपश्रेष्ठ बनकर]** इत्यादि। आळ्वार का यह अभिप्राय है कि यदुवंश में अवतीर्ण श्रीकृष्ण ने उसे छोडकर इस लिए व्रज पधार कर गोपवंश को अपनाया, कि उस कुल में नीलादेवी का अवतार हुआ था और उसके साथ परिणय करने की आवश्यकता थी। श्रीभक्तिसारसूरी भी अपने तिरुच्चदविरुत्त नामक दिव्यप्रबंध की ("आयनाहि" इत्यादि) एकतालीसवीं गाथा में ऐसा ही कहते हैं। प्रथमसहस्र के अतर्गत उक्तगाथा की तथा तिरुप्पावै की अठारहवीं गाथा की टीका मे पूरा विवरण दिया गया है; वहां देख लें ॥.... .... .... (१)

(गाथा.) निनैन्दुनैन्दुळ् कैरन्दुरुहि इमैयोर् पलरुम् मुनिवरुम् *
पुनैन्द कण्णि नीर् शान्दम् पुहैयोडेन्दि वणङ्गिनाल् *
निनैन्द एल्ला प्पोरुळ्हट्कुम् विदाय् मुदलिल् शिदैयामे *
मनम्शेय् ज्ञानत्तुन् पेरुमै माशूणादो मायोने ॥ २ ॥

**आश्चर्यचेष्टित भो भगवन्! चतुर्मुखादयो देवाः सनकादयो महर्षयश्चान्ये च भवतो गुणाननुचिन्त्य गात्रशैथिल्यमप्यवाप्य द्रवीभूतहृदयाश्च सन्तो ग्रथितपुष्पमालिकास्तानीयगन्धधूपादिकं हस्ते बिभ्रतो भवन्तं प्रणमन्ति चेत् सकलपदार्थबीजभूतस्य, स्वरूपविकारलेशमन्तरेण संकल्पमात्रसाधितसकलकार्यसर्गस्य च भवतो महिमा किमहो नापहीयेत ? ॥**

त्रिकरणतोऽपि भवन्तमदूदुपमित्यवादीदधस्तनगाथाया सानुतापम्; अनुतापप्रकाशनस्याप्यहमनर्ह इत्याह गाथायामस्यामिति व्याचक्षते महाचार्या। यद्यपि गाथाया नायमर्थो मुक्तकण्ठ.; तथाऽपि तात्पर्यपर्यवसितो ह्यसावेवार्थ । 'वेदराशिषु मम सामर्थ्यं नास्ती'ति चण्डाल किं कथयेत्' प्रसक्तेरेव विरहान्नैव कथयेत्स तथा। एवम् अहमयोग्य इदि कथयितुमपि नाहमर्ह, प्रेमार्द्रचित्ता ब्रह्मादयो हि तथा कथयितुमर्हा। अथ च गाढविमर्शे कृते महान्तस्ते ब्रह्मादयोऽपि त्वत्सपर्यायामनर्हा इति वक्तव्य भवति-इत्युच्यते गाथयाऽनया। **आश्चर्यचेष्टितेति** सम्बोधनमिह साकूतम्। सर्वथाऽप्ययोग्यस्य मम योग्यपुरुषनिर्विशेषमङ्गीकरणम्, अथ चानुतापप्रजननमित्यादि सर्वमप्याश्चर्यचेष्टितेषु भवदीयेष्वन्तर्गतमित्युक्त भवति। अधस्तात्तृतीयदशके दशमगाथायामुक्तो देवानामप्यवलेपभर, तेषां रजस्तमसोरुन्मेषसमये तादृशी स्थिति; सत्त्वोन्मेषसमयविशेषोऽप्यस्ति खलु सर्वेषामपि। तथाविधेषु समयेषु ते पुष्पगन्धधूप दीपादिपरिचर्योपकरणसनाथास्सन्तो भगवन्तं प्रणन्तुमुपसर्पन्त्येव हि; तिरुप्पळ्ळियेऴुच्चिनाम्नि सुप्रभातदिव्यप्रबन्धे त्रिचतुरगाथासु तदिदमुपवर्ण्यते खलु। सैषा सपर्याऽपि भवतो महिम्नो मालिन्य सम्पादयेन्न किमु' इति कथ्यते। का कथा ममेति कथित भवति।

महिम्नो मालिन्यमित्यत्र विवक्षितो महिमा को नामेति चेत्, स उच्यते सकलपदार्थबीजभूतस्येत्यादिना। * अविदविशेषितान् प्रळयसीमनि संसरत करणकलेबरैर्घटयितु दयमानमना। वरद! निजेच्छयैव परवानकरो प्रकृति महदभिमानभूतकरणावलिकोरकिणीम् ॥ इति भट्टपादानुगृहीत प्रक्रियया भगवति सकल पदार्थबीजभूतत्वमवगन्तव्यम्। **[स्वरूपविकारलेशमान्तरेण]** * प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् * इति ब्रह्मसूत्रेण उपादानकारणत्वमपि भगवत एवाभिहितम्। घटाद्युपादानकारणभूतमृदादीनामिव भगवतोऽपि स्वरूपविकारस्संभवितुमर्हतीति शङ्काव्युदसनाय * स्वरूपविकारलेशमन्तरेणेत्युक्तम्। विकारमन्तरा कथ मुपादानत्वनिर्वाह इति चेत् विशेषणांशे पर विकारो नतु विशेष्यांशे इति सम्प्रति सक्षेप. ॥ .... (२)

—※ दूसरी गाथा—निनैन्दु नैन्दुळ् करैन्दुरुहि ※—

**(हिंदी) हे अत्याश्चर्यचेष्टित भगवन्! ब्रह्मादि देव, सनकादि महर्षि और दूसरे भी ऐसे महात्मा लोग आपके गुणों का चिंतन करते हुए शिथिलगात्र और पिघले हुए चित्तवाले बनकर, बनाई हुई पुष्पमाला, स्नान के लिए तीर्थ, सुगंध, और धूप लेकर यदि आप को प्रणाम करें, तो उससे क्या चिंतित समस्त पदार्थों के कारणभूत और स्वरूप का विकार पाये बिना ही, अपने संकल्पमात्र से समस्त जगत की सृष्टि करनेवाले आपकी महिमा न घटेगी?**

पूर्वाचार्य इस गाथा की टीका में लिखते हैं कि, पहली गाथा में आळ्वार यों कहते हुए पछताया कि मैंने अपने तीनों करणों से भगवान को कलंकित किया; इस गाथा में आप कह रहे हैं कि मैं यह बात करने का भी अधिकारी नहीं। यद्यपि इस गाथा में उक्त अर्थका स्पष्ट वाचक शब्द नहीं मिलता; तथापि तात्पर्यत: यह अर्थ सिद्ध होता है। शास्त्र का यह एक नियम है कि जिसकी प्रसक्ति हो उसीका निषेध हो सकता है। क्या चंडाल कभी यह कह सकेगा कि मुझे वेदाध्ययन करने का सामर्थ्य नहीं? नहीं कहेगा; क्यों कि उसे वेदाध्ययन करने का प्रसंग ही नहीं है। इसी प्रकार अब आळ्वार कहते हैं कि "मैं तो अपनी अयोग्यता बताने का भी अनधिकारी हूं; प्रेमार्द्रचित्त ब्रह्मादि महात्मा ही यह कर सकते हैं। अथवा ठीक विचार करने पर कहना पडता है कि वे भी आपकी सेवा करने योग्य नहीं।" भगवान को **[अत्याश्चर्यचेष्टित]** पुकारना साभिप्राय है। योग्यपुरुष की भांति मुझ अयोग्य का भी स्वीकार करना, पीछे पश्चात्ताप पैदा करना इत्यादि सभी आपकी आश्चर्यमय लीलाएं हैं। तीसरे दशक के दसवीं गाथा में देवों को गर्वी कहने में आया था। परंतु वे सदा ऐसे न रहते हैं। रजस्तमोगुणों के बढ़ जानेपर वे भगवान से भी विरोध करते हैं। परंतु दूसरे प्राणियों की भांति उनको भी कदाचित् सत्वगुण उद्बुद्ध होगा। तब वे बहुत भक्तिवाले होकर तीर्थ पुष्प गंध धूप दीप इत्यादि पूजासामग्री के साथ भगवान के पास आकर उनका प्रणाम करते हैं। श्रीभक्ताङ्घ्रिरेणुसूरी ने "तिरुप्पळ्ळियेळुच्चि" नामक अपने दिव्यप्रबंध की तीन चार गाथाओं में इस अर्थ का सुंदर वर्णन किया है। अब आळ्वार कहते हैं कि ऐसे महामहिम देवों से अनुष्ठित भगवान की पूजा भी उनकी महिमा को मलिन बनाएगी। फिर मेरे बारे में कहने की कौनसी आवश्यकता रहेगी।

भगवान की कौनसी महिमा मलिन होगी? इसका प्रत्युत्तर है—**[सकलपदार्थों के कारणभूत]** इत्यादि। वेदांतशास्त्र बताता है कि भगवान जगत के त्रिविध कारण भी होते हैं। त्रिविध कारण ये हैं—उपादान कारण (या मूलवस्तु), निमित्त कारण (या कर्ता) और सहकारिकारण (उपकरण इत्यादि)। उपादान कारण स्वयं विकार पाकर ही कार्य पैदा करेगा। परंतु भगवान एक ही ऐसे विलक्षण पदार्थ हैं, जो स्वयं विकार पाये बिना ही कार्य उत्पन्न करा देते हैं। यह अर्थ बताया गया—**[स्वरूप का विकार पाये बिना]** इत्यादि से। इस पर प्रश्न यह उठेगा कि यदि भगवान में विकार ही न हो, तो वे कैसे उपादान कारण बन सकेंगे। इसका प्रत्युत्तर इतना ही है कि भगवान के विशेषणभूत चेतन व अचेतन

विकार पाते हैं और विशेष्यभूत भगवान तो स्वयं निर्विकार रहते हैं। तथाच उक्त विशेषणों के द्वारा वे उपादान कारण होते हैं; और स्वयं विशेष्यव्यक्ति निमित्त कारण बनते हैं॥ .... (२)

(गाथा.) मायोनिहळाय् नडैकत्त वानोर् पलरुम् मुनिवरुम् *
नीयोनिहळै प्पडैयेन्नु निरैनान्मुहनै प्पडैत्तवन् *
शेयोनेल्ला वरिवुक्कुम् तिशैहळेल्लाम् तिरुवडियाल्
तायोन् * एल्ला वेव्वुयिर्क्कुम् तायोन् तानोरुरुवने ॥ ३ ॥

विलक्षणजन्मोत्कर्षविशिष्टान् सर्गप्रभृतिकार्यवर्गकौशलयुक्तान् जगद्योनिभूतान् देवमुनिभूतान् दशप्रजापतिप्रमुखान् देवताविशेषान् त्वं सृजेति ज्ञानादिपरिपूर्णं चतुर्मुखब्रह्माणमुत्पादितवान् सकलविधानामपि ज्ञानानां दवीयान् सर्वा अपि दिशस्त्रिविक्रमावतारे स्वकीयपादेनाक्रान्तवान् सर्वेष्वपि प्राणिषु मातृवद्वत्सलो भगवान् एतादृशाद्वितीयस्वभावसमन्वितो मत! ॥

अधस्तनगाथाद्वितयेन नैच्यानुसन्धानातिशयप्रकाशनमुखेन स्वस्य भगवद्विषयानुभवे औदासीन्यं प्रकाशितवतो मुनिवरस्य यथाकथञ्चिदाभिमुख्यमुत्पिपादयिषुर्भगवान् स्वकीयसौशील्यगुणप्रभावस्मारणेन सुसम्पादमस्याभिमुख्यमिति प्रतिपद्यमानः तस्य गुणस्य प्रथमसाक्षिभूतं त्रैविक्रमापदानं स्मारयामास। पुनरपि स्मरणपमानयामः 'महतो मन्दैस्सह नीरन्ध्रेण संश्लेष एव सौशील्यकार्यम्' इति प्रोक्तचरम्। तादृशशीलगुणविभूषितस्य भगवत उपसर्पणे वैराग्यमनुचितमेव खलु। तथाच शीलगुण कार्यविशेष स्मारणमेवाधुना सदुपायो भवितेति भगवता विचिन्तितं सर्वथा स्थाने। मुनिवरश्च भगवता स्मारितमिदं त्रैविक्रमापदानं स्वयमनुसन्दधानस्सन् विमुखो भवितुम् अभिमुखो भवितुं चाक्षम इतिकर्तव्यतामुग्धस्ताम्यति गाथायामस्याम्। विमुखो भवितुमक्षम इति यदुक्तम् तदुच्यते कामम्; अभिमुखो भवितुं नाक्षम इति कथमुच्यते? भगवदनुस्मारित शीलगुणकार्यध्याने सति आभिमुख्यमेव खलु सद्यो भवितुमर्हति इति चेत्, सत्यम्; स्वकीयाया अयोग्यताया ध्यानस्य प्रढिमा अविलम्बेनाभिमुख्यजननं रुणद्धीति वस्तुस्थितिः।

गाथायामस्यां पूर्वार्धेन स्वायोग्यतानुसन्धानपूर्वकवैमुख्यस्य प्रधानकारणभूतो भगवत उत्कर्षातिशयः प्रतिपाद्यते। यद्यपि भगवतः परत्वपिशुनास्सन्ति भूयांसो गुणाः व्यापकत्व नियन्तृत्व शरण्यत्व शक्त्य सत्यकामत्वापस्मरत्वादिरूपाः, तथाऽपि सर्वेष्वपि तेषु कारणत्वं प्रकृष्यते। कुतः? अथर्वशिरस्सु 'कथ ध्येयः?' इति प्रश्ने 'कारणं तु ध्येयः' इति प्रतिवचन मवतीर्णम्। तुकारोऽत्र एवकारार्थकः। जगत्कारणभूत वस्त्वेव ध्येयमित्युक्त भवति। शारीरकमीमांसाया चतुरध्याय्याम् उभावध्यायौ कारणवस्तुनिरूपणे प्रवृत्तौ। यदाहुः * कारणत्वमबाध्यत्वं पूर्वद्विकप्रमेयमिति। [अबाध्यत्वम्] प्रथमाध्यायनिरूपिते कारणत्वे संभवतां बाधानां [रोधानाम्] परिहारमुखेन तस्य सम्यक् प्रतिष्ठापनमिति यावत्। एवं च द्वावध्यायौ परतत्त्वस्य कारणत्वस्यैव प्रपञ्चनार्थौ स्थितौ। एवंविधस्य कारणत्वस्य भगवदुत्कर्षसीमाभूमितायाः स्मरणात् तथाविध उत्कर्षोऽत्राभिधीयते।

भगवतः कारणत्वं सद्वारकमद्वारकं चेति द्विविधम्। एतदुभयमप्यत्रोपवर्ण्यते। * यो ब्रह्माणं विदधाति पूर्वम् * इत्याम्नातरीत्या चतुर्मुखब्रह्मणस्सर्गः अद्वारकः। [ज्ञानादिपरिपूर्णं चतुर्मुखब्रह्माणमुत्पा-

दितवान्] इत्यनेन अद्वारकसृष्टिरसा कथिता भवति। [विलक्षण जन्मोत्कर्षविशिष्टान्] इत्यादिना वाक्येन सद्वारकसृष्टिश्च प्रोक्ता भवति। भगवान् चतुर्मुखब्रह्माण सृष्ट्वा अथ तस्मा एव मादेशमकार्षीत् 'भो! त्व दशप्रजापतिमुखान् देवताविशेषानुत्पादयेथा' इति। विलक्षणेत्यादीनि विशेषणानि चतुर्मुखसृष्ट्यभूतेषु देवताविशेषेष्वन्वयमृच्छन्ति। एवमद्वारकसद्वारकसृष्टिमुखत परत्वैकान्तिकजगत्कारणत्वविशिष्ट खलु स परम. पुमानिति तस्योत्कर्षमनुसन्धाय तमुपसर्पितु बिभेमीति कथितवान् भवति मुनिवर। [सकलविधज्ञानानामपि दवीयान्] इत्येतदपि विशेषण परत्वप्रतिपादनपर वेदितव्यम्।

अथ [सर्वा अपि दिशस्त्रिविक्रमावतारे स्वकीयपादेनाक्रान्तवान्] इत्येतद्विशेषण मुनिवरेण न स्वबुद्धया निवेद्यते; स्वस्याभिमुख्यसम्पिपादयिषया भगवता स्मारित यत्तदनुसन्धीयते। 'अपि भो शठकोप मुने! मत्प्रकृतिं किं न जानाति भवान्? गुणागुणनिरूपणे दृष्टिमनिधाय वसिष्ठचण्डालविभागमन्तरेण च युगपत्सर्वेषां शिरस्सु पाद निहितवान् खल्वहम्; एतादृशस्य मम 'अमी योग्या, अमी अयोग्या' इति विभागो नैवास्ति खलु। अतश्च अयोग्यतानुसन्धानेन अपसरणेच्छा नैवोचिता भवत' इत्युक्तवानिव भगवान्। अथ मुनेरपसर्पणरुचिर्मनागिव स्थगिता भवतीति मूलशब्दसदर्भत्रैधमेतत्॥ (३)

—※ तीसरी गाथा—मायोनिकळाय् नडेकत्त ※—

**यों कहकर कि "तुम श्रेष्ठजन्मवाले, और सृष्टयादि कार्य करने में समर्थ, देव मुनि प्रजापति इत्यादि जगत्कारण देवों की सृष्टि करो," (तदुचित ज्ञान शक्ति इत्यादि गुण) विशिष्ट चतुर्मुख ब्रह्मा की सृष्टि करनेवाले, सकलविधज्ञानों से भी परे, (त्रिविक्रमावतार के समय) समस्त दिशाओं को अपने श्रीपादों से नापनेवाले और समस्त प्राणियों के प्रति माता के समान वत्सल भगवान, अहो! ऐसे एक विलक्षण स्वभाववाले हैं॥**

पूर्वोक्त दो गाथाओं मे नैच्यानुसंधान करते हुए भगवदनुभव करने मे विमुख होना चाहनेवाले आल्वार को अपने सौशील्य गुण की याद दिलाकर लौटाने की इच्छा से भगवान ने उस गुण के पहले साक्षी त्रिविक्रमावतार चरित्र की याद करायी। भगवान ने यह बहुत अच्छा काम किया। इस दशक की अवतारिका में बताया गया है कि स्वय महान होकर नीचों से मिलने-जुलने का गुण सौशील्य है। भगवान का यह गुण जाननेवाला भक्त उनसे मिलने में क्यों कर सकोच कर सकेगा? अत भगवान ने निश्चय किया कि अपने सौशील्यगुण के प्रकाशक चरित्र का स्मरण कराना ही आल्वार को लौटाने का श्रेष्ठ उपाय होगा। इस अभिप्राय से भगवान के स्मारित इस त्रिविक्रमावतारवृत्तात का अनुसधान करते हुए आल्वार, प्रकृत गाथा में भगवान से दूर हट जाने मे अशक्त होकर, तथापि उनके समीप पहुचने मे भी अशक्त होकर, एक विलक्षण मझली अवस्था पा रहे हैं। अर्थात् शीलगुण का अनुसधान करने पर उन्हें भगवान के पास जाने का विचार होता है, इतने में अपनी अयोग्यता का सुदृढ स्मरण आकर, उन्हे पीछे हटाता है। अत आप बीच में खड़े हो जाते हैं।

प्रकृत गाथा के पूर्वार्ध में भगवान की विलक्षण महिमा का (माने परत्व का) वर्णन किया जाता है, जिसके स्मरण से आल्वार को अपनी नीचता पर ध्यान देना पडा। यद्यपि भगवान के परत्व के सूचक

उनके अनेक गुण होते हैं, व्यापकत्व, नियन्तृत्व, शरण्यत्व, शक्तत्व, सत्यकामत्व, सत्यसंकल्पत्व आपत्-सखत्व इत्यादि, जिनमे से किसीका भी वर्णन किया जा सकता है। तथापि इन सब गुणों की अपेक्षा जगत्कारणत्व ही श्रेष्ठ माना जाता है। अथर्वशिर उपनिषद मे यह प्रश्न—"कश्च ध्येयः" (किसका ध्यान किया जायें ?) और यह उत्तर "कारण तु ध्येय." (जगत्कारण वस्तु का ही ध्यान करना चाहिए) देखे जाते हैं। अन्यत्र भी ब्रह्म का लक्षण बताने के प्रसंगों में जगत्कारणत्व ही मुख्यतया बताया गया है। चार अध्यायवाले ब्रह्मसूत्र में पहले दो अध्यायों में इस कारणत्व की ही चर्चा चलती है। तथाहि—पहले अध्याय का नाम कारणाध्याय है। इसमें वेदांतों में अधीयमान नानाप्रकार के वचनों के विवेचनपूर्वक यह अर्थ स्थापित किया गया है कि परब्रह्म ही जगत्कारण है। दूसरे अध्याय का नाम है अबाधाध्याय। इसमें ब्रह्म के जगत्कारणत्व के विषय मे दूसरों के किये जानेवाले नानाविध आक्षेपों का समाधान किया गया है; (एवं एतदुपयुक्त, परपक्षखडन इत्यादि दूसरे भी कतिपय विषय उपवर्णित हैं।) इस प्रकार ब्रह्मसूत्र का आधा भाग परब्रह्म के कारणत्व का ही वर्णन कर रहा है। अतः समझना चाहिए कि भगवान की महिमा का सूचक मुख्य गुण आपका जगत्कारणत्व ही है। अतः आळ्वार भी हाल में उस कारणत्व का ही वर्णन करते हैं।

भगवान का यह जगत्कारणत्व (एवं तदनुगुण सृष्टि) दो प्रकार का है—अद्वारक व सद्वारक। ये दोनों यहां पर वर्णित है। स्वयं भगवान ही चतुर्मुख ब्रह्मा की जो सृष्टि करते हैं, यह अद्वारक सृष्टि, और बाद में ब्रह्मा के द्वारा जो सृष्टि कराते हैं वह सद्वारक सृष्टि कहलाती है। प्रकृत गाथा मे [**चतुर्मुख ब्रह्मा की सृष्टि करनेवाले**] कहने से अद्वारक सृष्टिका, और [**श्रेष्ठजन्मवाले**] इत्यादि लंबे वाक्य से सद्वारक सृष्टि का वर्णन किया जाता है। भगवान ने ब्रह्मा की सृष्टि कर उसे यह आज्ञा दी कि "तुम दस प्रजापति इत्यादि अनेक देवों की सृष्टि करो।" इन देवों के अनेक विशेषण दिये जाते हैं—श्रेष्ठजन्मवाले इत्यादि। इन सबका परमतात्पर्य इतना हीं है कि ये देव, देव मनुष्यादि सकलप्राणियों की सृष्टि करने में समर्थ होते हैं। तथाच इस प्रकार अद्वारक व सद्वारक जगत् सृष्टि करनेवाले परात्पर परमपुरुष की श्रेष्ठता का अनुसंधान करते हुए उनके पास जानेमें आळ्वार अपना भय प्रकाशित करते हैं। एतदनुगुणतया ही भगवान का यह भी एक विशेषण दिया गया—[**सकलविधज्ञानों से भी परे**]। जो ज्ञान का भी विषय न हो, वे कैसे महान होंगे!

आगे, [**समस्त दिशाओं को अपने श्रीपादों से नापनेवाले**] इत्यादि वाक्य आळ्वार की अपनी बुद्धि के द्वारा विलिखित नहीं; बल्कि उनको ठिकाने पहुचाने के लिए भगवान से स्मारित अर्थ का अनुसंधानमात्र है। अर्थात् भगवान का यह अभिप्राय हुआ—"अहो शठकोपमुने! तुम यह क्या कर रहे हो? क्या तुम मेरा स्वभाव नहीं जानते? मैंने त्रिविक्रमावतार में मानवों के गुणदोषों का ख्याल न करते हुए, सबके सिरपर एक समान अपना चरण रख दिया न? क्या मैंने उस समय किसीको नीच मान कर छोड दिया? नहीं। ऐसे मुझे, "यह योग्य है; यह अयोग्य है" इत्यादि विवेचन अपनी दृष्टि में कभी होता ही नहीं। अतः तुम अपने को नीच मानते हुए पीछे हटने का विचार मत करो।" यह जानने पर आळ्वार का चित्त जरा प्रसन्न हुआ और भगवान को छोड़ कर दूर भाग जाने की उनकी इच्छा दूर हुई। यह अर्थ मूलगाथा के शब्द सदर्भ से सूचित किया जाता है॥ .... .... .... (२)

(गाथा.) तानोरुरुवे तनिवित्ताय् तन्निल् मूवर् मुदलाय *
यानोर् पलरुम् मुनिवरुम् मनुम्मनुम् मुनुमाय् *
तानोर् पेरुनीर् तन्नुळ्ळे तोन्ति अदनुळ् कण्वळरुम् *
थानोर् पेरुमान् मामायन् वैंकुन्द नेम्बेरुमाने ॥ ४ ॥

स्वयमद्वितीय एव सन् सहायान्तरनिरपेक्षहेतुभावमापद्यमानः; स्वयमेव त्रिमूर्तिरूपस्सन् देव-मनुष्यतिर्यगादिसर्वचिदचिच्छरीरको भूत्वा, स्वयमेव एकार्णवमध्ये प्रादुर्भूय तत्र शयानो नित्यसूरिनाथो विचित्राश्चर्यगुणचेष्टितादिविशिष्टो वैकुण्ठाधिपतिरस्मच्छेषी सः ॥

गाथाया अस्या अवसाने अस्मच्छेषी स इति यदुक्तम् एतदेवात्र जीवनाडीभूतम्। "कैङ्कर्यकर्ता शेषः, कैङ्कर्यप्रतिसंबन्धी शेषी" इति तान्त्रसम्प्रदायः। भगवतः शेषित्वेन प्रतिपादनमिह स्वस्य शेषत्वप्रतिपादने विश्राम्यति। भगवत्किङ्करभावे नाहमर्हः इति यदासीदयोग्यतानुसन्धानं मुनिवरस्य तदिदानीं मनागिव गलतीति गम्यते। तस्य शेषित्वसिद्धये मया शेषवृत्तिकरणं सूरीकार्यमेवेति प्रतिपादने तात्पर्यमस्या गाथाया इति प्रतिपत्तव्यम्। कैङ्कर्यकरणमप्राप्तविषये अनुचितम्; प्राप्तविषय एव हि शोभनं तत्; भगवानेव प्राप्तविषय एतस्येति प्रपञ्चयति गाथाया अवशिष्टो भागः। [स्वयमद्वितीय एव सन् सहायान्तरनिरपेक्षहेतुभावमापद्यमानः] उपनिषदि * सदेव सोम्य! इदमग्र आसीदेकमेवाद्वितीयम् * इति श्रूयते; अत्र [एव, एकम्, अद्वितीयम्] इति पदत्रयं मिलित्वा उपादानकारणम् सहकारिकारणम् निमित्तकारणं चेति त्रिविधमपि कारणं परं ब्रह्मैवेति प्रतिष्ठापयतीति वेदान्तिनः। तद्वदत्रापि [अद्वितीय-एव-सहायान्तरनिरपेक्ष] पदैस्त्रिभिरपि स एव त्रिविधकारणमपीति द्योत्यते। चिदचिच्छरीरकस्सन् उपादानकारणम्; संकल्पसनाथस्सन् सहकारिकारणम्; निमित्तकारणत्वं तु उपपादननिरपेक्षम्। घटपटादिनिर्माणे कुलालतन्तुवायादीनामिव जगत्सृष्टौ ज्ञानशक्तिभरितस्य भगवतो निमित्त-कारणत्वमविवादमिति।

[स्वयमेव त्रिमूर्तिरूपस्सन्] इक्ष्वाकुवंशेऽवतीर्य तद्वंश्येष्वन्यतम इव, यदुवंशेऽवतीर्य याद-वेष्वन्यतम इव च यथा बभूव, तथैव ब्रह्मरुद्रयोर्मध्येऽवतीर्य ताभ्यां सह परिगणनीयोऽभूद्भगवान्। अत्र * महेशमध्यगणना गणनाऽकलङ्की इन्द्रानुजत्वमदितेस्तनयत्वयोगात्। इक्ष्वाकुवंशयदुवंशजनिश्च हन्त! श्लाघ्यान्यमून्यनुपमस्य परस्य धाम्नः ॥ * [अतिमानुषस्तवे] इति श्रीकूरेशमिश्रसूक्तिः, * मध्येविरिञ्चगिरिशं प्रथमावतारः तत्साम्यतः स्वयितुं तव चेत्स्वरूपम् * [श्रीरङ्गराजस्तवोत्तरशतके] इति श्रीभट्टपादश्रीसूक्तिश्चानु-सन्धेये। [देवमनुष्यतिर्यगादिसर्वचिदचिच्छरीरको भूत्वा] अत्र मूलस्थपदानि "देवमनुष्यादिसर्वपदार्थ सृष्ट्यर्थम्" इत्येवंविधमनुशब्दमपि सहेरन्। घटते ह्युभयविधोऽप्यर्थः। [एकार्णवमध्ये प्रादुर्भूय तत्र शयानः] अत्र * आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायण स्मृतः॥ * इत्येतन्मनु-स्मृतिवचनमनुसन्धातु मर्हम्। [विचित्राश्चर्यगुणचेष्टितादिविशिष्टः] इति कथनमिह साकूतम्; 'सर्वथा-ऽप्यनर्होऽहं भगवन्तं नैवोपसर्पेयं परात्परम्' इति कृतसङ्कल्पमपि मा शिथिलसङ्कल्प हि कलयत्यसाविति विवक्षु-र्मुनिवरो विशेषणमिदं विन्यस्यति। तत्तत्समयानुगुणगुणाविष्कारेण स्वयमेवासौ जयशीलो भवति यद् तदेतदेव

महदाश्चर्यमिति मुनिवरस्य भाव । अन्ततो [वैकुण्ठाधिपतिः] इत्येतदपि साकूतम्। वैकुण्ठनाथोऽसौ भगवान् यदि वैकुण्ठमेवाधितिष्ठेत्तर्हि शीलगुणप्रकाशन कथमस्य घटेत? परमसाम्यापन्ना एव खलु तत्र विराजन्ते, मन्देष्वेव प्रकाशप्राचुर्यं लब्धु प्रभविष्णु. शीलगुणस्तत्रासत्कल्प एव हि स्यादिति मन्यमानो वैकुण्ठ विहायात्रागत इति सूचित भवति॥ .. .... .... .... .... (४)

—※ चौथी गाथा—तानोरुरुवे तनिवित्ताय् ※—

**स्वयं अद्वितीय ही रहकर दूसरे सहायक की अपेक्षा न करते हुए कारण बननेवाले, स्वयं त्रिमूर्तिरूप होनेवाले, देव मनुष्य तिर्यक् इत्यादि समस्त चेतनाचेतनरूपी (माने उनके अंतर्यामी) होकर, महार्णव के मध्य प्रकट होकर वहां शयन करनेवाले, नित्यसूरियों के नाथ, और अत्यद्भुत गुण चेष्टा इत्यादि विशिष्ट श्रीवैकुंठनाथ हमारे शेषी हैं॥**

इस गाथा के अत मे प्रयुक्त [हमारे शेषी] शब्द ही इसका प्रधान भाग है। आचार्य बताते हैं कि, कैंकर्य (यानी सेवा) करनेवाला शेष, और कैंकर्य पानेवाला शेषी है। भगवान को शेषी बताने का अर्थ, चेतन को शेष बताना है। तथा च, मालूम पडता है कि आळवार अपने को भगवान की सेवा करने के अयोग्य जो मानते थे, यह उनकी भावना जरा ढीली पड गयी। अर्थात् उनके मन में अब यह भावना उत्पन्न हुई कि यदि भगवान शेषी हो, तो हमें शेष होना चाहिए, और इस लिए उनकी सेवा भी करनी चाहिए, उनको छोडकर दूर भाग जाना अनुचित है। योग्य व्यक्ति के विषय में की जानेवाली सेवा ही मगल-कारक होगी और अयोग्य व्यक्ति की सेवा दु खप्रद एव स्वरूपविनाशक होगी। अत गाथा के अवशिष्ट भाग में भगवान की योग्यता (माने स्वामित्व) का वर्णन किया जाता है।

[स्वयं अद्वितीय ही रहकर दूसरे सहायक की अपेक्षा न करते हुए कारण बननेवाले।] छांदोग्य उपनिषद का यह एक वाक्य है—"सदेव सोम्य! इदमग्र आसीत् एकमेवाद्वितीयम।" इस वाक्य में जगत्कारणवस्तु 'सत्' कहलाती है, और ये तीनों शब्द—एव, एकम् व अद्वितीयम्, मिलकर यह अर्थ बताते है कि वह 'सत्' स्वयं जगत के उपादानकारण, सहकारिकारण, व निमित्तकारण रूप तीनों कारण बनता है। इसी प्रकार प्रकृत गाथा के भी ये तीन शब्द—'अद्वितीय, ही, व दूसरे सहायक की अपेक्षा न करते हुए,' भगवान को उक्त त्रिविध कारण बताते हैं। चिदचिच्छरीरक ब्रह्म उपादान कारण, सकल्पविशिष्ट सहकारि कारण और ज्ञानशक्त्यादिविशिष्ट निमित्तकारण होता है।

[स्वयं त्रिमूर्तिरूप होनेवाले] भगवान जैसे श्रीरामचंद्र के रूप में इक्ष्वाकुवंश में अवतीर्ण होकर उस वंशके राजाओं में एक बने, और श्रीकृष्णचंद्र के रूप में यदुवश में अवतार लेकर यादवों में से एक हुए, ठीक इसी प्रकार महारुद्रों के साथ विष्णु नाम से अवतीर्ण होकर उनके साथ गिनती पाते हैं। अत एव श्रीकूरेश स्वामीजी ने अतिमानुषस्तव में (१५) कहा—"महेशमध्यगणना"—इत्यादि। यह तात्पर्य है—महारुद्रों के बीच में गिना जाना, बारह सूर्यों की श्रेणी में गिनती पाना, अदिति के पुत्र

(उपेंद्र) होने से इंद्र का छोटा भाई होना, इक्ष्वाकुवंश व यदुवंश में जन्म पाना, ये सभी परम धाम कहलानेवाले अद्वितीय आपके शुभ अवतार हैं। श्री भट्टर स्वामीजी ने श्रीरङ्गराजस्तव-उत्तरशतक (५१) में कहा कि "मध्ये विरिञ्चगिरिशं प्रथमावतार" (ब्रह्मा व रुद्र इनके बीच में आपका पहला अवतार हुआ।) [देव मनुष्य तिर्यक् इत्यादि समस्त चेतनाचेतनरूपी होकर] वेदान्तियों का सिद्धान्त है कि भगवान समस्त चेतन व अचेतन पदार्थों के अन्तर्यामी होने से तत्तत् चेतनाचेतन वस्तु ही कहलाते हैं। मूल गाथास्थ "वानोर् पलरुम्" इत्यादि प्रकृत दूसरे पाद का यह भी अर्थ हो सकता है कि, 'देव मनुष्यादि समस्त पदार्थों की सृष्टि करने के लिए।' यह भी अर्थ ठीक लगता है। [महार्णव के मध्य प्रकट होकर वहां शयन करनेवाले] यह तो नारायण का लक्षण है, जो मनुस्मृति में भी बतलाया गया। "आपो नारा इति प्रोक्ता आपो वै नरसूनवः। ता यदस्यायनं पूर्वं तेन नारायणः स्मृतः ॥" यह भाव है—नार शब्द का अर्थ जल, पहले एक समय (प्रलयकाल में) भगवान के रहनेका स्थान था, अतः उनका नाम हुआ—नारायण। [अत्यद्भुत गुण चेष्टा इत्यादि विशिष्ट] कहने का यह भाव है—यह दृढ संकल्पकर कि "सर्वथा नीच मैं भगवान के पास नहीं जाऊंगा," बैठे रहनेवाले मेरे संकल्प को भी ढीला बनानेवाले भगवान के गुण आदि अत्याश्चर्यमय हैं, तत्तत्समय के अनुगुण विशेष गुणों का प्रकाशन करते हुए भगवान मेरे संकल्प को भी दूरकर सर्वदा स्वयं विजयी होते हैं। यह बात सर्वथा सत्य है। इस दिव्यप्रबन्ध के प्रत्येक दशक के प्रारंभ में भी आळ्वार के मन में एक एक भावना रहती है जो उस दशक में भगवान के किसी विशेष गुण के अनुभव से बदल जाता है। यह तो अवश्य ही भगवान का आश्चर्यमय चेष्टित है। अंत में [श्री वैकुंठनाथ] कहने का यह भाव है—वैकुंठनाथ ये भगवान यदि वैकुंठ में ही विराजते, तो इनका शीलगुण सर्वथा अप्रकाशित ही रह जाता, क्यों कि उधर रहनेवाले नित्य व मुक्त लोग सभी सर्वथा दोषों से दूर और भगवान के समान होते हैं। उनके विषय में शील गुण का प्रकाशन नहीं किया जा सकता, यह गुण तो नीचों के विषय में ही प्रकाशित होनेवाला है। अतः भगवान अपने शील गुण का प्रकाशन करते हुए वैकुंठ छोड़कर इस भूमंडल पर पधारे। अतः हमें भी इस गुण का अनुभव करने के लिए उनसे मिलना चाहिए ॥ (४)

(गाथा) मानेय् नोक्कि मडवाळै मार्बिल् कोण्डाय् माधवा *
कूनेशिरैय चुण्डैविल् निरत्तिल् तेरित्ताय् गोविन्दा *
वानार् शोदि मणिवण्णा मधुसूदा नीयरुळाय् * उन्
तेनें मलरुम् तिरुप्पादम् शेरुमारु विनैयेने ॥ ५ ॥

हरिणीनयनसदृशनयनां मुग्धां महालक्ष्मीं वक्षस्स्थले विनिवेशितवन् हे माधव! (कंस-कैङ्कर्यनिरतायाः) कुब्जायाः स्खगुम् अनायासेन विनिवर्त्य तस्या आर्जवमुत्पादितवन् गोविन्द! नित्यविभूतिव्याप्ततेजःपुञ्ज! मणिवर्ण! मधुसूदन भगवन्! महापापी सोऽहं यथा त्वदीयं मधुस्यन्दिचरणारविन्दं प्राप्नुयां तथा नाम त्वमनुगृहाण ॥

प्रथमद्वितीयगाथाद्वितयेन अयोग्यतानुसन्धानतो दूरतोऽपसर्पणोन्मुख इवासीन्मुनिवरः; अथ भगवति सदुपायेन स्वशीलगुणं संस्मारितवति सति मुनिवरस्य संजातमपसर्पणरुचिशैथिल्यम् तृतीयचतुर्थगाथाद्वितये समसूच्यत । ततो भगवान् स्वयमेव तेन सह संश्लेष्टुकामोऽपि सन् 'स्वकीयमार्त्यतिशयं स्वयमेव स उद्घाटयतात्कन्दतु; परस्ताद् द्रक्ष्यामः' इति हृदि कलयन् जोषमवतस्थे । अस्यामवस्थायाम् मुनिवरः स्वकीयमार्तिभरमाविष्करोति गाथयाऽनया । [यथाऽहं त्वदीयं मधुस्यन्दिचरणारविन्दं प्राप्नुयाम् तथा त्वमनुगृहाण] इत्येषा प्रार्थनाऽत्रत्या । महालक्ष्मीसनाथवक्षस्केति प्राथमिकं संबोधनम् । तस्याः पुरुषकारबलेन स्वसमीहितसिद्धिं मव्यभिचरिष्णुं मन्यते मुनिवरः । * लक्ष्मी. पुरुषकारत्वे निर्दिष्टा परमर्षिभिः । ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत् ॥ * इति भगवच्छास्त्रोक्तरीत्या संसिद्धपुरुषकारभावायाः श्रियः पुरस्कारे सति समीहितसिद्धिरमोघेति हि वस्तुस्थितिः । लक्ष्म्या नयनसौभाग्यवर्णनं यत्कृतमिह तत् तत्कटाक्षपातलिप्सास्फोरकं मन्तव्यम् । हरिणीलादिना महता विशेषणवाक्येन कथितोऽर्थः माधव ! इत्यनेन लघुना पदेनोपसह्रियते ।

अथ द्वितीयपादस्थितेन विशेषणेन कंसकिङ्कर्यां कुब्जायामनुग्रहकर्तृत्वख्यापनमुखेन 'नीचोऽहमपि तथा ऽनुग्राह्य' इति सूचयति मुनिवरः । कुब्जायाः कथा कृष्णावतारे सुप्रसिद्धा । कंसचोदितेनाक्रूरेण मधुरापुरीमानीतो मुकुन्दस्तत्रत्यमहावीथ्यामागच्छति कंसभवनजिगमिषया; तत्र पथि यदृच्छया दृष्टा नैकवक्रानाम्नी काचन कुब्जा कंसस्य चन्दनादिसुगन्धद्रव्यसज्जीकरणकर्मणि नियुक्ता नानाविधचन्दनसंभृतपात्रहस्ता । तामेनामवलोक्य कृष्णः. * सुगन्धमेतद्राजार्हं रुचिरं रुचिरानने ! । आवयोर्गात्रसदृशं दीयतामनुलेपनम् ॥ * [आवयोः—अग्रजन्मनो बलरामस्य, मम चेत्यर्थः ।] इत्यपेक्ष्य, अथ प्रेमविवशया तयाऽनुलिप्तगात्रो भूत्वा तत्प्रत्युपकाररूपेण आजन्मवक्रतस्या वपुषि स्थितं स्वगुणमपाकृत्य आर्जवमुदपादयदिति श्रीविष्णुपुराणादिषु प्रथिता कथैषा । पुराणरत्ने पञ्चमांशे विंशेऽध्याये कथामिमामुपवर्णयन् पराशरो मुनिवरः कृष्णस्य सौशील्यातिशयमद्भुतमुपपादयति । तथा हि तत्रत्या अमी श्लोकाः—* ततस्तां चुबुके शौरिरुल्लापनविधानवित् । उत्पाट्य तोलयामास द्व्यङ्गुलेनाग्रपाणिना । चकर्ष पद्भ्यां च तदा ऋजुत्वं केशवोऽनयत् ॥ ततस्सा ऋजुतां प्राप्ता योषितामभवद्वरा । विलासललितं प्राह प्रेमगर्भभरालसम् । वस्त्रे प्रगृह्य गोविन्दं मम गेहं व्रजेति वै ॥ एवमुक्तस्तया शौरिः रामस्यालोक्य चाननम् । प्रहस्य कुब्जां तामाह नैकवक्रामनिन्दिताम् । आयास्ये भवतीगेहमिति तां प्रहसन् हरिः । विससर्ज जहासोच्चै रामस्यालोक्य चाननम् ॥ * इति । अत्र बहुषु पदेषु कृष्णस्य शीलगुणप्रकाशः प्रेक्ष्यः ।

श्रीरामचरितेऽपि कुब्जाकथा काचिदायाति; तामत्र व्याख्यातार आचार्यवर्या अनुस्मारयन्ति । कुब्जा नाम मन्थरा । तस्यां दाशरथिना नानुग्रहः कृतः; अपितु बाल्ये रामचन्द्रो लघुतरधनुर्धारी भूत्वा क्षत्रियकुलानुरूपं विहरन् चापतो मृन्मयीं गुलिकामुदमोचयत्; सा च कुब्जाया मन्थरायास्तनौ कुटिलप्रदेशविशेषे न्यपतत् । नेदं कर्म रामेण मात्सर्यतः कृतम्; केवलं क्रीडावशात् कृतम् । सा तु कुब्जा राजकुमार इत्यवज्ञाभरेणैव कृतवान् राम इति मन्यमाना तदा ते प्रतिक्रियां कर्तुमशक्ता प्रायकालेऽपि कार्याणि हृदि निगूहितान्तर्विश्विता समयं प्रतीक्षमाणैव विघ्नमुदपादयदिति कथा । वाल्मीकिरामायणे नास्तीयं कथा; रामायणान्तरे किंवदन्त्यनुसन्धीयते । श्रीविष्णुपुराणोक्तकुब्जाकथाया इव एतत्कथाया अपि बोधकतयैव मूलगाथावर्णनेऽयं शोऽर्थ इष्यते । अत्र प्रोक्तामर्थे कथानेकेषु व्याख्यातार आचार्याः । द्वितीयपादे गोविन्दे

संबोधनमस्ति। गोविन्दनामत्वं कृष्ण एव हि प्रसिद्धम्; रामावतारीयकथाविरुद्धे सति गोविन्देति संबोधनं कथमुपपद्यत इत्याशङ्क्य द्वेधा समादधिरे; * भूर्भूमिरचलाऽनन्ता....गौरिला कुम्भिनी क्षमा * इत्यमरकोशरीत्या गोशब्दो भुवमपि वक्तीति कृत्वा भूपालकेत्यर्थवर्णनम् एकः प्रकारः। (२) * गोविन्देति कृष्ण एव संबोधितो भवतु कामम्; कुत्सितचेष्टितकरणापराधस्य कृष्ण एव सुघटत्वात् रामकृतमपि चेष्टितमेतत् कृष्णे ऽन्वारोप्यत इति समाहितेर्द्वितीयः प्रकारः। अत्र तावदाचार्याणा सूक्तिरेषा "यथा सर्वेऽप्यपराधा अवधूतमौनिशिरसि" इति। एतत्तु द्राविडवाचि प्रसिद्धस्य "பொம்பழியெல்லாம் அமணன் தலையோடே" इत्याभाणकस्य प्रतिच्छन्दः। अन्यायधन्यनाम्ना राज्ञा परिपालितायां क्वचन नगर्यां कोऽपि तस्करः कस्यचन गृहे चोरयितुं गतः कुड्ये अपवरकं कृत्वा प्रविशन् कुड्यपातेन म्रियतेस्म; प्रभाते विदितैतदुदन्ताश्चोरस्य कलत्रपुत्रादयस्समागत्य समीक्ष्य राजसकाशे अभियोग चक्रुः वधापराधनिमित्तेन गृहस्वामी दण्डयितव्य इति। अथ राज्ञाऽऽहूतो गृहस्वामी पृष्टः प्रत्युवाच—नैव ममापराध, कुड्यनिर्माता घनतरं कुड्यं यतो न निरमिमीत, तत एव कुड्यपातस्समजनि, मृतिश्चास्य समभूत्; स एवापराधी स एव दण्डनार्ह इति। निशम्यैतद्राजा गृहस्वामिनं निसृज्य कुड्यनिर्मातारमाकार्य त्वमेव दण्ड्योऽसीत्याह। स च प्राह 'कुड्यार्थं मृत्पिण्डदाता कर्मचरः सलिलमधिकमुपयोज्य मृत्पिण्डं चक्रे ददौ च मह्यम्, अत एव कुड्ये घनत्वं नासीत्, अतश्च मृत्पिण्डनिर्माता प्रष्टव्य इति। अथ भूपति स्तमिममुत्सृज्य मृत्पिण्डकारकमाजुहाव। स पृष्टः प्रत्यब्रूत—'अहं किं कुर्याम्? कुलालो बृहत्तरं घटमदात्; अत एव तोयमधिकं पतितं मृत्पिण्डे, तत एव चायमनर्थस्समजनि; स एव कुलालो दण्ड्य इति। अथ राजा तं विहाय कुलालमानाय्य पप्रच्छ; स चोदैरिरत्; अहं तु लघुतरमेव घटं निर्मातुमैच्छम्; काचन गणिका मम वीथ्यां गतागतं कुर्वती मम आन्यपर्यमुदपादयत्; तत एव घटो बृहत्तरोऽभूत्; सैव दण्ड्येति। तदनु भूपो निसृज्य कुलालं गणिकामाकार्य 'कुतस्त्वं कुलालरथ्यायामसकृद्यासी? त्वमेव दण्डनीयाऽसि' इत्याह। सा प्रत्यब्रवीत्—'मदीयमम्बरं निर्णेक्तुं रजकमकाशे दत्तवती साऽहम्; [redacted] च रजकः प्रत्यर्पणे व्यलम्बत; अत एव तत्पथेन शश्वत्प्रयातव्यमापतितं मम, स एव रजको दण्डनीय' इति। अथ पार्थिवस्तां विमुच्य रजकमानाय्य पप्रच्छ 'कुतस्त्वं वस्त्रप्रत्यर्पणे व्यलम्बथा' इति। स चाह—महाप्रभो! नाहमागस्वी; यस्मिन् सरसि मया वस्त्रनिर्णेजनं क्रियते, तत्र शिलायाम् अवधूतः कोऽप्युपविष्टस्सुचिरं बोधितोऽपि नोदतिष्ठत्; नाद्याप्युदतिष्ठत्; किं करवाण्यहम्, भवानेव वदतु, मयि कोऽपराध' इति। अथ राजा रजकं विहाय भटानादिशतिस्म तमवधूतमानेतुम्। स तु मौनी; महता प्रयासेन स राजसभामानेतव्योऽभूत्। आनीतं तं पार्थिवः पप्रच्छ 'कुतस्त्वं शिलायामुपविश्य नोत्तिष्ठसि?' इति। सुदृढावलम्बितमौनव्रतस्स तूष्णीक एव सन् वाचं नैवोदघाटयत्। अथ राजा 'अन्ये सर्वेऽपि पृष्टाः किमपि किमपि प्रत्युत्तरमदुः; अतस्ते ते सत्यं निरागसः; यतोऽयं न किमपि प्रतिब्रूते, ततोऽयमेव महानागस्वी; अयमेव दण्डनीय' इत्यवधार्य तमवधूतं शूलमारोपयामासेति कथा समाप्ता। तत प्रभृति "सर्वेऽप्यपराधा अवधूतमौनिशिरसि" इत्याभाणकः प्रसृमरोऽभूत्। तदिदं प्रकृते समुचितमुदाहरणं खलु। अवशिष्टं सुस्पष्टम्॥ .... .... (५)

—* पाचवी गाथा—मानेय् नोक्कि मडवाळै *—

अपने वक्ष पर हरिन के नेत्र के समान नेत्रवाली श्रीलक्ष्मीजी का धारण करनेवाले हे माधव! विना क्लेश, (कंस की नौकरानी) कुबड़ी का कूबड मिटाकर उसे ठीक बनानेवाले

**हे गोविन्द! हे परमपद में सर्वत्र व्याप्त तेजोमय! हे मणिवर्ण! हे मधुसूदन! मुझ पापी पर ऐसी कृपा कीजिए, जिससे मैं आपके मधु बहनेवाले श्रीपाद प्राप्त करूं॥**

पहली दो गाथाओं में आळ्वार ने अपनी नीचता का अनुसंधान करते हुए भगवान से दूर भागना चाहा। बाद की दो गाथाओं में, भगवान ने उनको अपने शील गुण की याद करायी, जिससे आळ्वार का पूर्वोक्त संकल्प कुछ ढीला हो गया। यह देखने से प्रसन्न होकर भगवान ने तुरंत उनसे मिलना चाहा। परंतु उतने में उनके मन मे यह विचार हुआ—"अब हमें उतावली करना अनुचित है; किंतु इस बात की परीक्षा करनी चाहिए कि क्या आळ्वार सत्य ही हमसे मिलना चाहते हैं या नहीं। अतः हम उन्हें अपनी आर्ति का प्रकाशन करने देंगे।" यह सोचकर भगवान चुप रह गये। इससे आळ्वार की आर्ति बहुत बढ गयी, और यही प्रकृत गाथा के द्वारा प्रकाशित की जा रही है। इसमें यह स्पष्ट प्रार्थना दीख पड़ती है कि [**मुझ पापी पर ऐसी कृपा कीजिए, जिससे मैं आपके मधु बहनेवाले श्रीपाद प्राप्त करूं।**] पहला संबोधन है—महालक्ष्मी से विभूषित वक्षवाले माधव! श्री पांचरात्र शास्त्र कहता है कि पुरुषकार (माने सिफारिश) करना लक्ष्मीजी का काम है; अतः उनके द्वारा भगवसंनिधि जानेवालों की इच्छा अवश्य ही सफल होगी। अब उनके नेत्रसौंदर्य का वर्णन करनेवाले आळ्वार उनका कटाक्ष पाना चाहते हैं। "हरिननेत्र" इत्यादि लंबे शब्दसंदर्भ से 'कथित अर्थ का संग्रह' माधव शब्द से किया गया है।

दूसरे पाद में कुबडी पर भगवान से कृत अनुग्रह का वर्णन करते हुए आळ्वार इस अपनी प्रार्थना की सूचना करते हैं कि, "हे प्रभो! आप कृपया मुझ नीच पर भी ऐसी कृपा कीजिए।" कुबडी की कथा कृष्णावतार में प्रसिद्ध है—अक्रूर के द्वारा कंस से बुलाए जाने पर श्री कृष्ण व बलदेव, व्रज से निकल कर मथुरा पधारकर राजवीथी से होकर कंस के महल की ओर बढते थे। तब नैकवक्रा नामक एक कुबडी, कंस के लिए तैयार सुगंध इत्यादि सुगंध द्रव्य लेती हुई सामने आयी। श्री कृष्ण ने उससे अपने दोनों के अनुरूप चंदन मांगा। श्री कृष्ण के रूप में मोहित कुब्जा ने तो दोनों भाइयों के दिव्यमंगळ विग्रह पर मनोहर चंदन लीप दिया। इससे प्रसन्न श्री कृष्ण ने, उसके जन्म के साथी कूबड को ठीक कर दिया। यह कथा श्री भागवत, श्री विष्णुपुराण इत्यादि अनेक ग्रंथों में उपवर्णित है। श्री विष्णुपुराण पांचवें अंश के बीसवें अध्याय के प्रारंभ में इस प्रसंग के कतिपय श्लोक श्री कृष्ण के शीलगुण का मनोहर वर्णन करते हैं। संस्कृत टीका में "ततस्ता चुबुके शौरिः" इत्यादि कितने पद्य लिखित हैं। उनका यह अर्थ है—फिर, सीधा करने की क्रिया में निपुण श्री कृष्ण ने दो अंगुलियों से उस कुबडी को चिबुक के सहारे उठाकर और पैर दबाकर उसको सीधी और सुंदरी बना दिया। तब प्रेमपरवश उस सुंदरी ने श्री कृष्ण का वस्त्र पकडकर उनसे कहा कि, "चलो मेरे घर।" यह सुनकर श्री कृष्ण ने मंदहास पूर्वक यह आश्वासन दिया कि, "मैं अवश्य तुम्हारे घर आऊंगा," और उसे विदा किया। फिर वे श्री बलदेव का मुख देखकर खूब हँस पडे।

श्री रामचंद्रजी के दिव्यचरित्र में कुब्जा की एक कथा आती है, जिसका भी वर्णन प्रकृतगाथा-व्याख्यान में आचार्यों से किया गया है। श्रीरामायण में प्रसिद्ध कुब्जा मंथरा है न! उस पर यह कथा है। उसपर भगवान ने कृपा नहीं की। परंतु श्री रामचंद्रजी ने बचपन में हाथ में छोटाधनुष रख कर खेलते हुए,

उससे एक दिन अचानक मथरा के कूबडपर मिट्टी की गोली चलायी। इससे वह कुबडी श्रीरामचद्रजी के साथ बहुत कुपित हो गयी। उसने सोचा, "राजकुमार होने के गर्व से यह राम मेरी हँसी उडाता हुआ यह काम कर रहा है। मत इसकी चलती है। अस्तु। योग्य समय पाकर मैं इसका बदला लूगी।" वर्षों के बाद उसने ठीक अवसर पाया, और कैकेयी की आड में उसके द्वारा श्रीरामचद्रजी के राज्याभिषेक उत्सव में विघ्न डाल दिया। यद्यपि यह कथा वाल्मीकि रामायण म उपवर्णित नहीं, तथापि दूसरे ग्रथो में इसका उल्लेख है। प्रकृत गाथास्थ द्राविड शब्दों का यह भी अर्थ हो सकता है कि, "हे लीलाधनुष से कुब्जा के कूबड पर मारनेवाले गोविंद!" अत इस प्रकरण में आचार्य इस कथा का भी वर्णन करते हैं। परतु इस प्रकरण में गोविंद शब्द सुनने से शका होगी कि यह श्रीकृष्ण का ही चरित्र हो सकता है, न तु श्रीरामचद्र का, क्यों कि उनका गोविंद नाम नहीं होता। परतु यह कोई बडी बात नहीं। क्यों कि यह गोविंद शब्द भगवान का अनादि नाम है, श्रीकृष्णावतार में इसकी विशेष प्रसिद्धि हुई, इतनी ही बात है। गोविंद शब्द का अर्थ होता है भूपाल, जो श्रीरामचद्र पर भी ठीक लगता है। गोविंद शब्द का अर्थ कृष्ण ही मान कर भी आचार्य एक अद्भुत समाधान बतलाते हैं—चूकि कुचेष्टा करने की प्रसिद्धि श्रीकृष्ण की है, नतु श्रीराम की, अत आळ्वार श्रीरामकृत चेष्टा को श्रीकृष्ण पर लाद देते हैं। इस विषय के दृष्टात के रूपमें एक द्राविडी कहावत है—"पोम्बळियेल्लाम् श्रमणन् तलैयोडे।" माने सभी अपराध अवधूत साधु पर लगाये जाते हैं। अन्यायधन्य नामक राजाके नगर में एक चोर ने किसीके मकान मे चोरी करने के उद्देश्य से दीवार में सेंध लगायी थी। दीवार गीली थी, अत वह गिर गयी और चोर उसके नीचे दब कर मर गया। प्रात काल होने पर चोर के पत्नी पुत्रादि को इस बात की खबर मिली और उन्होंने उस मकान के स्वामी को राजा के पास लेकर उस पर (चोर की) हत्या करने का अभियोग किया। राजा ने उससे कहा "तुम्हारी दीवार गीली थी, अत बेचारा यह चोर मर गया, अत यह तुम्हारा अपराध हुआ जिसके लिए अब तुम्हें दड भोगना पडेगा।" गृहस्थ ने उत्तर दिया कि, "सरकार! यह तो दीवार बनानेवाले राज का दोष है, मेरा नहीं।" राजा ने राज को बुलाकर सुदृढ दीवार न बनाने के कारण उसे दड देने की धमकी दी। उसने कहा, "मिट्टी से पानी मिलानेवाले नौकर ने अधिक पानी लगाया, फलत मिट्टी पतली हो गयी और दीवार गिर गयी। अत यह अपराध उस नौकर का है।" फिर नौकर बुलाया गया। उसने कहा कि "कुम्हार ने मुझे बडा घड़ा दिया, जिससे पानी मापसे अधिक हुआ।" कुम्हार ने कहा, "मैं तो प्रमाण के अनुसार ही घडा बनानेवाला था, परतु ठीक उसी समय मेरे घरके सामने से एक वेश्या निकली, मेरा ध्यान उस पर गया और फलत घडा बड़ा हो गया।" तब वेश्याको बुलाने मे आया। उसने अर्ज की, "मैंने धोबी को अपना कपडा दिया था। उसने ठीक समय पर उसे नहीं लौटाया। अत मुझे उसके घर जाना पडा। मैं वहा जाती थी। मुझे इस कुम्हार की चिंता थोडी थी?" फिर धोबी की बारी आयी। उसने विनती की, "प्रभो! मैं कभी कपडा लौटाने में विलब नहीं करता। परतु उस दिन के बारे में मैं क्या कहू? मैं तो बडे सवेरे ही उठकर कपडा लेकर घाट पर गया। परतु कपडा धोने के पत्थर पर एक अवधूत साधु बैठा था, जो बहुत प्रयत्न करने पर भी उठा नहीं। फलत मुझे कपडा धोये बिना ही घर लौटना पडा।" फिर राजा की आज्ञा से सेवकों ने बहुत प्रयत्न से उस साधुको ढूढ कर राजा के पास लाया। राजा ने उससे पूछा, "तुमने क्यों कर पत्थर पर बैठकर इस धोबी को अपना काम करने नहीं

दिया ?" साधु तो एक दम मौनी था और शायद विदेशी भी । जो भी हो । वह चुप रह गया । तब राजाने सोचा, "दूसरे सभीने सकारण अपने को निर्दोष बताया; परंतु यह साधु अपना मुख खोलता नहीं । इसका कारण यही होगा कि यह अपने को दोषी ही मान रहा हैं ।" यह सोचकर उसने साधु को सूली पर चढाने की आज्ञा दी । तबसे यह कहावत बनी कि सभी अपराध अवधूत साधु पर लगाये जाते हैं । इसी न्याय से हाल में श्रीरामचद्र का अपराध श्रीकृष्ण पर लगाया जा रहा है । तथा च यह तात्पर्य हुआ, "हे अपने पिछले अवतार मे (श्रीरामावतार में) कूबडी मंथरा के कूबड पर गोली चलानेवाले श्री कृष्ण !" बाकी सब स्पष्ट है ॥ .... .... .... .... (५)

(गाथा.) विनैयेन् विनैतीर् मरुन्दानाय् विण्णोर् तलैवा केशवा *
मनैशेरायर् कुलमुदले मामायने माधवा *
शिनैयेयु तलैय मरामरङ्गळ् एलुमेयुदाय् शिरीदरा *
इनैयाय् इनैयपेयरिनाय् एन्नु नैवन् अडियेने ॥ ६ ॥

**पापिनो मम पापनिबर्हणदिव्यौषधभूत! नित्यसूरिनाथ! केशव! कुब्जकुटीरवास्तव्यगोपालकुलप्रधानभूत! अद्भुतगुणचेष्टितशालिन्! माधव! (राघवत्वे) शाखाविटपसंभूतां सप्तसालीं निष्प्रीकृतवन्! भगवन् श्रीधर! विलक्षणस्वरूपविशिष्ट! विलक्षणदिव्यनामाढ्य! इत्याक्रन्दन् द्रवीभूतहृदयोऽस्मि हन्त! ॥**

इयं गाथा पूर्वगाथाशेषभूता । पूर्वस्यां गाथायामिव अस्यामपि भगवत्कृपा प्रार्थ्यत इति यावत् । भगवत्कृपाप्रार्थनाया गाथायामस्यां मुक्तकण्ठमनुक्तत्वेऽपि पूर्वगाथातोऽनुपक्षनीयता माशेरते श्रीकुरुकेशाचार्याः । मुनिवरो वैमुख्यविदूरग आभिमुख्यसन्निकृष्टो भूत्वाऽपि स्वस्मिन् भगवदाभिमुख्यमनवलोकयन् भगवन्तं बहुधा संबोध्य क्रन्दति । [ **पापिनो मम पापनिबर्हणदिव्यौषधभूत!** ] इत्येतत्संबोधनं प्रकृतपरिस्थित्यनुगुणमजनि । यं खलु भगवत्संश्लेषं महान्तस्सुकृतिनः कामयन्ते, सुमहत्तरतपःफलं च मन्यन्ते, तत्र वैमुख्यं यदजनि मम, तदेतत् पापफलं खलु; एतादृशपापभूयिष्ठस्य मम स्वकीयसौशील्यगुणप्रदर्शनेन यदाभिमुख्यमुत्पादितम्, तदेतत् सहस्रनाममध्ये * निर्वाणं भेषजं भिषक् * इति भेषजत्वेन भिषक्त्वेन च व्यपदेशानुगुणमेवेत्युच्यत इव । परमकृपया मम स्वाभिमुख्यसमुत्पादक भगवन्! इत्युक्तं भवति । [ **नित्यसूरिनाथ!** ] दिव्ये धाम्नि नित्यानुभवनिरतानां मुक्तानां नित्यानां च एतादृशपापसंभवप्रसक्तिर्नास्ति खलु इति सानन्दमुच्यत इव । एतादृशमेवाभिप्रायं व्यनक्ति संबोधनमिदम् । [ **केशव!** ] भगवते केशवनामधेयं पार्वतीपतिना वितीर्णमिति हरिवंशतोऽवगम्यते । * क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम् । आवां तवाङ्गे संभूतौ तस्मात्केशवनामवान् ॥ * इतीदं हरवचनमिहानुसन्धेयम् । प्रशस्तकेश इत्यप्यर्थः । कृष्णावतारे कंसप्रेरितकेशिनामक [ वाजिवेषधर ] दैत्यहन्ता—इत्यप्यर्थः । * नरके पच्यमानस्तु यमेन परिभाषितः । किं त्वया नार्चितो देव. केशवः क्लेशनाशनः ? ॥ * इतीदं यमवचनं केशवनाम्नः सर्वोत्कृष्टतां हि संप्रकाशयति ।

[ **कुब्जकुटीरवास्तव्य गोपालकुलप्रधानभूत!** ] कुब्जकुटीरवास्तव्यविशेषणम् गोपालानामिव गोपालकुलप्रधानभूतस्य भगवतोऽपि सुघटम् । वस्तुतो गोपालाश्च गोपालचूडामणिश्च कुब्जकुटीरवासेनैव रूढ

क्षपितकाला । द्वारकाप्राप्तिसमनन्तरमेव खलु वासुदेवस्य प्रासादप्राकारादिपरिवृतरम्यहर्म्यनिवासलाभ । [अद्भुतगुणचेष्टितशालिन् !] व्रजानिस्तुल्य मथुरादिस्थलविशेषेष्वपि यद्यपि कृष्ण प्राकाशयदद्भुतगुणचेष्टित-विशेषान्, तथाऽपि व्रजे प्रकाशिताना तेषा कोटितमीमपि कला नार्हन्ति ते, इति यशोदास्तनंधयकिशोरगुण विद्वाना रसिकमणीना व्याहार । [माधव !] व्रजे एव विहर्ता परात्परो लक्ष्मीपतिरेव ननु इत्युक्त भवति। [शाखाविटपसंभृतां सप्तसालीं निष्पत्रीकृतवन् !] इति संबोधन भक्ताना विघटनीयत्व प्रतिपादने पर्यवस्यति। यदा सुग्रीवो महाराजो वालिनो विश्वातिशायि विक्रमातिशय मुहुर्मुह स्तुवदधे, तदा भस्मच्छन्नानलनिभस्य राघवस्य विक्रमभूम्नि सदेहग्रस्तचित्तो बभूव, तदा राजस्तद्विश्वासदार्ढ्यसम्पादनार्थं सप्तसालीविभेदनमकार्षीदिति श्रीरामायण कथा प्रथिता । यदाहु श्रीवत्साङ्कमिश्रा अतिमानुषस्तवे—* सालान् हि सप्त सगिरीन् सरसातलान् यान् एकेषुमदजवनो निरपत्रयस्त्वम् * इत्यादि । कथाया अस्या अत्रानुसंधानमत्यन्तमुचितम् । तथाहि । सुग्रीवो यदा स्वविक्रमे सदेहोऽभूत्, तदा तदीय सदेहापनोदन राघवस्य किमावश्यकम् ? नैवावश्यकम् । सदेग्धु काम स । तावता स्वस्य का क्षतिर्नाम ? न काऽपि क्षति । तथाऽपि आश्रितस्य तस्य कथञ्चिदपि परित्यागो न कर्तव्य इति धियैव खलु तत्सदेहनिरसने प्रवृत्ते । एव प्रकृतेऽपि शठकोपमुनि स्वनीचायोग्यत्वानुसन्धानेन यदि विमुखो भवति, एतेन भगवत का हानि ? नैव काऽपि हानि । पारेपरार्धं हि जना भगवन्त नमन्ति स्तुवन्ति च। कतन तिंत्रिणीकोटरे निविष्टस्यास्य मुने स्वाभिमुख्य समुत्पादनार्थं प्रयासलेशोऽपि न खलु करणीयो भगवता । तथाऽपि भक्तप्रेमसारस्यास्य कथञ्चिदपि प्रहाण मा स्म भूदिति मनीषयैव खलु भगवानेतस्य स्वस्मिन्नाभिमुख्यसम्पादनार्थं सुतरा प्रयस्यति । तदेतत्सम्यगवगच्छन् मुनिवर 'भगवत इव विरतनी प्रकृति ' इति कथयन्निव सप्तसालीभेदनकथामिह प्रास्तौषीदिति । निष्पत्रीकरण नाम पर्यायतो विभेदनमेव । [श्रीधर !] सप्तसालभेदनकालिकनीरश्रीरिह विवक्षितेत्याचार्या । माधवशब्देन पौनरुक्त्य माभूदिति । अवशिष्ट स्पष्टम् ॥

—* छठी गाथा—विनैयन् विनैतीमरुन्दानाय् *—

"हे मुझ पापी के पाप मिटानेवाले दिव्य औषध स्वरूपिन्! हे नित्यसूरियों के नाथ! हे केशव! हे निकुंजकुटीर निवासी गोपकुल के प्रधान! हे अत्यद्भुत गुणचेष्टित विभूषित! हे माधव! हे (श्री रामावतार में शाखाओं व पल्लवों से भरित सात सालवृक्षों का भेदन करनेवाले! हे श्रीधर! हे ऐसे विलक्षण स्वरूपवाले! हे विलक्षण शुभनामविभूषित!" यों पुकारता हुआ मैं द्रुतहृदय हो रहा हूं ॥

यह गाथा पिछली गाथा का शेषभूत (माने उसीसे सम्बद्ध) है। अर्थात् उसकी भांति इसमें भी भगवान की कृपा माँगी जा रही है। यद्यपि इसमें इस बात का प्रकाशक स्पष्ट शब्द नहीं है, तथापि श्री कुरुकेशस्वामीजी कहते हैं कि पूर्वगाथास्थ प्रार्थना वचन की ही इसमें भी अनुवृत्ति करनी चाहिए। आळ्वार भगवान से वैमुख्य छोड कर अभिमुख जैसे होकर, अपने विषय में भगवान का आभिमुख्य न देखते हुए, खिन्न होकर नानाविध सम्बोधनों से उनकी स्तुति करते हुए उनको पुकारते हैं, प्रकृत गाथा से। आळ्वार की वर्तमान दशा के अनुगुणतया यह पहला सम्बोधन किया गया है—[हे मुझ पापी के पाप मिटानेवाले दिव्य औषधस्वरूपिन्!] ज्ञानी महात्मा लोग जिस भगवत्संश्लेष को सदा माँगते हैं और

महान पुण्य का फल मानते हैं, उसीसे मै (आल्वार) विमुख हुआ न? अवश्य ही यह प्रबल पाप का फल है। अब भगवान ने अपने सौशील्यगुण का प्रकाशन करते हुए मेरा यह पाप मिटाकर मुझको अपना अभिमुख बना दिया। अतः उनको औषध पुकारना उचित है। श्रीविष्णुसहस्रनाम में भी आपके शुभ नाम गाये हुए हैं—"निर्वाण भेषजं भिषक्" (अर्थात् रोगनिवृत्ति का आनंद, औषध और वैद्यराज सभी भगवान हैं)। तथा च प्रकृत संबोधन का यह तात्पर्य हुआ कि 'असीम कृपा से मेरा वैमुख्य दूर कर मुझे अपना अभिमुख बनानेवाले हे भगवन्!' [हे नित्यसूरियों के नाथ!] इससे परमपद निवासी नित्यमुक्तों के भाग्य की स्तुति सानंद की जाती है, जिन्हें एसे पाप की प्रसक्ति नहीं; अर्थात् जो कभी भगवान से विश्लिष्ट हुए विना नित्यसंश्लेष पा रहे हैं। इसी भाव का सूचक हैं आगे का यह भी संबोधन—[केशव!] हरिवंश में भगवान के इस शुभ नाम का अर्थ शिवजी से यों उपवर्णित है—"क इति ब्रह्मणो नाम ईशोऽहं सर्वदेहिनाम्। आवां तवाङ्गे संभूतौ तस्मात्केशवनामवान्॥" इसका यह तात्पर्य है—चतुर्मुखब्रह्मा का नाम है—'क'; शिवजी का नाम है 'ईश'। ये दोनों देव भगवान के श्रीविग्रह से उत्पन्न हैं; अतः उनका नाम हुआ—केशव। इस नाम का दूसरा यह भी अर्थ होगा कि प्रशस्त माने अति श्रेष्ठ व मनोहर केशवाले। अथवा यह भी अर्थ होगा कि श्रीकृष्णावतार में कंसप्रेरित केशिनामक असुर का (जो कि घोडे के रूप में व्रज आया था) संहार करनेवाले। भगवान का यह अत्यंत श्रेष्ठ नाम माना जाता है। क्यों कि यमराज का यह प्रसिद्ध वचन है—"किं त्वया नार्चितो देवः केशवः क्लेशनाशनः।" इसका यह तात्पर्य है—नरक में दुःख भोगनेवाले चेतन से यमराज ने पूछा कि "क्या तुमने दुःखनाशक केशव का कीर्तन नहीं किया?"

[हे निकुंजकुटीरनिवासी गोप कुल के प्रधान!] यह विशेषण कि 'निकुंजकुटीनिवासी' गोपों तथा उनके प्रधान श्रीकृष्ण को भी लगता है। क्यों कि दोनों ही निकुंज व कुटीर मे वास करते थे। श्रीद्वारका पहुंचने के बाद ही श्रीकृष्ण प्रासाद में रहने लगे। [हे अत्यद्भुत गुण चेष्टित विभूषित!] यद्यपि व्रज छोटने के बाद मथुरादि अनेक स्थलों में भी भगवान ने अपने अनेक अद्भुत गुण चेष्टितों का प्रकाशन किया; तथापि रसिकों का यह सिद्धांत है कि ये सभी यशोदास्तनंधय बालकृष्ण के गुणचेष्टितों के एक कोटितम भाग के भी समान नहीं। [हे श्रीधर!] इस संबोधन का यह भाव है कि व्रज में ऐसी विलक्षण लीला करनेवाले, ये व्यक्ति साक्षात् लक्ष्मीपति भगवान हैं। [शाखाओं व पल्लवों से भरित सात साल वृक्षों का भेदन करनेवाले!] इस संबोधन का यह भाव है कि भगवान भक्तों के मन में अपने विषयक विश्वास समुत्पन्न करते हैं। जब कि सुग्रीव महाराजा वालि के असदृश पराक्रम का वारंवार चिंतन करता हुआ और भस्मच्छन्नानल के सदृश श्रीरामचंद्र भगवान के पराक्रम से अपरिचित होने के कारण उसमें शंका करता हुआ अत्यंत दुःखी हुआ किया, तब श्रीरामचंद्रजी ने एक तीर छोडकर उससे सात सालवृक्षों का भेदन कर डाला; जिससे सुग्रीव के मन में यह विश्वास उत्पन्न हुआ कि अवश्य ही ये महापुरुष वाली का संहार कर सकेंगे। हाल में इस कथा का अनुसंधान करना अत्यंत उचित है। तथाहि—जब सुग्रीव ने श्रीरामचंद्रजी के सामर्थ्य में शंका की, तब उन्हें वह शंका दूर करने की खास आवश्यकता नहीं थी। क्यों कि सुग्रीव के शंका करने से श्रीरामचंद्रजी की कोई भी हानि नहीं पहुंचती

थीं। तथापि अपने आश्रित की उपेक्षा करना अनुचित मान कर ही उन्होंने उसे विश्वास दिलाने का प्रयास किया। हाल में आळ्वार के विषय में भी यही न्याय लगता है। तथाहि—अयोग्यता का अनुसन्धान करते हुए श्रीशठकोपस्वामीजी के निकट जाने से भगवान की कोई हानि नहीं होगी, उनके सिवा भी अनंत भक्त जन भगवान से मिलकर उनकी स्तुति व सेवा करते ही हैं। अत इस विशाल पृथ्वीतल के किसी एक कोने म इमली के पेड के नीचे एक कोटर में बैठ कर प्रलाप करनेवाले आळ्वार को अपने वश करने की चेष्टा करना भगवान के लिए आवश्यक नहीं है। तथापि भक्तप्रेमसर इनको छोड देने के अनिच्छुक होकर ही भगवान इनको अपने अभिमुख बनाने के लिए विशेष प्रयत्न कर रहे हैं। अत शायद यह अर्थ बनाने के उद्देश्य से ही, "अपने भक्तों को अपने विषय में विश्वास दिलाना भगवान का अनादि स्वभाव है" श्रव आळ्वार दृष्टान्त रूप से इस ममसालभजनवृत्तान्त का वर्णन कर रहे हैं। [श्रीधर] शब्द से उक्त समसालभजन के समय की भगवान की वीरश्री सूचित की जाती है। अत माधवशब्द से इसकी पुनरुक्ति नहीं होगी। बाकी सब स्पष्ट है॥ (६)

(गाथा) अडियेन् शिरिय ञानत्तन् अरिद लाक्कु मरियानै *
कडिशेर् तण्णन्तुळाय् कण्णिपुनैन्दानृतन्नै कण्णनै *
शेडिया राकै यडियारै शेर्दल् तीर्कुम् तिरुमालै *
अडियेन् काण्वा नलतुवन् इदनिल् मिक्को रयर्वुण्डे॥ ७॥

**अल्पीयसा ज्ञानेन युक्तोऽहं महाज्ञाननिधीनामपि दुरवबोधम् सुरभिशिशिररमणीयतुलसी-स्रग्विभूषितम् कृष्णसमाख्यासनाथम् दासभूताना जनानां संसारमहारण्यानुबन्धिशरीरसङ्ग-विच्छेत्तारं च श्रियःपतिं सेवितुकामः खलु हन्त! क्रन्दामि! हे! इतोऽधिकः कश्चिदस्ति कोऽप्यविवेको नाम॥**

पुनरपि मुनिसार्वभौमस्य अयोग्यतानुसन्धानतोऽपसरणेच्छा समुन्मिषति गाथयामस्याम्। भवभूति-महाकविप्रणीतोत्तररामचरितश्लोकविशेषोऽत्र स्मृतिपथमुपयाति। * हाहा धिक् परगृहवासदूषणं यत् वैदेह्या प्रशमितमद्भुतैरुपायैः। एतत्पुनरपि दैवदुर्विपाकादालर्कं विषमिव सर्वत प्रसृतम्॥ * इति। [आलर्कं विषम्—उन्मत्तशुनकदंशजनित विषमित्यर्थः। तत् उपायविशेषैः कदाचित् प्रशमितमपि कालान्तरे पुन प्रसर्पतीति प्रसिद्धमेतत्।] एवमेव मुनिवरस्यास्य अनर्हतानुसन्धानपूर्वकमपसर्पणरुचिरुपाया भगवता कथञ्चित् प्रशमिताऽपि सती भगवत एव भाग्येन पुनरुन्मिषति। किं नामात्र भगवतो भाग्यमिति चेत्, पुनरस्य स्वाभिमुख्य-सम्पादनार्थं समनन्तरगाथाया मद्भुतोपायप्रदर्शने या प्रवृत्तिरवलोक्यते सैव सत्यं सुमहत्तरं भाग्यं भगवत। स्वस्य अल्पिष्ठज्ञानयुक्तत्व भगवतो महाज्ञाननिधीनामपि दुरवबोधत्वं च यदत्रानुसन्धीयते तदेव अपसरणकामना-बीजं मन्तव्यम्। लोकेऽपि महाज्ञाननिधिं विपश्चिदपश्चिमं कञ्चन महापुरुषं यदि कोऽप्यज्ञो वराक स्तोतुं प्रवर्तेत, तर्हि स गर्हणीयो भवतीति पश्याम। भगवान् यामुनार्योऽपि * तत्त्वेन यस्य महिमार्णवशीकराणुः शक्यो न मातुमपि शर्वपितामहाद्यैः। कर्तुं तदीयमहिमस्तुतिमुद्यताय मह्यं नमोऽस्तु कवये निरपत्रपाय॥ * इति ह्यनुसमधत्त। तदप्येतद्गाथामूलकमेव। गाथाया अस्या उपक्रमे "अडियेन्" इति पदं विराजते। दासोऽहमिति तदर्थः।

भगवतो विषये दास्यकरणं ममानर्हमिति कथयतोऽपसिसीर्षतश्चास्य मुनिवरस्य मुखात् अधुना दासोऽहमिति वाणी कथमुद्भवति ! प्रथमपादोपक्रम इव चरमपादोपक्रमेऽपि हि "अडियेन्" इति पदं विराजते; स यथाऽन्यस्थाने निविष्टं ह्येतदित्याशङ्कामुद्भाव्य द्वेधा समादधते पूर्वाचार्याः;—अडियेनिति दास्यरुच्या नोच्यते, अपि तु वासनाबलादुच्यत इत्येकसमाहितिप्रकारः। अथापरः—ज्ञानानन्दवत् शेषत्वस्यापि निरूपकधर्मत्वेन प्रतिपत्त्या कथितमिति। अहमित्युक्तिपर्याय एवेति फलितम्। अथ [सुरभिशिशिर रमणीयतुलसीस्रग्विभूषितम्] इत्येतद्विशेषणम् महाज्ञाननिधीनामपि दुरवबोधत्वस्य (अधस्तादुक्तस्य) विवरणात्मकं मन्तव्यम। परात्परस्यैव हि लक्षणं तुलसीस्रग्विभूषितत्वम्। उपरितनान्यपि विशेषणानि परत्वैकान्तिकत्वप्रतिपत्त्यैव प्रयुक्तानीत्यवगन्तव्यम।

तृतीयपादे तु कश्चिदस्ति विशेषः। "दासभूतानां जनानां शरीरसङ्गविच्छेत्तारम्" इत्येतद्विशेषणम् कैवल्यार्थिनामपि विषये अनुग्रहशीलत्वं यदस्ति भगवतः, तत् प्रतिपादयतीत्याचार्या व्याचक्षते। गीतायाम् * जरामरणमोक्षाय मामाश्रित्य यतन्ति ये * इतिश्लोकतो निर्दिष्टा अधिकारिणः स्वात्मानुभवमात्रप्रेप्सवः कैवल्यार्थिनः कथ्यन्ते। एते हि केवलं पुनर्जन्म माभूदिति कामयमाना भगवदनुभवनिस्पृहाश्च। एतादृशा अधिकारिणो यद्यपि मुनिवरस्यास्य दूष्यकोटिप्रविष्टाः, तथाऽपि तानिदानीं प्रशंसति मुनिः। कुतः? ते भगवन्तमुपसृत्य न दूषयन्ति खलु तम् इति धिया। ते तावदिह "दासभूतानां जनानाम्" इति दासजनत्वेन कथं निर्दिश्यन्ते ! इति पूर्वाचार्या आशङ्कामुद्भाव्य समादधत एवम्;—"सत्यं त एव दासभूता इति शठकोपमुनेर्मतिः; शेष्यतिशयाधाननिरता ये त एव हि दासाः; केवलास्तावत् भगवन्तमुपसृत्य तस्यावद्यमनुत्पादयन्तो दूरतोऽवतिष्ठन्त इति हेतुना तान् मुनिवरो मन्यते भगवदतिशयाधायकान्। प्रकरणानुगुणमिदं भाषणं रस रसिकानाम्। अन्ततः [हे! इतोऽधिकः कश्चिदस्ति कोऽप्यविवेकः!] इत्यत्र आचार्या अनुगृह्णन्ति—यदाऽहं संसृतिचक्रस्थो जन्मपरम्परासु भ्राम्यन्नवर्तिषि, तदा मम बहव आसन्नविवेकाः; ते हि श्लाघ्यतमा इति मन्ये; यतस्तदा भगवन्तमुपसृत्य तस्यावद्यसम्पादने न प्रावर्तिषि इति मुनिवरस्य हृदयमिति। एतदपि प्रकरणानुगुण सुशोभनम्॥ .... .... ... .... .... (७)

—※ सातवी गाथा–अडियेन् शिरिय ज्ञानत्तन् ※—

**अत्यल्प ज्ञानवान् यह दास (मैं) बडे बडे ज्ञानियों से जानने के अशक्य, सुगंधयुत सुशीतल व मनोहर तुलसीमालाधारी, 'श्रीकृष्ण' शुभ नामवाले, और अपने भक्तों के संसाररूपी महारण्य से संबद्ध शरीर संबंध छुडानेवाले लक्ष्मीपति का सेवन करना चाहता हुआ पुकार रहा है (रहा हूं)। हाय! क्या इससे भी अधिक कोई अविवेक हो सकता है?**

इस गाथा में आळ्वार, फिर भी नैच्यानुसंधान करते हुए भगवान से पीछे हटना चाहते हैं। इस विषय में भवभूति महाकवि विरचित "उत्तररामचरित" नाटक का यह पद्य दृष्टांत होता है—हा हा धिक् परगृहवासदूषणं यत् वैदेह्याः प्रशमितं मद्भुतैरुपायैः। एतत्तत्पुनरपि दैवदुर्विपाकात् आलर्कं विषमिव सर्वतः प्रसृप्तम्॥ यह श्रीरामचंद्रजी का वचन है। इसका यह तात्पर्य है—रावण से अपहृत जानकी जी को परगृहवासप्रयुक्त अपवाद जो लगा था, वह, अग्निप्रवेशादि अत्यद्भुतोपायों से उस समय दूर किया गया था; परंतु कई वर्षों के बाद वही अपवाद पागल कुत्ते के विषकी भांति धोबी के वचनरूप से फिर

सिर उठा रहा है। यह तो अनुभवसिद्ध विषय है कि पागल कुत्ते के डसने का विष, उपचार करने पर तत्काल शांत दीखता हुआ भी कुछ समय के बाद फिर अपना सिर उठाकर दुःख देने लगता है। इसी प्रकार, आळ्वार के समुत्पन्न विमुखता, जो भगवान से प्रयत्नपूर्वक मिटायी गयी थी, वह हाल में मानों भगवान के भाग्य से फिर भी उत्पन्न हुई। तथाहि—आळ्वार के समुत्पन्न यह रोग मिटाने के लिए भगवान आगे की गाथा में एक अत्यद्भुत उपाय करनेवाले हैं, जिससे उनके गुण बहुत प्रकाशित होंगे। यही भगवान का भाग्य है कि उनके सुंदर गुणों का प्रकाशन होना। अस्तु। हाल मे फिर भी आळ्वार के लौटने का कारण यही है कि उन्होंने ऐसा विचार किया कि, मैं तो अत्यल्प ज्ञानवान हूं और भगवान महा ज्ञानियों के भी ठीक समझने में अशक्य हैं। लोकव्यवहार मे भी हम देख रहे हैं कि यदि कोई मूर्ख, महाज्ञाननिधि पंडितश्रेष्ठ की स्तुति करेगा, तो इससे उस पंडित का अपयश ही होगा। अत एव श्री यामुनाचार्य स्वामीजी ने स्तोत्ररत्न में, महामहिम भगवान की स्तुति करने मे उतरना चाहनेवाले अपना धिक्कार किया, "तत्वेन यस्य महिमार्णवशीकराणुः" इत्यादि (७ वीं) पद्य से। पद्य का यह तात्पर्य है—जिन भगवान की महिमारूपी सागर के एक बिंदु के भी ठीक नापने में ब्रह्मा, शिव इत्यादि बडे बडे ज्ञानी लोग भी अशक्त होते हैं; ऐसे महामहिम की स्तुति करने मे उद्युक्त मुझ लज्जाहीन को नमस्कार (माने धिक्कार) हो। समझना चाहिए कि इस पद्य का मूल, आळ्वार की प्रकृत गाथा है। अस्तु। इस गाथा में पहले तथा चौथे पाद के प्रारंभ में "अडियेन्" शब्द प्रयुक्त है; इसका अर्थ है—दास मैं। भगवद्दास्य को अनुचित मान कर उससे दूर भाग जाना चाहनेवाले आळ्वार के श्रीमुख से दो बार इस अडियेन् शब्द का प्रयुक्त होना कुछ विचित्र-सा प्रतीत होगा। पूर्वाचार्य इसके दो समाधान देते हैं—(१) हाल में आळ्वार इस शब्द के अर्थ पर ध्यान दिये बिना ही अभ्यासबल से यह कह रहे हैं; अर्थात् आळ्वार को 'मैं' कहने की जगह 'अडियेन्' कहने की आदत पड गयी है, जिसे रोकना अशक्य है। (२) आळ्वार का यह अभिप्राय है कि ज्ञान व आनंद की भांति भगवद्दास्य भी आत्मा का असाधारण निरूपक धर्म है; अतः चित्, चेतन इत्यादि शब्दों की भांति अडियेन् शब्द भी आत्मा का पर्याय है। तथा च अडियेन् शब्द का अर्थ आत्मा अथवा 'मैं' है। [**सुगंधयुत, सुशीतल व मनोहर तुलसीमाला-धारी**] कहने से पूर्वोक्त इस अर्थ का विवरण किया जा रहा है कि भगवान विशेषज्ञानियों से भी ठीक नहीं समझे जा सकते। क्यों कि तुलसीमाला परात्पर वस्तु का असाधारण लक्षण है। इसी प्रकार आगे के विशेषण भी परत्व के सूचक होने की भावना से ही प्रयुक्त हैं।

तीसरे पाद में एक विशेषण है। आचार्यों का अभिप्राय है कि वहां के इस विशेषण से, कि [**अपने भक्तों के संसाररूपी महारण्य से संबद्ध शरीरसंबंध छुडानेवाले,**] भगवान के उस स्वभाव का वर्णन किया जा रहा है जिससे वे कैवल्य मांगनेवालों पर भी अनुग्रह करते हैं। कैवल्य शब्द का अर्थ है भगवदनुभव से विरहित, जीवात्मा का स्वात्मानुभवमात्र। अर्थात् शास्त्र बताता है कि यह जीव भी असीम आनंदरूपी है, जो स्वरूप संसार दशा में कर्म के निमित्त तिरोहित है, और उसके सर्वथा नष्ट हो जाने पर प्रकाशित होता है। अतः कितने लोग संसार को पार कर इस आत्मानुभवमात्र पाना चाहते हैं। इन्हीका नाम केवल है। भगवद्गीता में "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये" इत्यादि पद्य से इनका वर्णन किया गया है। भगवदनुभव करने की इच्छा से विरहित केवल पुनर्जन्मनिवृत्ति के इच्छुक इन जनों की यद्यपि

आळ्वार निंदा ही करते हैं। तथापि हाल में आप इनकी स्तुति कर रहे हैं। आळ्वार इन पर अब इस लिए प्रसन्न हैं कि ये लोग भगवान से मिलकर उन्हें दूषित नहीं करते। उन्हें भक्त पुकारने का भी एक रसमय कारण आचार्यों से बताया जाता है। तथाहि—आळ्वार के प्रकृत अभिप्राय से ये केवल ही वास्तव में भगवान के सच्चे भक्त हैं। क्यों कि वही भक्त कहलाता है जो अपने स्वामी का मान बढ़ाता है। केवल तो भगवान से मिलकर उन्हें अवद्य पहुंचाने के काम से सुदूर रहते हैं। अत आळ्वार हाल में इन्हीको वास्तव में भगवान के अच्छे भक्त मान रहे हैं। यह विवरण प्रकरणानुगुण व बहुत रसमय होने से भक्तों का भोग्य है। गाथा के अंत में [क्या इससे भी अधिक कोई अविवेक हो सकता है?] कहने का आळ्वार के अभिमत यह रसमय तात्पर्य आचार्यों से बताया गया है—जब मैं संसारचक्र में फँस कर जन्म परंपरा में घूमता रहा, तब अवश्य ही मेरे अनेक अविवेक हुए। परंतु अब मुझे लगता है कि वास्तव में वे सभी अविवेक बहुत श्लाघ्य ही रहे। क्यों कि तब मैंने भगवान से मिलकर उन्हें अवद्य उपन्न करने की चेष्टा नहीं की। यह भी प्रकरण का उचित रसमय तात्पर्य है॥ (८)

(गाथा) उण्डाय् उलहेल् मुन्नमे उमिल्न्दु मायैयाल् पुक्कु *
उण्डाय् वेण्णेय् शिरुमनिशर् उवलैयाक्कै निलैयेयृदि *
मण्तान् शोर्न्द दुण्डेलुम् मनिशर्काहुम् पीर् * शिरिदुम्
अण्डावण्णम् मण्करैय नेय्यूण् मरुन्दो मायोने ॥ ८ ॥

(अव.) अधस्तनगाथात पर सर्वेश्वरस्य शठरिपुमुनेश्च कश्चन संवाद प्रवृत्त । त प्रयमतो विशदीकृत्य परस्ताद्गाथाया अर्थं विवृणुम, सुखप्रतिपत्तये। अयोग्यतानुसन्धानेन पुनरपि विमुखोऽभून्मुनिवर इति ज्ञात खल्वधस्तनगाथया। अथ सर्वेश्वर पुन पुनरेवमस्य यथा न भवेदनर्हतानुसंधानमूलकमपसरण तथा नाम कथन बलवानभ्युपाय प्रयोक्तव्य इति पश्यन् मुनिवर प्रति जगाद, भो मुनिसार्वभौम! व्रजेऽइ नवनीत-मास्वादयमिति कथा भवता विदिता स्यान्नु, तदास्वादन मया किमर्थं कृतमिति किं भवान् जानीते? इति। मुनि प्राह नाह जानामीति, स एव स्वय कथयतु—इति धिया। अथ भगवानाह "यदि भवान् न जानीते तर्हि मया कथ्यमानमाकर्णयतात्। पुरा कदाचित्प्रलयसमये सकलमपि भुवन जठरे निवेश्य परस्ताद् बहिष्कृतवानभूवम्, तथा बहिष्करणावसरे किंचाश्चन मृद्भाग अंतरेव निलीनस्सन् मानुषाणामिव रोगकारी स्याच्छिमु! इति धिया विरेचनस्वीकरणपर्यायतया व्रजे नवनीतमास्वादयम्" इति। तदेतन्निशम्य मुनिवर प्राह—"भगवन्! आ किमेतत्? सर्वात्मनाऽप्यसम्बद्ध खलु भाषसे। प्रलयकाले सकलस्यापि भुवनस्य स्वजठरेऽवस्थापन वास्तविकमेव, तत कदा प्रवृत्तम्? व्रजे नवनीतास्वादन कदा प्रवृत्तम्? मध्ये भूयिष्ठ हि कालव्यवधानमस्ति। तत्सर्वथाऽप्यसंगत भाति त्वदुक्तम्" इति। अथ भगवानाह—"मुनिमहात्मन् भो! मत्कृतनवनीतास्वादने कारण पृष्टो भवानपि न ब्रवीति, मदुक्तमपि नाङ्गीक्रियते भवता। तर्हि भवानेव पुनर्विमृश्य तत्कारण कथयतात्" इति। अथ मुनिराह—"आश्रितकरस्पर्शेन पवित्र वस्तु मम परमभोग्य मिति मन्वानेन त्वया नवनीतमुपभुक्तमिति मम मनीषा" इति। तदनु भगवानुवाच—'मुनीन्द्र! तत्त्व जानासीति सतुष्यामि, तन्नवनीत यथा मम भोग्य तथैव भवता सह सश्लेषोऽपि मम परमभोग्य, यदि भवान् स्वसश्लेषरस मह्यमदत्वा विमुखो भवेत्तर्हि नवनीतभुक्तिप्रतिरोधकाना योग्य लोकमेव भवानपि प्राप्नुयात्"

इति । तमिमं संवाद सर्वसुगमताय गाथयाऽन्यया निबध्नाति । व्रजे नवनीतभुक्तावित मद्रूपभोगेऽपि भगवान् हन्त! भृशमुत्कण्ठितो वर्तते; मदीयमनर्हतानुसन्धानं कस्मै फलाय कल्पेत? इति मुनिवरः प्रोक्तवान् भवनीति परमतात्पर्यमत्र प्रतिपत्तव्यम् । [अथ मूलगाथार्थः ।] अयि मायानिधे भगवन्! अहो कालात्पूर्वं हि त्व सप्तलोकीं जठरे निवेशयामासिथ । पश्चात्सर्गकाले तत्सर्वमुद्गीर्य, ततश्च भूयसः कालात्पश्चात् मायाशब्दितेन संकल्पेन क्षुद्रमनुष्यहेयशरीरसंस्थानं प्राप्य गोपगृहं प्रविश्य नवनीतमास्वादितवानसि । सप्तभुवनोद्धारसमये उदरे अनुद्गीर्णमृदंशसद्भावशङ्कया मनुष्यजातिसम्भावितव्याधिविशेषानुदयाय औषधस्वीकाररूपेण नवनीतमास्वादितमिति कथन कथमिव युज्यते? (आश्रितकरस्पर्शसुभग वस्तु भोग्यमिति धिया भुक्तवानसि इत्यादिशेषपूरणमावश्यकम् ॥ .... .... .... .... .... (८)

## —※ आठवीं गाथा—उण्डायुलहेळ् मुन्नमे ※—

**अवतारिका**—पूर्वगाथा के बाद भगवान और आळ्वार के बीच म एक सवाद चला, जिसका विवरण करने के बाद प्रकृत गाथा का अर्थविवरण किया जायगा, जिससे यथार्थ अर्थ समझने मे पाठकों की सुविधा होगी । पिछली गाथा का यह तात्पर्य निकला था कि आळ्वार, फिर भी अपनी नीचता का अनुसंधान करते हुए भगवान से विमुख होने लगे । तब भगवान ने विचार किया कि "इस प्रकार बारबार नैच्यानुसधान करते हुए मुझसे दूर हट जाना चाहनेवाले आळ्वार का यह रोग मिटाने मे समर्थ किसी प्रबल उपाय का प्रयोग करना चाहिए । अस्तु; ऐसा करूंगा," और आळ्वार से कहा, "हे मुनिसार्वभौम! आप जानते होंगे कि मैंने श्रीकृष्णावतार में व्रज मे मक्खन खाया; क्या आप बता सकते हैं कि मैंने क्यों ऐसे किया!" भगवान के श्रीमुख से ही यह रहस्य जानने की इच्छा से आळ्वार ने प्रत्युत्तर दिया, "मैं नहीं जानता ।" यह सुनकर भगवान ने कहा, "यदि आप नहीं जानते, तो मैं बताऊंगा, सुन लीजिए । पहले एक समय मैंने सारे भूमंडल को निगलकर फिर बाहर निकाल दिया । तब मुझे यह भय हुआ कि पेट में थोडी मिट्टी रह गयी होगी और मानवों की भांति मुझे भी अजीर्ण का रोग उत्पन्न होता होगा । यह रोग रोकने के लिए विरेचन का औषध लेने की भावना से मैंने व्रज में मक्खन खाया ।" आळ्वार ने इसका यह प्रत्युत्तर दिया—"प्रभो! आप यह क्या कह रहे हैं? यह तो बड़ी विचित्र वार्ता हुई । यद्यपि यह सत्य है कि आपने प्रलयकाल में जगत को निगल दिया और सृष्टिकाल में उसे बाहर निकाल दिया । परंतु यह कब की बात है? और व्रज में मक्खन खाने की बात कब की है? दोनों के बीच में बहुत समय का अंतर है । अत. आपकी बात सर्वथा असंगत मालूम पडती है ।" तब भगवान ने कहा कि, "हे मुनिवर! मेरे मक्खन खाने का कारण पूछे जाने पर आप स्वयं कुछ प्रत्युत्तर देते नहीं; मेरी बात मानते भी नहीं । यह क्या उचित है? अत. अब आप ही फिर ठीक सोच कर मेरे प्रश्न का योग्य उत्तर दीजिए ।" आळ्वार ने इसका यह उत्तर दिया, "प्रभो! मेरा तो यह अभिप्राय है कि आपने अपने भक्तों के करस्पर्श से पवित्र बने हुए पदार्थ को परम भोग्य मानते हुए ही मक्खन खाया ।" फिर भगवान ने कहा, "हे मुनिवर! यह तो बहुत प्रसन्नता की बात है कि आप ठीक तत्व जानते हैं। ठीक है। अब जान लीजिए कि वह मक्खन मुझे जितना मधुर लगा, आपका संश्लेष भी मुझे ठीक इतना ही मधुर लगता है; अत. अब यदि आप मुझे अपना संश्लेष रस न देते हुए मुझसे दूर भाग जायंगे, तो आपको वही लोक मिलेगा, जो मेरे मक्खन खाने में विघ्न डालनेवाले को मिलेगा ।" यह सवाद प्रकृत गाथा में,

सर्वसुलभभांति से उपवर्णित है। तथा च इस गाथा का परमतात्पर्य यह हुआ कि "व्रज में नवनीतभोजन की भांति मेरा उपभोग करने के लिए भी भगवान बहुत समुत्सुक हैं; फिर मेरा नैच्यानुसंधान किस काम का होगा!" अब गाथा का अनुवाद लिखेंगे—

हे अत्याश्चर्यमय गुणचेष्टितवाले भगवन्! आपने बहुत पहले ही सातों लोकों को निगल दिया (अपने पेट में रख दिया), फिर (सृष्टिकाल में) उन सबको बाहर निकाल कर, (फिर बहुत समय के बाद) अपनी माया से (माने संकल्प से) क्षुद्रमानवों के हेय शरीर के सदृश विग्रह लेकर, इस लोक में प्रकट होकर मक्खन खाया। यह कैसे कहा जा सकता है कि सात लोकों को बाहर निकालने के समय पेट में कुछ मिट्टी के रह जाने की, और उससे साधारण मानवों की भांति अजीर्ण होने की शंका से औषध सेवन करने की भावना से आपने यह मक्खन खाया? (तत्व तो यही है कि आश्रितों के करस्पर्श से सुगंधित वस्तु पर प्यार करते हुए ही आपने मक्खन खाया॥) .... .... (८)

(गाथा.) मायोम् तीयवलवलॅ पॅरुमा वञ्जप्पॅय् वीय *
तूय कुळवियाय् विडप्पा लमुदा अमुदु शॅयृदिट्ट
मायन् * वानोर् तनितलॅवन् मलराळ् मैन्द नॅय्दुयिक्कुम्
तायोन् * तम्मा नॅन्नम्मान् अम्मा मूर्त्तियै चार्न्दे ॥ ९ ॥

क्रूरहृदयां बहुजल्पितकरीम् अत्यन्तवञ्चनविदग्धां पूतनां नाम पिशाचीं मारयितुकामम् अत्यन्तशिशुभावे सत्यपि तस्या विषदिग्धस्तन्यममृतनिर्विशेषमास्वादितवन्तम् आश्चर्यस्वभावम् नित्यसूरीणामद्वितीयमधिपतिं लक्ष्मीवल्लभम् सर्वस्य जगतो मातृवद्वत्सलं सर्वस्वामिनं विलक्षणदिव्यमङ्गलविग्रहविशिष्टं च भगवन्तमुपसृप्य साहित्येन संजीवेम। वैमुख्यतो विनाशं न कदाऽपि विन्देम॥

अधस्तनगाथाया भगवत उक्तिविशेषः कयाचन वैखर्या प्रसञ्जितोऽभूत्। का सा भगवदुक्तिः? 'व्रजे नवनीतास्वादनवत् परमभोग्यो हि मम मुने! भवता सह संश्लेषः' इत्येषा। इमामाकर्णितवान् मुनिवरः प्राह—'भगवन्! कीदृशोऽयं ते भ्रमः! वस्तुतो विषम् अमृतं हि मन्यसे; प्रेमधनहृदयैर्महात्मभिस्सह संश्लेषो हि सत्यं ते परमभोग्यः; सर्वथा वराकेण मया सह संयोगस्तु विषमेव ननु' इति। अथ भगवानाह—मुनीन्द्र! विषमेवेति ननु सत्यं कथ्यते? अहमपि विषमेवेति काममङ्गीकरोमि; नवनीतास्वादनवृत्तान्तमिव पूतनास्तन्यास्वादन वृत्तान्तमपि ननु जानाति भवान्? * स्तन्यं तद्विषसंमिश्रं रस्यमासीज्जगद्गुरोः * इति हरिवंशे व्यासमहर्षिकथितुमवधत्तामत्रभवान्। विषमपि मम नवनीतादप्यतिभोग्यमेव खलु भोः!' इति। तदिदमाकर्ण्य मुनिवरः 'आः! कीदृशीय मदसीया चातुरी! सर्वथाऽपि जयत्वयमेवे'ति प्रहृष्यन् तमेव भगवत्सारितं पूतनावृत्तान्तमनुसंदधानो विधूतवैमुख्यकथः परिपूर्णमाभिमुख्यमुपदर्शयति गाथयाऽनया। "साहित्येन संजीवेम; वैमुख्यतो विनाशं न कदाऽपि विन्देम" इति गाथायामस्यामन्तिमं वाक्यमवधेयम्।

जगज्जीवातोः कृष्णस्य मारणं संकल्प्य यत्नसमागता पूतना, तत एव सा क्रूरहृदयेति विशेष्यते । * कदाचिदन्तर्हित पूतनाम्ना कंसप्रयुक्ता किल काऽपि माया । निद्रापराधीनजने निशीथे व्रजं यशोदाकृतिरा-विवेश ॥ * (यादवाभ्युदये) इत्युक्तरीत्या यतस्सा मातृवेषधारणेन समागता, ततो मातृवद्वात्सल्यातिशय-ममिनयन्ती प्रेमविजल्पितानि बहूनि कथयामासेति सूच्यते [बहुजल्पितकरीम्] इत्यनेन । अन्यत् स्पष्टम् ॥ (९)

—* नवमीं गाथा–मायोम् तीयवल्लवलै *—

**अतिक्रूरहृदया, बहुत बकनेवाली और अत्यंत कपटी पूतना नामक पिशाची को मारने के लिए, अति शैशव में रहते हुए ही विष लगाये हुए उसके स्तन्य को अमृत की भांति पीनेवाले, अत्याश्चर्यस्वभाव; नित्यसूरियों के अद्वितीय नाथ, लक्ष्मीजी के नाथ, माता के समान समस्त जगत के विषय में वत्सल, सर्वस्वामी, आत्मेश्वर और विलक्षणदिव्यमंगलविग्रहवाले भगवान के समीप जाकर उनसे मिलकर उज्जीवित हो जायंगे; न तु कभी उनसे दूर भागकर विनष्ट होंगे ॥**

पूर्वगाथा में भगवान का यह चमत्कारपूर्ण वचन बताया गया कि, "व्रज में मक्खन खाने की भांति मैं आपके संश्लेष को भी परमभोग्य मानता हूं।" यह सुनकर आळ्वार ने कहा, "प्रभो! आपका यह कौनसा भ्रम है कि आप विष को ही अमृत मान बैठे हैं? प्रेमपूर्णहृदयवाले महात्माओं से मिलना आपको अति भोग्य होगा; परंतु सर्वथा हेय मुझसे मिलना आपको भी विष-सदृश ही होगा।" तब भगवान बोले, "आप अपने संश्लेष को विषसदृश बना रहे हैं। अस्तु। मैं भी इस बात का स्वीकार करता हूं। परंतु आप जानते होंगे कि नवनीत भोजन की भांति मेरे पूतनास्तन्यपान का भी एक चरित्र है; जिसका वर्णन करते हुए श्री व्यास महर्षि ने हरिवंश में कहा—"स्तन्यं तद्विषसंमिश्रं रस्यमासीज्जगद्गुरोः।" (विषमिश्रित वह स्तन्य भी भगवान को परमभोग्य लगा।) अतः सुदृढ समझ लीजिए कि मुझे विष, मक्खन से भी अधिक प्रिय लगता है। यह सुनकर आळ्वार ने विस्मित होकर सोचा कि, "अहो! भगवान बडे चतुर हैं। इन्होंने मुझे कैसे उपाय से जीत लिया!" फिर वे अत्यानंद से भगवान से स्मारित उसी पूतनास्तन्यपान-वृत्तांत का अनुसंधान करते हुए सर्वथा वैमुख्य छोडकर, इस गाथा में परिपूर्ण आभिमुख्य बता जा रहे हैं। गाथा के अंत में ये शब्द ध्यान देने योग्य है—"उनसे मिलकर उज्जीवित हो जायंगे, नतु कभी उनसे दूर भाग कर विनष्ट होंगे।"

जगत के जीवनभूत श्रीकृष्णशिशु का संहार करने की इच्छा से आनेवाली पूतना को क्रूरहृदया कहना उचित ही है। श्री वेदांतदेशिकस्वामीजी यादवाभ्युदय में कहते हैं कि पूतना यशोदा का वेष लेकर व्रज आयी थी; अत उसने माता की भांति वात्सल्य बताती हुई प्रेमालाप भी किया। इस अर्थ का सूचक है यह शब्द—[बहुत बकनेवाली।] बाकी सब स्पष्ट है ॥ .... .... (९)

(गाथा.) शान्दे विरुवल विनैहळम् शरितु माय प्पचरुत्तु *
तीन्दु तन्याल् मनमुवैक्क चिरुच्चि वीडु तिरुत्तुवान् *
आन्दे जान च्चुडराहि अहलम् कील्मेलळविरन्दु *
नेन्दे वुरुवा यरुवाहुम् इवचि त्तुयिराम् नेडुमाले ॥ १० ॥

**अविनाभूतं पुण्यपापकर्मसञ्चयमपाकृत्य, अज्ञानहेतुकं विषयसङ्गं च विनिवर्त्य, मामकं मनः स्वस्मिन्नेव केवलं व्यासक्तं विरचय्य, मदर्थं संकल्पितं मोक्षं च परिष्कर्तुं प्रवृत्तोऽभूत्सः, यो हि पुष्कलज्ञानप्रभापरिवृतो दशदिग्व्यापकः अतिसूक्ष्मचिदचिद्वस्तुष्वप्यन्तर्यामी व्यामोहैकनिरूपणीयो भगवान् ॥**

मुनीन्द्रस्य परमानन्दसंदोहमयी गाथा सेयम्। भगवता रामानुजार्येण श्रीरङ्गगद्ये "तिलतैलवद्दारुवह्निवत् दुर्विवेचत्रिगुणक्षणक्षरणस्वभावाचेतनप्रकृतिव्याप्तिरूप दुरत्ययभगवन्मायातिरोहित स्वप्रकाशः" इत्यनुगृहीत रीत्या दुर्विवेचतया घनसंश्लिष्टं पुण्यपापरूपं कर्मसमुच्चयं स्वकीयं भगवान् अपाकृतवानिति सानन्दमभिधीयते। प्रकृते अनर्हतानुसन्धानप्रयुक्त वैमुख्यव्यपोहनं यदकारि भगवता, तदेव सकलकर्मसमुच्चयनिरसनात्मकमभिप्रेयते मुनिवरेण। अथ विषयसङ्गविनिवर्तनं नाम रुचिवासनादीनामप्यवधूननम्। [**मामकं मनः स्वस्मिन्नेव केवलं व्यासक्तं विरचय्य**] तुलसी यथा स्वाभाविकेन सौरभेणोत्पद्यते तथा मुनिवरोऽयमपि भगवति स्वाभाविकमेव व्यासङ्गमुद्वहन्नवतीर्णः; ततश्च नैतदपूर्वतया वक्तव्यम्। तथाऽपि मध्ये अनर्हतानुसन्धानप्रयुक्ततया भगवति व्यासङ्गस्य शैथिल्याङ्कुरजननात् इदमिदानीमतिशयेन वक्तव्यमभूत्। [**मदर्थं संकल्पितं मोक्षं च परिष्कर्तुं प्रवृत्तोऽभूत्।**] तदिदं वाक्यं मत्यन्तविस्मयनीयं भायात्। सर्वदा सर्वथा परिष्कृतस्य मोक्षस्य अधुना परिष्करणं नाम किम्? इति प्रष्टव्यता भवेन्नाम। इदानीं मुनीन्द्रेण संश्लिष्टो भगवान् स्वकीयानन्दपारवश्येन मुनीन्द्रं प्रति कथयामास—'स्वामिन्! मदीयदीव्यगुणादिकमनुसंदधानः अनुभवंश्च वर्तेथाः; प्रथमप्रबन्धप्रथमगाथाया भवता प्रार्थितं यत् तत्परिपूरयितुं भवन्तं वैकुण्ठधाम नेतुं संकल्पितवानस्मि; तत्र गत्वा काञ्चन परिष्कारविशेषान् विरचय्य सरभसमेव समागमिष्यामि' इति। तत् अनुवदति मुनिवर इत्यास्थेयम्। उत्तरार्धेन भगवतः स्वरूपस्वभावादिकमुपवर्णयति सानन्दम्॥ .... .... .... (१०)

—※ दसवीं गाथा—शान्दविरुवल्विनैहळुम् ※—

**मेरे साथ ही रहनेवाले पुण्यपापरूप कर्म मिटाकर, अज्ञानजनित विषयसंग भी छुडाकर, मेरे मनको अपने में (भगवान में) ही सुदृढ आसक्त बनाकर, फिर मेरे लिए संकल्पित मोक्ष का भी, भगवान परिष्कार करने लगे; जो समग्र ज्ञान प्रभा से परिपूर्ण, समस्त-दिशाओं में भी व्याप्त, अतिसूक्ष्म चेतनाचेतनों के अंतर्यामी और (भक्तविषयक) व्यामोहशील हैं ॥**

यह गाथा आळ्वार के सीमातीत आनंद का प्रकाशक है। इसमें आप मुख्यतया इस अंश का सानंद वर्णन कर रहे हैं कि भगवान ने आत्मा से सुदृढ मिले हुए अपने (आळ्वार के) पुण्यपापरूप कर्म को सजड उखाड दिया। इसका यह तात्पर्य है कि उन्होंने आळ्वार का स्वकीय नैच्यानुसंधानपूर्वक वैमुख्य दूर कर दिया। यही प्रकरणोचित कर्मविनाशन है। इसके बाद विषयसंगनिवारण का यह अर्थ है कि रुचि, वासना इत्यादियों का भी निवारण। [**मेरे मन को अपने में ही सुदृढ आसक्त बनाकर**] यद्यपि यह कोई अपूर्व अर्थ नहीं है; क्यों कि जैसे तुलसी अंकुरित होती हुई सुगंध से विशिष्ट ही रहती है, ठीक इसी प्रकार आळ्वार भी अवतार समय से ही भगवान में ससक्तचित्त विराजमान थे। तथापि हाल में नैच्यानु-

संधान के कारण उसमें जो विघ्न उत्पन्न हुआ था, उसके निवारणरूप उपकार का अनुसंधान करना आवश्यक हुआ। [**मेरे लिए संकल्पित मोक्ष का भी, भगवान परिष्कार करने लगे;**] यह तो अत्यंत आश्चर्य कारक वचन है। मोक्ष में कौन-सा परिष्कार करने का है? वह तो सर्वदा सभी प्रकारों से सुपरिष्कृत ही रहता है। तथापि इस वाक्य का यह तात्पर्य है—शाठ में आळ्वार से मिलकर आनंदपरवश हुए भगवान ने उनसे कहा कि, "हे मुनींद्र! आप थोडी देर मेरे इस सौशील्यगुण का ही कीर्तन व अनुभव करते करते यहीं विराजें। अब मैं तो आपसे अपने पहले प्रबंध की पहिली गाथा में संप्रार्थित फल (मोक्ष) का प्रदान करने के लिए आपको वैकुंठधाम ले जाना चाहता हूं; अतः मैं पहले स्वयं उधर जाकर, वहां आवश्यक कतिपय परिष्कार रचकर शीघ्र ही लौटूंगा।" समझना चाहिए कि आळ्वार इसमें इस वचन का अनुवाद कर रहे हैं। गाथा के अवशिष्ट भाग में आळ्वार भगवान के स्वरूपस्वभावादियों का सानंद वर्णन करते हैं॥ .... .... .... .... .... (१०)

(गाथा.) **माले मायप्पेरुमाने मामायने येन्वेन्नु * मालेयेरि मालरुळाल् मन्नु कुरुहूर् शठकोपन् ***
**पालेय् तमिऴ रियैकारर् पत्तर् परवु मायिरत्तिन् पालेपत्तु * इवैपत्तुम् वल्लार्पिऱवि परियर्॥**

**स्वरूपतो विभुत्वशालिन्! आश्चर्यगुणतश्च विभुत्वशालिन्! अत्यद्भुतचेष्टितैश्च विभुत्वशालिन् भगवन्! इत्युच्चावचनामानि संकीर्त्य चित्तोन्मादमवाप्य भगवतः कृपया संश्लिष्टेन श्रीकुरुका-पुरीशशठकोपसूरिणाऽनुगृहीतम् परमभोग्यद्राविडशास्त्रविशारदानां संगीतकलाविचक्षणानां भक्तिभाजां च हृदयहारिण्यां सहस्रगीत्यामन्तर्गतमिदं दशकमधीयाना दुःखदवीयांसो भवितारः॥**

अयोग्यतानुसन्धानतोऽपसर्पणेच्छया स्वस्य यज्जातं दुःखम्, तथ तादृशानि च दुःखानि एतद्दशका-नुसन्धाननिरतानां सर्वथा नैव जायेरन्निति फलकीर्तनेन समाप्यत इदं दशकम्॥ सजातवैमुख्यमपि स्वात्मानं परमकारुणिको भगवान् केवलं स्वकीययैव अव्याजकृपया स्वेन सह संश्लिष्टमकार्षीदिति पूर्वार्धेन कथयति मुनिवरः। अनर्हतानुसन्धानेनापसर्पणरुचिर्या जाता स्वस्य, सा चित्तोन्मादकृतेत्यपि स्वयं सूचयति। प्रथमपादे भगवतो महत्त्वं पदत्रयेण प्रतिपाद्यते। श्रीभाष्योपक्रमे ब्रह्मशब्दार्थविवरणावसरे—"सर्वत्र बृहत्त्वगुणयोगेन हि ब्रह्मशब्दः; बृहत्त्वं च स्वरूपेण गुणैश्च यत्र अनवधिकातिशयम् सोऽस्य मुख्योऽर्थः; स च सर्वेश्वर एव" इत्यनुगृहीतमिहानुसन्धेयम्। स्वरूपेण गुणैः चेष्टितैश्च महत्त्वशालिन् भगवन्! इति सन्ततमाक्रन्दनमेव स्वस्य कृत्यमिति प्रथमपादेन प्रोक्तवान् भवति।

दशकस्यास्य अवयविभूतायास्सहस्रगीत्याः प्रभावस्तृतीयपादे प्रख्याप्यते। द्रमिडभाषारसिका ह्यस्यमन्यो लक्षणग्रन्थोऽयमिति भृशमभिनन्दन्ति। संगीतशास्त्रज्ञाश्च दिव्यगानोपयोगी सोऽयं दिव्यप्रबन्ध इति रमन्ते। परमभक्तास्तु भक्त्युत्पादको भक्त्यभिवर्धकश्चायं दिव्यप्रबन्ध इत्याद्रियन्ते। तत्र तत्र भगवत्कृतित्वेनैव स्वात्मनाऽभिधीयमानस्यास्य दिव्यप्रबन्धस्यैतादृश प्रशंसनं न स्वात्मप्रशंसायामन्वेतीत्यवगन्तव्यम्॥ .... (११)

—* एतद्दशकसारार्थसंग्राहको द्रमिडोपनिषत्सङ्गतिश्लोक एषः *—

श्लो॥ स्वालिङ्गनादिचपले पुरुषोत्तमेऽपि स्वायोग्यतामभिदधन्मुनिः शठारिः।
त्रैविक्रमादिचरितं प्रतिबोध्य तेन नीतः सुशीलगुणतामथ पञ्चमेन॥

—※ ग्यारहवी गाथा—माले मायप्पेरमाने ※—

"हे विभु (माने बडे) स्वरूपवाले! हे आश्चर्यगुणनिधे! हे अत्यद्भुत चेष्टितवाले!" इत्यादि इत्यादि अनेक शुभनाम रटता हुआ, उन्मत्त सा बनकर, भगवान की कृपा से उनसे संश्लिष्ट होनेवाले, श्री कुरुकापुरी के स्वामी श्री शठकोपसूरी से अनुगृहीत, क्षीरसदृश मधुर द्राविडी भाषा के विद्वानो, गानकला प्रवीणों तथा भक्तों के हृदयहारी सहस्रगीति के अतर्गत इस दशक का अध्ययन करनेवालों को किसी प्रकार का दुःख न लगेगा ॥

इस गाथा में आळ्वार से यह फलकीर्तन किया जा रहा है कि इस दशक का अध्ययन करनेवाले महात्माओं को यह दु ख नहीं लगेगा, जो कि अपने को लगा था, अर्थात् नैच्यानुसधान पूर्वक दूर भाग जाने की इच्छा से जो दु ख उत्पन्न हुआ किया, यह दु ख और ऐसा दूसरे किसी प्रकार का दु ख उन्हें नहीं लगेंगे। गाथा के पूर्वार्ध मे आळ्वार इस अर्थ का वर्णन करते हैं कि, "परमकारुणिक भगवान ने केवल अपनी निर्हेतुक कृपा से मेरा वैमुख्य दूरकर मुझे अपने साथ मिला दिया।" [उन्मत्त-सा बतकर] कहने का यह भाव है कि उक्तप्रकार नैच्यानुसधान करता हुआ भगवान को छोडकर दूर भागना चाहना केवल पागलपन है। गाथा के प्रारभ के तीन सबोधन भगवान की महत्ता का वर्णन करते हैं। श्रीभाष्य के उपक्रम में ब्रह्मशब्दार्थ का विवरण करते हुए श्री रामानुजस्वामी लिखते हैं—"सर्वत्र बृहत्वगुणयोगेन हि ब्रह्मशब्द, बृहत्व च स्वरूपेण गुणैश्च यत्र अनवधिकातिशय सोऽस्य मुख्योऽर्थ। सच सर्वेश्वर एव।" इसका यह तात्पर्य है—"महत्ववाली वस्तु ही ब्रह्म कहलाती है। अत इस शब्द का मुख्य वाच्य वही होगा जिसमें स्वरूप का और गुणो का महत्व परिपूर्ण हो, ऐसी व्यक्ति तो साक्षात् सर्वेश्वर ही हैं।" यह भाव है—भगवान का स्वरूप विभु, माने सब से बडा है, एव उनके कल्याणगुण भी सबसे अधिक हैं, अत इस प्रकार, स्वरूप व गुणों से बडे होने से भगवान ब्रह्म कहलाते हैं। अब आळ्वार यह बताना चाहते हैं कि सर्वदा "स्वरूप, गुणों व चेष्टितों से महत्ववाले हे भगवन्!" रटते रहना ही अपना स्वभाव है। अर्थात् भगवान जैसे अपने स्वरूपगुणों से सबसे बडे हैं, ठीक वैसे ही अपने विलक्षण चेष्टितों से भी बडे हैं। तीसरे पाद में सहस्रगीति का विलक्षण प्रभाव बताया जाता है। तथाहि—द्राविड भाषा के वेत्ता इसे महान लक्ष्यग्रथ व लक्षणग्रथ मानकर इसकी प्रशंसा करते हैं, संगीत-शास्त्रज्ञ इसे मधुरगानोपयोगी दिव्यग्रथ मानते हैं, और भक्त जन तो इसे भक्ति का उत्पादक व अभिवर्धक मानकर इसका आदर करते हैं। यह अपने ग्रथ की प्रशसा आळ्वार की आत्मप्रशसा नहीं होगी, क्योंकि तत्र तत्र आप स्पष्ट बता देते हैं कि सहस्रगीति के कर्ता साक्षात् भगवान ही हैं, स्वय तु निमित्तमात्र। अत वास्तव में यह भगवान की ही प्रशसा है ॥ (११)

सटीक सहस्रगीति के पहले शतक का पाचवा दशक समाप्त हुआ ॥

आळ्वार तिरुवडिगळे शरणम् ॥

———

# ॥ सहस्रगीत्याम् - प्रथमशतके - षष्ठं दशकम् - परिवदिलीशनै ॥

**(संस्कृतम् अवतारिका)** एकैकस्मिन्नपि दशके भगवत एकैको गुणः प्राधान्येनानुभूयते मुनिवरेणेति पुनः स्मार्यते। अतीतेषु पञ्चसु दशकेषु क्रमेण परत्वम् भजनीयत्वम् भक्तिसुलभत्वम् अपराधसहत्वम् सुशीलत्वमित्येते गुणा अन्वभूयन्त। अथेदानीं षष्ठे दशके स्वाराधत्वमित्यसाधारणो गुणोऽनुभूयते। सुखेन आराधयितुं योग्यत्वं हि स्वाराधत्वं नाम। हर्षप्रकर्षजनको व्यापारविशेष एव आराधनम्, तदिदं देवतान्तरेष्वत्यन्तमायासतः साध्यम्, भगवति तु आयासलेशमन्तरेण सुसाधमिति तत्तदाराधनप्रकारप्रतिपादके प्रमाणैः समवगम्यते। देवतान्तराणि तावत् छागबलि कुक्कुटबलिरित्येवंरूपाणि जीवहिंसात्मकान्येवाराधनानि कामयन्त इति प्रत्यक्षतोऽपि प्रेक्षामहे। भगवांस्तु स्वयं गायति—* पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः * इति। श्लोकेऽस्मिन् पूर्वार्धे * यो मे भक्त्या प्रयच्छति * इति कथनानन्तरं पुनरुत्तरार्धे * तदहं भक्त्युपहृतमिति कथनमनपेक्षितम्। पूर्वोक्तपरामर्शिनः केवलतच्छब्दस्य प्रयोगमात्रं पर्याप्तम्। अथापि * भक्त्युपहृतमिति पुनः प्रयोगो व्यर्थस्सन् किञ्चित् ज्ञापयति—भगवान् समर्प्यमाणे वस्तुनि दृष्टिं न निधत्ते, समर्पकस्य पुंसो हृदयशुद्धिमात्रे दृशं दिशतीति। * या क्रिया संप्रयुक्तास्स्युरेकान्तगतबुद्धिभिः। तास्सर्वाः शिरसा देवः प्रतिगृह्णाति वै स्वयम् ॥ * इत्येतद्वचनरत्नमप्यत्रानुसन्धातुमर्हम्। भगवद्भक्तामेसरस्य सञ्जयस्यानघं वचनम् * अन्यत्पूर्णादपां कुम्भादन्यत्पादावनेजनात्। अन्यत्कुशलसंप्रश्नान्न चेच्छति जनार्दनः ॥ * इत्येतत् श्रियःपत्युर्भगवतस्स्वाराधत्वे सर्वोत्तमं स्वानुभवसाक्षिकं च प्रमाणमिति प्रतिपत्तव्यम्। स एष स्वाराधत्वरूपो गुणविशेष एतस्मिन्दशकेऽनुभूयते प्रकाश्यते च ॥ *

## —* पहले शतक के छठे दशक की अवतारिका *—

**(हिंदी)** यह अर्थ बताया जा चुका है कि श्री शठकोपसूरी इस सहस्रगीति के एकैक दशक में भी मुख्यतया भगवान के एकैक गुण का अनुभव करते हैं। इस प्रकार आप पिछले पांच दशकों में क्रमशः भगवान का परत्व, भजनीयता, भक्तिसुलभता, अपराधसहत्व और सौशील्य नामक गुणों का अनुभव करने के बाद, इस प्रकृत छठे दशक में स्वाराधत्व नामक विशिष्ट गुण का अनुभव करने लगते हैं। स्वाराधत्व माने अति सुलभतया आराधन करने योग्य रहना। किसीको प्रसन्न करने का काम ही उसका आराधन कहलाता है। अब शास्त्र बताते हैं कि दूसरे देवोंको प्रसन्न करनेके लिए हमें बहुत प्रयास लेना पडता है, और भगवान का आराधन बडा ही सरल है। कभी कभी अन्य देवों को प्रसन्न करने के लिए उन्हें, बकरा, मुर्गा इत्यादियों की बलि चढानी पडती है। परन्तु भगवान स्वयं गीता में गाते हैं कि, "पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति। तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ॥" (अर्थात् जो कोई भक्ति के साथ मुझे कोई भी पत्र, पुष्प, फल अथवा केवल पानी का अर्पण करेगा, तो मैं भक्ति पूर्वक दिये हुए उन सबका स्वीकार करता हूं।) इस पद्य के उत्तरार्ध में 'भक्त्युपहृत' शब्द पुनरुक्त अथवा बेकार प्रतीत होगा। परन्तु इसका अर्थपूर्ण उपयोग हुआ है। यह शब्द बताता है कि भगवान अपने लिए दी जानेवाली

वस्तु का नहीं, किंतु देनेवाले की भक्ति का भी ख्याल करते हैं। अत एव उनका यह वैभव बताया गया है कि, "या क्रियास्सम्प्रयुक्तास्स्युरेकान्तगतबुद्धिभि । तास्सर्वा शिरसा देव प्रतिगृह्णाति वै स्वयम् ॥" अर्थात्, भगवान के अनन्य भक्त, उनकी जो सेवा करते हैं, उन सबको वे अपने सिरसे (माने अत्यत प्रेम व आदर के साथ स्वीकार करते हैं। एव मक्ताग्रेसर सजय का यह वचन भी इसी अर्थ का पोषक है—अन्यत्पूर्णादपा कुम्भात् अन्यत्पादावनेजनात्। अ यत्कुशलप्रश्नान्नचेच्छति जनार्दन ॥ (अर्थात् भगवान पूर्णकुभ, पाद धोने का पानी, और कुशल प्रश्न के सिवा दूसरी कोई पूजा मांगते नहीं। ऐसे अनेक प्रमाणों से बताये हुए भगवान का स्वाराधत्व नामक गुण ही इस दशक म विस्तार से उपवर्णित किया जा रहा है ॥ *

(गाथा.) परिवदि लीशनै प्पाडि * विरिवदु मेव लुरुनीर् *
पिरिवहै यिन्नि नन्नीर् तूय् * पुरिवदुवुम् पुहैपूवे ॥ १ ॥

**अखिलहेयप्रत्यनीकं सर्वेश्वरं स्तुत्वा स्वरूपविकासं लिप्समाना भो जनाः! प्रयोजनविशेषं प्राप्य सद्योऽपसरणे रुचिमपहाय शुद्धं सलिलं समर्प्य धूपपुष्पोपहरणं पर्याप्तम् ॥**

भगवदाराधनोपकरणाना लाघवमिह सुस्पष्ट प्रतिपाद्यते । अर्घ्यपाद्याचमनीयोपयोगिसलिलार्पणेन धूपसमर्पणेन च केवल स भगवान् परमा तृप्तिं विन्दतीति विनिवेद्यते । पूर्वार्धेन प्रकृतार्थोपदेशपात्रभूता भक्तजनास्सबोध्यन्ते। हेयप्रत्यनीक भगव त मकीर्त्य * स्वेन रूपेणाभिनिष्पद्यते * इत्याम्नात स्वरूपविकास प्रेप्सन्तो भो जना ! इत्येव सबोधनस्य किं हृदयमिति चेत्, फलतु सर्वोत्तमम्, तदवाप्तये भूरितरा क्लेशा अनुभोक्तव्या भवेयु किमिति विचिकित्सा माभूद् , अनायाससाध्येन स्वल्पनाऽऽराधनेन महत्तर फल सुसम्पादमि त्युक्त भवति । [ **प्रयोजनविशेषं प्राप्य सद्योऽपसरणे रुचिं विहाय** ] इत्यनेन क्षुद्रफलकामना निषिध्यते। प्राय कृत्स्न जगत् पुत्रपश्वन्नादिफल्गुप्रयोजन काक्षया भगवन्तमुपसृत्य तल्लाभत कृतकृत्य सत् अपक्रामतीति पश्याम , मा स्म तथाविधा भवत यूयमिति परमकृपामूलकोऽयमुपदेश । [ **शुद्धं सलिलं समर्प्य** ] इत्यनेन गङ्गादिपरमपवित्रतीर्थसम्पादनप्रयासो न विधीयते शुद्ध घृतमित्युक्ते वस्त्वन्तरसम्मिश्रणविरहित घृतमिति यथा ह्यर्थस्सिध्यति, तथैवात्रापि एलालवङ्गघुसृणादिमयोजनरहितम् औत्पत्तिक तोयमप्यलमिति कथित भवति । धूमस्य पुष्पस्य चाविशेषणात् य कोऽपि वा भवतु धूम, यत्किमपि वा भवतु पुष्पम्, नात्र विशेषविवक्षा—इत्युक्त भवति ॥ (१)

—* पहली गाथा—परिवदिलीशनैप्पाडि *—

**समस्त दोषों से अलिप्त भगवान की स्तुति कर उससे स्वरूपविकास पाना चाहनेवाले हे मनुष्यो! भगवान से कुछ अल्प प्रयोजन पाकर उनके यहा से लौटने की इच्छा छोड दो और उन्हे शुद्ध तीर्थ का अर्पण कर उसके बाद चाहे जो भी धूप और पुष्प का अर्पण करो, वही पर्याप्त पूजा है ॥**

इस गाथा में भगवान की सेवा करने के लिए आवश्यक सामग्री बहुत सुलभ बतायी जाती है। तथाहि—भगवान को अर्घ्य पाद्य आचमनीयों के लिए पानी देने के बाद थोडा धूप व पुष्प का अर्पण करने

मात्र से उनकी पूजा पूर्ण हो जायगी और वे बहुत तृप्ति पायेंगे। प्रकृत उपदेश के पात्र सज्जनों का यह संबोधन है—[समस्त दोषों से दूर भगवान की स्तुति कर] इत्यादि। इनका अपेक्षित फल है समस्त कर्मबन्धनों से मुक्त होकर भगवान के समान होकर अपने आत्मस्वरूप को अयत विकसित बनाना। एसे महान फल प्राप्त करने की सामग्री तो इनके पास बस! इतनी ही है कि भगवान की स्तुति व पूजा। अत. यह शका हो सकती है कि ऐसा महान फल पाने के लिए बडे साधन की आवश्यकता होगी; वह साधन हम कहासे ला सकेंगे। इस शका का यह समाधान है कि भगवान की पूजा बडी सरलता से सपन्न होगी। [भगवान से कुछ अल्प प्रयोजन पाकर उनके यहां से लौटने की इच्छा छोडकर] कहने से क्षुद्रपुरुषार्थ-कामना का निषेध किया जाता है। हम देखते है कि प्राय भगवान की सेवा करनेवाले लोग, उनसे पुत्र, पशु, अन्न इत्यादि अन्य प्रयोजन प्राप्त करके लौट जाते हैं और बाद मं उनकी चिंता तक नहीं करते। अत अब आळ्वार परमकृपा से अपने श्रोताओं को यह उपदेश दे रहे हैं कि "तुम एसा अल्प फल का विचार मत करो।" [शुद्धतीर्थ का अर्पण कर] कहने का यह अर्थ नहीं है कि गगा यमुनादि पवित्र तीर्थ से ही भगवान की सेवा करनी चाहिए। किंतु जेसे "शुद्धघृत" कहने से दूसरी वस्तु के असमिश्रित घृत समझा जाता हैं, ठीक इसी प्रकार इलायची लवंग कर्पूर इत्यादि सुगध द्रव्य की खोज में प्रयास नहीं उठाते केवल पानी मात्र से पूजा करना पर्याप्त है। एव धूप पुष्पों के बारे में भी अमुक धूप व पुष्प ही लाने की कोई आवश्यकता नहीं है, किंतु जो धूप व पुष्प आसानी से मिलें उसीसे काम चलाया जा सकता है॥ ... .... .. (१)

(गाथा.) मदुवार् तण्णन्तुळायान् * मुदुवेदमुदल्वनुकु *
एदुवेदेन् पणियेन्नाद * अदुवे आट्चेय्यु मीडे ॥ २ ॥

मधुस्यन्दिन्या तुलसीस्रजाऽलङ्कृतस्य चिरन्तनसरस्वतीप्रतिपादितोरुकर्षस्य च भगवतोऽनुरूपा सेवा कास्वित्? मत्सुकरा सेवा च का नाम? इति विह्वलतां विसृज्य सर्वविधकैङ्कर्येष्वन्वय-स्सुशोभनः ॥

आश्रयणकर्तु समर्पणीयद्रव्ये तारतम्यपरीक्षा माभूदिति प्रोक्तमवस्तनगाथायाम्। अस्या तु, भगवद्परिचर्यायां नाहमधिकारीति न केनाप्युदासितव्यमित्यभिधीयते। मधुस्यन्दीत्यादिविशेषणद्वय यदस्ति भगवत इह, तदिद भगवत्पारम्यप्रतिपादने परिक्षीयते। तुलसीस्रगलङ्कृतत्वप्रयुक्तम् अखिलवेदवेद्यत्वनिबन्धन चोत्कर्ष बिभ्रतो भगवतोऽनुरूपमाराधन किमस्ति नाम? किं वाऽह तत्राधिकारी? इति विचिकित्सा विसृज्य, * भवांस्तु सह वैदेह्या गिरिसानुषु रस्यते। अह सर्वं करिष्यामि जाग्रतस्स्वपतश्च ते ॥ * इति सौमित्रिप्रकाशित-मनोरथप्रक्रियया सर्वविधेष्वपि कैङ्कर्येषु सर्वोऽपि जन काममन्वेतुमर्हतीत्युक्तं भवति ॥ . (२)

—* दूसरी गाथा—मधुवार् तण्णन्तुळायान् *—

"मधु बहनेवाली सुंदर व सुशीतल तुलसी माला का धारण करनेवाले, पुरातनवाणी (माने अनादि वेदों) से प्रतिपादित, सर्वकारणभूत भगवान की अनुरूप सेवा कौनसी होगी?

एवं मेरे लिए सरल सेवा कौनसी होगी?" यह चिंता छोडकर उनकी सर्वविध सेवा करना ही अपना उचित काम होगा ॥

पिछली गाथा में यह अर्थ बताया गया कि भगवान को अर्पण किये जानेवाले द्रव्य के तारतम्य की परीक्षा करने की आवश्यकता नहीं है; अब यह अर्थ बताया जा रहा है कि उस विषय में किसी भी मानव को, यह चिंता कर कि मैं भगवान की सेवा कर सकूंगा कि नहीं, पीछे हटने की भी आवश्यकता नहीं है। गाथा के उपक्रम मे भगवान के जो दो विशेषण दिये गये हैं, ये दोनों उनके परत्व के द्योतक होते हैं। तथाच यह विचार हो सकता है कि तुलसीमाल्यालङ्कृत और समस्तवेदप्रतिपाद्य महामहिमवाले भगवान की अनुरूप सेवा कौनसी होगी? और अत्यल्प में उनकी कौन-सी सेवा कर सकूंगा? ऐसे विचारों में नहीं पड़ते हुए, कोई भी मानव भगवान की सर्वदेश सर्वकाल सर्वावस्थोचित सर्वविध सेवा करने में लग सकता है और ऐसा करना आवश्यक भी होता है। जैसे लक्ष्मण जी ने प्रार्थना की—भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥" (हे प्रभो! आप सीतादेवी के साथ पर्वतसानुओं में विहार कीजिए; मै आपके सोने और जागने के सभी अवसरों में सर्वविध सेवा करूंगा।) लक्ष्मणजी की भाति सभी मानव भगवान की ऐसी नित्य सेवा कर सकते हैं ॥ .... (२)

(गाथा.) ईडु मेडुप्पुमि लीशन् * माडुविडा देन्मनने *
पाडु मेन्ना ववन्पाडल् * आडु मेनङ्ग मणङ्गे ॥ ३ ॥

केषाश्चिदुपेक्षणम् केषाश्चिदपेक्षणमिति पक्षपातविरहिते सर्वेश्वरे मदीयं हृदयं न कदाऽपि विरक्तिं विन्दति; मदीया जिह्वा तु तदीयानि यशांसि गायति। मदीयं वपुस्तु दैवाविष्टवत्परिनृत्यति ॥

भगवतः स्वाराधत्वानुसन्धानेन भृशं प्रहृष्टो मुनिवरः स्वकीयस्य करणत्रयस्य च भगवदेकप्रवणतां ब्रूते गाथयाऽनया। पक्षपातविरहितत्वेन विशेष्यतेऽत्र भगवान्। * समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः। ये भजन्ति तु मां भक्त्या मयि ते तेषु चाप्यहम् ॥ * इति भगवान् स्वयं गायति। आश्रयणीयत्वे सम इति भगवद्रामानुजभाष्यमिहावधेयम्। * देवानां दानवानां च सामान्यमधिदैवतम् * इति भक्तप्रवराश्च स्तुवन्ति। एतादृशमेव पक्षपातविरहितत्वमत्राभिहितं बोध्यम्। सर्वचेतनसाधारण संबन्धशालिनो भगवत एकस्मिन्नादरणम् अपरस्मिन्नवधीरणं च असंभवि खलु। "अनालोचितगुणागुणाशेषलोकशरण्य" इति हि स्तूयते भगवान् ॥ (३)

—* तीसरी गाथा–ईडुमेडुप्पुमिलीशन् *—

किसीकी उपेक्षा करना, और दूसरे किसीकी अपेक्षा करना, ऐसे पक्षपात से विरहित, सर्वेश्वर भगवान के समीप से मेरा मन कभी हटता नहीं; मेरी जीभ उनका यशोगान करती है, और मेरा शरीर तो दैवाविष्ट की तरह नाच रहा है ॥

भगवान की स्वाराधता नामक गुण के अनुसन्धान से अत्यन्त प्रहृष्ट आल्वार इस गाथा में यह कहते हैं कि "मेरे तीनों करण भगवान में ही सक्त हैं।" इसमें भगवान पक्षपात रहित गाये गये हैं। यह उनका एक महान गुण है, जो शास्त्रों में तत्र तत्र विशेषत उपवर्णित है। गीताजी में स्वयं भगवान ने भी गाया—"समोऽहं सर्वभूतेषु न मे द्वेष्योऽस्ति न प्रियः।" (मैं पक्षपात रहित हूं, मेरे कोई शत्रु नहीं, और न प्रिय ही है।)" यहां पर भाष्य लिखते हुए श्री रामानुजस्वामीजी बताते हैं कि भगवान आश्रयण करने के विषय में सर्वसम हैं, अर्थात् कोई भी मानव उनका आश्रयण कर सकता है। भक्तलोग भी उनकी ऐसी ही प्रशंसा करते हैं—"देवानां दानवानां च सामान्यमधिदैवतम्।" (अर्थात् भगवान देव व दानवों के समान देव हैं।) प्रकृत गाथा में यही पक्षपातरहितता बतायी जा रही है। यह तो सर्वथा उचित ही है कि देवदानव मानवादि समस्त चेतनों के साथ एक प्रकार का संबंध रखनेवाले भगवान उनमें पक्षपात के बिना सम रह जायें। "अनालोचित गुणागुणाशेषलोकशरण्य" इत्यादि से भी उनकी स्तुति की जाती है। किसी के गुण दोषों की समालोचना नहीं करते हुए, एक समान सबके शरण्य होते हैं, भगवान॥ ... ... (३)

(गाथा) अणङ्गेन वाड्ड मेनङ्गम् * वणङ्गि वळिपड्ड मीशन् *
पिणङ्गि अमरर् पिदत्तुम् * गुणम् केल्ल कोव्हैयिनाने॥ ४॥

**दैवाविष्टनत्परिनृत्यता मम वपुषा परिचर्यमाणस्सर्वेश्वरः कीदृश इति चेत्, श्रीवैकुण्ठनिकेतनैर्नित्यमुक्तैरपि मिथो विवादकोलाहलविजृम्भणेनानुभूयमानगुणगणः॥**

भगवतो गुणेषु 'अयमुत्तम, अयं मध्यम, अयमधम' इति तारतम्यपरिकल्पना सर्वथाऽपि दुश्शकेति रस्य रहस्यम्। परत्ववर्गे सौलभ्यवर्गे च सन्ति भूयांसो गुणाः। एकैकोऽपि गुणो रसिकैर्भक्तप्रवरैरनुभूयमान 'अयमसमाभ्यधिक, असावुत्तमोत्तम' इत्येव वक्तव्यस्सन् उत्तुङ्गकस्यानिविष्ट एव स्यात्। * सोऽश्नुते सर्वान् कामान् सह। ब्रह्मणा विपश्चितेति * इत्युपनिषदाम्नासीत्। अत्र कामशब्दार्थो भगवद्गुणा इति भगवतो भाष्यकाराः। तथा नाम भगवद्गुणानुभवनिरता नित्यमुक्ता स्सर्वानपि गुणाननुभुञ्जानास्सन्तो रासिक्यभूम्ना एकैकमपि गुणं निर्दिश्य अयमेवोत्कृष्ट इति वदन्त, तथा नाम वदत इतरान् सूरीनधिक्षिपन्तश्च विवादकेलिमुपबृंहयन्ति। एवं तत्र सततं सर्वत्र प्रवर्तत इति कथ्यतेऽत्र गाथायाम्। एवं च सर्वेऽपि गुणा अविशेषेण श्लाघ्या एवेति सिध्यति। एतादृशे अनन्तगुणसागरे भगवति मम वपुर्विक्लृप्तं सत् अशेषदास्यैकसमुत्सुकं विराजत इत्युक्तं भवति॥ (३)

—* चौथी गाथा—अणङ्गेन वाड्ढमेनङ्गम् *—

**दैवाविष्ट की भांति नाचनेवाले मेरे शरीर से ससेव्यमान भगवान, श्रीवैकुंठनिवासी नित्यसूरियों से परस्पर विवाद-कोलाहल पूर्वक संस्तूयमान कल्याणगुणगणविभूषित होते हैं॥**

भगवान के परत्वसूचक तथा सौलभ्यसूचक कल्याणगुण अनत होते हैं; इनमें से एकैक का भी वैभव अपार होता है। अत: इनमें किसी एक गुण को उत्तम कहना, और दूसरे किसीको मध्यम और तीसरे को अधम कहना सर्वथा अशक्य व अनुचित है। परंतु, "सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिता" (मुक्त पुरुष परब्रह्म के साथ उनके काम—माने कल्याणगुणों—का भी अनुभव करता है) इत्याद्युपनिषद् के अनुसार, जब मुक्त व नित्य लोग उन गुणों का अनुसंधान करने लगते हैं, तब एकैक गुण भी उन्हें सर्वोत्कृष्ट ही मालूम पड़ता है। अब जब चार भक्त लोग, एकैक एकैक गुण के क्रम से, चार गुणों का अनुसंधान करने बैठते हैं, तब एकैक के मुख से भी यही शब्द निकलेगा कि, "अमुक गुण ही सबसे श्रेष्ठ है।" फलत उनके बीच में इस विषय पर बड़ा वादविवाद ही उठ खड़ा हो जायगा। तथा च आळ्वार का कहना है कि परमपद में सर्वदा इस गुणविषयक वादविवाद का कोलाहल ही मचा रहा है। कहने का तात्पर्य यह कि भगवान के सभी गुण एकदम श्रेष्ठ व परमभोग्य होते हैं। ऐसे अनत शुभ गुण सागर भगवान के चिंतन से आळ्वार के श्रीविग्रह हालमें विकृत होकर, उनकी सर्वविध सेवा करना चाह रहा है॥.... ... .. .... .... (४)

(गाथा.) कोळ्हैं कोळामे यिलादान् * एळ्ळु लिराग मिलादान् *
निळ्हैं विळ्ळामे विरुम्बि * उळ्कलन्दा र्कोरमुदे ॥ ५ ॥

'अमी अल्पप्रयोजनलाभेन अपसरन्ति वा? मया सह नित्यवासमेव परमप्रयोजनं मन्यते वा?' इति परीक्ष्य नित्ययोगसमुत्सुकानां परमभक्तानाम् अमृतवत्परमभोग्यभूतो भगवान्, कतिपुचिद्गुणदर्शनेन स्वीकरणम्, कतिपयेषु दोषदर्शनेन दूरीकरणं चाप्यजानन् रागद्वेषविदूरगश्च विराजते ॥

अनन्यार्हशेषत्वम् अनन्यशरणत्वम् अनन्यभोग्यत्व चेत्याकारत्रयेण संभृतसौरभा परमैकान्तिनो विरलास्सन्ति; एतत्प्रतिभटाकारविशिष्टा अपशदास्तु भूयांसस्सन्ति, सर्वेऽप्यमी सम्मिलितास्सन्तो भगवत्सन्निधमुपसर्पेयु, भगवांस्तु तेषातेषा चित्तवृत्तिपरीक्षणे परमचतुर। अत एव तांस्तान् सम्यगेव परीक्ष्य सर्वथा स्वात्मन्येव निरतत्वेन गृह्यमाणाना परमभोग्यो भवन् तद्विश्लेष क्षणमात्रमप्यसहमानस्सतत तत्संश्लिष्ट एव भवति। इतरांस्तु कापुरुषान् तत्तद्बुद्धिगोचरीभूतक्षुद्रवस्तुप्रदानेन अपसारयति। नैतद् भगवतोऽवद्यम्, स तावत् प्रकृत्या पक्षपातविरहित एव . इत्युक्त भवति॥ .... .. (५)

—* पाचवी गाथा—कोळ्गं कोळामेंयिलादान् *—

"ये लोग, क्या मेरे पास से कोई अल्प फल लेकर छूट जायंगे? अथवा क्या मेरे पास ही नित्यनिवास करना चाहते हैं?" ऐसी परीक्षा कर, अपने साथ ही रहना चाहनेवाले परमभक्तों को अमृत के समान अति भोग्य रहनेवाले भगवान, गुण देखकर किसीका स्वीकार और दोष देखकर किसीका परित्याग करने के पक्षपात से विरहित एवं राग द्वेप शून्य होकर विराजमान हैं॥

अनन्यार्हशेषत्व, अनन्यशरणत्व और अनन्यभोग्यत्व (माने भगवान का ही शेष रहना, उन्हींको उपाय मानना और उन्हीका अनुभव करना चाहना) रूप आकारत्रय से विशिष्ट परमैकान्ती महात्मा लोग इस ससार में बहुत कम मिलते हैं। इनके विरुद्ध अन्य जन तो बहुत ही मिलते हैं। परतु कदाचित ये सभी लोग मिलकर भगवान के पास जाकर उनकी स्तुति पूजा इत्यादि करते हैं। भगवान तो अपने पास आनेवालों की सची भावना के परीक्षण करने में बडे चतुर हैं। अत ठीक परीक्षा करने के बाद उसमें पूर्णरूप से समुत्तीर्ण परमभक्तों को वे अपनाकर स्वय भी उनके क्षणमात्रवियोग का भी सहन करने में अशक्त होकर, सर्वदा उनसे मिले ही रहते हैं, और दूसरे क्षुद्र मानवों को उन उनकी अपेक्षित अल्पवस्तु देकर हटा देते हैं। यह हुआ भगवान का विलक्षण स्वभाव। परतु इसीसे उनको पक्षपाती कहना अनुचित है। क्यों कि चेतन के अपेक्षित पुरुषार्थ देना कभी पक्षपात नहीं होगा ॥ (५)

(गाथा) अमुद ममरर्ह ट्कीन्द * निमिर्शुड राळिनेडुमाल् *
अमुदिलु माच निनियन् * निमिर्तिरै नीळ्कडलाने ॥ ६ ॥

**उदधिमथनेन देवानामम‍ृतप्रदाता जाज्वल्यमानहेतिराजविलसत्पाणिः निरवधिकवैभवनिधिः उत्तरङ्गविपुलजलधिशायी भगवान् सत्यमम‍ृतादप्यत्यन्तभोग्यः ॥**

गाथायामस्याम् **उदधिमथनेन देवानामम‍ृतप्रदातेति** विशेषण जीवनाडीभूतम्। स्वत परमभोग्य भगवन्त प्राप्तवन्तोऽपि त्रिदिवसदो हन्त! तदीयाया भोग्यताया मनासका केवल क्षोदिष्ठ फलमुपलभ्य कृतकृत्या अभूवन्, दिव्यायुधलसत्पाणि क्षीरसागरशायी च स भगवान् अम‍ृतादपि परमभोग्यमूर्ति खलु, तदेकप्रावण्येन क्षुद्रफलनिस्पृहा भवितुमर्हन्तोऽप्यमरास्ते अहह! अल्पप्रयोजनकाङ्क्षिणो बभूवन्निति स्वकीय निर्वेदभर प्रकाशितवान् भवति मुनिवरो गाथयाऽनया। यद्यपि देवानां क्षेपो गाथाया व्यक्ततरो न दृश्यते, तथाऽपि गाथा-सनिवेशस्तद्गमक एवेति गाढदर्शिभिराचार्यवर्यै स्वचारितम्। देवाना क्षेप इव देवदेवस्य भगवत प्रशसाऽपि विवक्षितैवात्र, "भगवन्! न वय भवन्त कामयामहे, लवणरसमेव लिप्सामहे" इत्यभिप्राय क्षुद्रफलकामना प्रकाशयद्भ्य तत् क्षुद्रफलमपि प्रदायोपकरोति खलु भगवानिति प्रशसाऽपि हि गम्यते ॥ (६)

—* छठी गाथा—अमुदममरर्गट्कीन्द *—

**समुद्र को मथकर देवों को अमृत देनेवाले, जाज्वल्यमान चक्र धरनेवाले, सीमातीत वैभव-वाले और उछलनेवाली लहरों से परिवृत सागर मे शयन करनेवाले भगवान, सत्य ही उस सागरमे से समुत्पन्न अमृत से भी भोग्यतर हैं ॥**

इस गाथा में प्रयुक्त भगवान के विशेषणों मे प्रधानभूत विशेषण यही कि, [समुद्र को मथकर, देवों को अमृत देनेवाले]। देवों ने स्वय परमभोग्य भगवान को प्राप्त करते हुए भी, उनकी वह भोग्यता समझने में अशक्त होकर, उनकी उपेक्षा करते हुए अत्यल्प फल पाकर निवृत्त हो गये। दिव्यायुधधारी क्षीरसागरशायी भगवान तो अमृत से भी अधिक भोग्य दिव्य मगलविग्रहवाले हैं, उनके दर्शन करने पर

देवों को उन्हींमें चित्त लगाकर अमृत से विमुख होना चाहिए था। परंतु, हाय! अल्प प्रयोजन माँगते हुए वे लोग भगवान से विमुख हो गये। प्रकृत गाथा मे आळ्वार ऐसा अपना निर्वेद बता रहे हैं। यद्यपि मूल गाथा में इस प्रकार देवों की स्पष्ट निंदा नहीं दीखती है; तथापि सूक्ष्म विवेचक हमारे आचार्यों का यह अभिप्राय है कि गाथा के शब्दों पर पूर्ण ध्यान देने से उनका यही तात्पर्य प्रतीत होता है। इतना ही नहीं। वरन् भगवान की यह अद्भुत प्रशसा भी यहां पर सूचित की जाती है—यों स्पष्ट कहते हुए, कि, "हे भगवन्! हम आपको पाना नहीं चाहते; समुद्र का लवण-रस ही हमारे लिए पर्याप्त है," अतिक्षुद्र फल पाने की अपनी इच्छा प्रकट करनेवाले देवों को भी, भगवान उनके अपेक्षित फल देकर उनपर अनुग्रह करनेवाले परमोदार हैं॥ .... .... .... .... (६)

(गाथा.) नीळ्  कडल्शू  ळिलङ्गैकोन् * तोळ्हळ् तलै तुणिशेय्दान् *
ताळ्हळ् तलैयिल वणङ्गि * नाळ्कडलै कळिमिने ॥ ७ ॥

विपुलजलधिपरिवृतलङ्कापुरीनाथस्य रावणस्य भुजवनं शिरांसि च विलूनवतो भगवतः पादौ शिरसा प्रणम्य द्राघीयांसं जीवितकालं क्षिपत भो जनाः! ॥

पूर्वगाथोक्त परमभोग्यतया सह अप्रमेयशक्तिविशेषं च बिभ्रतो रघुनन्दनस्य भगवतो गुणानुभव एव कालक्षेपविषयो भवितुमर्हतीति गाथयाऽनयोपदिशति मुनिवर.। 'विपुलजलधिपरिवेष्टिताया लङ्कापुर्याः खल्वहमधीश्वरोऽस्मि' इत्यवलेपभरेण स्वात्मना सह प्रस्पर्धितुमुज्जृम्भितं दशानन मेकेन बाणेन एकपदे निहन्तुं प्रभविष्णुरपि दाशरथि भगवान् प्रथमतो भुजवनानां लवनेन अथ शिरसां निपातनेन च लीलारसमुपभुज्य पश्चाद्विनाशितवान्। यदा दशाननं प्रत्युपदेशान दिदेश भगवती जानकी, तदा प्राह—* मित्रमौपयिकं कर्तुं रामस्थानं परीप्सता। वधं चानिच्छता घोर त्वयाऽसौ पुरुषर्षभः॥ * इति। अत्र * घोरं वधमनिच्छता त्वयेति कथनेन मम भर्ता महातेजास्त्वा चित्रवधं हि प्रापयिष्यतीति सूचितं भवति। ततश्च चित्रवधोऽस्य देव्यभिमत इति जानन् जानकीजानिः वालिनमिव तमपि क्षणमात्रे अनिघ्नन् एकस्मिन्दिने भुजानां लवनम् अपरस्मिन्दिने शिरसा लवन च कुर्वन् स्वकीयं चित्रवधवैदग्ध्यं दर्शयामासेव। अत एव मुनिवरोऽत्र रावण निहत्येत्यनुक्त्वा भुजवनलवनं शिरसां लवनं च निर्दिदेशेति बोध्यम्॥ आश्रितपक्षपातिनो विरोधिनिरसनशीलस्य * बहवो नृप! कल्याणगुणाः पुत्रस्य सन्ति ते * धातूनामिव शैलेन्द्रो गुणानामाकरो महान् * इति प्रशस्यमानान् गुणगणाननुभूय कालं क्षिपतेति सत्यं साधीयानयमुपदेशः॥ .... .... (७)

—* सातवी गाथा—नीळ् कडळ् शूळिलङ्गैक्कोन् *—

विशाल सागर से परिवृत लंकापुरी के स्वामी रावण के सभी बाहुओं तथा सिरों के काटनेवाले भगवान के श्रीपादों का, अपने सिर से प्रणाम कर, सुदीर्घ अपने जीवित समय का पार कर लीजिए।

इस गाथा में आळ्वार हमें यह उपदेश दे रहे हैं कि पूर्वोक्त अतिमात्र भोग्यता से एवं अप्रमेय शक्तिविशेष से विभूषित श्रीरामचंद्र भगवान के शुभगुणों का अनुभव करना ही जीवन-काल बिताने का श्रेष्ठ मार्ग है। रावण तो विशाल सागर परिवृत लंकापुरी का राजा होने के गर्व से मस्त होकर भगवान से ही स्पर्धा करने लगा। ऐसे दुष्ट का, यद्यपि भगवान एक ही बाण से मार सकते थे; फिर भी उन्होंने ऐसा नहीं किया; किंतु पहले उसके बीसों भुजाओं को काट कर, पीछे एकैक करके दसों सिर काटते हुए कुछ लीलारस का अनुभव कर, बाद में उसका संहार किया। सुंदरकांड में रावण को हितोपदेश करनेवाली सीतादेवी ने कहा था कि "मित्रमौपयिकं कर्तुं रामं स्थानं परीप्सता। वधं चानिच्छता घोरं त्वयाऽसौ पुरुषर्षभ. ॥" (यदि तुम घोर वध पाना नहीं चाहते, और श्रेष्ठ स्थान पाना चाहते हो, तो मेरे प्रभु की शरण में जा।) यहां पर, "घोर वध" कहनेवाली सीताजी का यह अभिप्राय था—"मेरे प्रभु तुझे अनायास-मरण पाने नहीं देंगे; अपितु तेरा भयकर वध कर डालेंगे।" शायद हनुमान जी से यह संवाद सुनकर श्री रामचंद्रजी ने यह निश्चय किया कि सीतादेवी रावण का चित्रवध ही करना चाहती है। अतः उन्होंने वाली की भांति एक बाण से सहसा उसका संहार न करते हुए पहले एक दिन उसके बाहु काट कर, दूसरे दिन सिर काट कर, उसका घोर वध किया। इस अर्थ की सूचना करने के लिए ही आळ्वार इस गाथा में 'रावण-संहर्ता' कहने के बदले में इतने लंबे शब्द का प्रयोग कर रहे हैं कि, "रावण के बाहुओं और सिरों काटनेवाले।" तथा च प्रकृत गाथा का यह तात्पर्य निकला कि, इस प्रकार आश्रित पक्षपाती और उनके विरोधियों का निरसन करने में समर्थ श्री रामचंद्र भगवान के उन कल्याणगुणों का चिंतन करते अपना समय बिताना मानव मात्र का कर्तव्य होगा, जिनकी प्रशंसा, "बहवो नृप! कल्याण-गुणाः पुत्रस्य सन्ति ते" (हे दशरथ चक्रवर्तिन्! आपके सुपुत्र के कल्याणगुण अनंत हैं), "धातूनामिव शैलेन्द्रो गुणानामाकरो महान्" (जैसे पर्वत गैरिकादि धातुओं का उत्पत्तिस्थान है, इस प्रकार श्री रामचंद्रजी सद्गुणों के उत्पत्तिस्थान होते हैं) इत्यादि प्रकार पुष्कल मात्रा में की गयी है॥ ... (७)

(गाथा) कळिमिन् तोण्डीर्हळ् कळित्तु * तोलुमि नवनै चोल्लुदाल् *
वळिनिन्र वल्विनै माळ्वित्तु * अळिविन्रि आक्कम् तरुमे ॥ ८ ॥

**भो भक्तजनाः! विषयेषु रुचिं त्यजत। त्यक्त्वा पूर्वोक्तं दाशरथिं भगवन्तं सेवध्वम्। सेवन-मात्रे स भगवान् प्राप्यप्रतिबन्धकानि पापानि दुरुद्धराण्यपि समूलमुन्मूल्य अपुनरावृत्तिलक्षण-मैश्वर्य मनुगृह्णीयात्॥**

भगवत्सङ्गस्तावदितरसङ्गपरित्यागपूर्वक एव सन् कार्यकारी भवितुमर्हति। * परमात्मनि यो रक्तो विरक्तोऽपरमात्मनि * इति ह्याहुः। राघवशरणागतिप्रवणो विभीषण * त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः। श्रीरङ्गनाथं भगवन्तं प्रपद्यमानो भगवान् रामानुजार्योऽपि * पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून्। रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च। सर्वधर्मांश्च सत्यज्य सर्वकामांश्च साक्षरान्। लोकविक्रान्त चरणौ शरणं तेऽव्रजं विभो! * इति भविष्यत्पुराणवचनमनुसन्दधान एव प्रपेदे। प्रपत्तिं विदधानो भगवान्

गीताचार्योऽपि * सर्वधर्मान्परित्यज्येति परित्याज्यपरित्यागमेव प्रथमतो विदधे। तमेव इतरसङ्गपरित्यागं मुनिवरोऽत्र प्रथमत आदिशति। गाथायाम् [विषयेषु रुचिं त्यजत; त्यक्त्वा] इति वर्तते। किमेवं कथनमावश्यकम्? "विषयेषु रुचिं त्यक्त्वा" इति वाक्यभेदमन्तरा कथनं हि वरीयः—इति केचिन्मन्येरन्। भगवति सङ्गादपि इतरसङ्गप्रहाणमेव प्रधानतरमिति द्योतन वाक्यभेदफलं ध्येयम्। * सर्वधर्मान्परित्यज्येति चरमश्लोकार्थ इह गाथायामुत्तरार्धेऽवसेयः॥ .... .... .... .... (८)

—* आठवीं गाथा—कळिमिन् तोण्डीर्हळ् *—

**हे भक्तजनो! आप क्षुद्र विषयांतर संग छोड़ दीजिए; वह छोड़कर पूर्वोक्त श्रीरामचंद्र भगवान का सेवन कीजिए। यों सेवन करने मात्र से वे भगवान जन्मपरंपरा में कमाये हुए आपके अतिप्रबल पापों का समूल विनाशकर, शाश्वत मोक्ष संपद का भी प्रदान करेंगे॥**

शास्त्रों का यह सिद्धांत है कि विषयसंग छोड़ देने के बाद किया जानेवाला भगवदाश्रयण ही फलप्रद होगा। इस विषय में, "परमात्मनि यो रक्तः विरक्तोऽपरमात्मनि" (क्षुद्रविषयों में आसक्तिहीन होकर जो भगवान पर प्रेम करेगा....) इत्यादि प्रमाण हैं। श्रीरामचंद्रजी के श्रीचरणों में शरणागति करनेवाले विभीषण भी, "त्यक्त्वा पुत्रांश्च दारांश्च राघवं शरणं गतः" (मैं अपने पुत्र पत्नी इत्यादि छोड़कर श्रीरामचंद्रजी की शरण में आया हूं) कहते हुए आया। श्रीरंगनाथ भगवान की संनिधि में शरणागति करनेवाले श्री रामानुजस्वामीजी ने भी, (शरणागतिगद्य में) "पितरं मातरं दारान् पुत्रान् बन्धून् सखीन् गुरून्। रत्नानि धनधान्यानि क्षेत्राणि च गृहाणि च। सर्वधर्मांश्च संत्यज्य सर्वकामांश्च साक्षरान्। लोकविक्रान्तचरणौ शरणं तेऽव्रज विभो॥" (हे प्रभो! मैं अपने पिता, माता, पत्नी, पुत्र, दूसरे बांधव, मित्र, (सामान्यज्ञान के उपदेशक) गुरु, रत्न, धनधान्य, खेत, घर, समस्त धर्म, स्वर्गादि समस्त भोग, कैवल्यात्मस्वरूपप्राप्ति इत्यादि सभी वस्तु छोड़कर लोक नापनेवाले आपके श्रीचरणों की शरण में आ गया) इस भविष्यपुराण-वचन का अनुसंधान करते हुए शरणागति की। एवं प्रपत्ति की विधि करनेवाले गीताचार्य ने भी प्रारंभ में "सर्वधर्मान् परित्यज्य" कहते हुए इतरसंग का त्याग करने की आज्ञा दी। अतः हाल में आळ्वार भी पहले इतरसंग परित्याग करने का उपदेश दे रहे हैं। मूलगाथा में, [क्षुद्र विषयांतरसंग छोड़ दीजिए; वह छोड़कर....] इत्यादि वचन कुछ अधिकोक्ति लगेगी। अर्थात् एक ही वाक्य में, "क्षुद्रविषयांतर संग छोड़ कर" यह देना सरल प्रतीत होगा। परंतु यह सरल कथन छोड़कर दूसरा वाक्य लिखने का एक कारण है। वह यह कि इस वाक्य से भगवदाश्रयण की अपेक्षा विषयांतरसंग-परित्याग को ही अधिक महत्त्व दिया गया है। गाथा के उत्तरार्ध में चरमश्लोक के उत्तरार्ध का विवरण किया जा रहा है॥ .... (८)

(गाथा.) तरुम् अव्वरुम् पयनाय * तिरुमहळार् तनिकेळ्वन् *
पॅरुमै पुॅडय पिरानार् * इरुमैविनै कडिवारे॥ ९॥

परमपुरुषार्थं प्रयच्छन् परमः पुमान् लक्ष्मीस्तनाथस्सन् वितरेत्। लक्ष्मीसंबन्धेन समिन्धान-समृद्धिकस्स भगवान् पुण्यपापरूपकर्मद्वयानुग्रहमपि छिन्द्यात्॥

अधस्तनगाथायामुक्त "सेवनमात्रे स भगवान् प्राप्तिप्रतिबन्धकानि सकलान्यपि पापानि प्रणाशयेत्" इति। तदुपरि शङ्का जाता—वयं हि चिरादेव घोरदण्डनार्हपापकारिणस्स्मः; एवंविधानामस्माकं विषये सेवामात्रेण कथं स एवमनुगृह्णीयात्? इति। तत्र समाश्वासनं ददाति गाथा सैषा। न खलु स भगवान् ब्रह्मचारी; कमलागृहमेधी हि सः। सा च * लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः। ममापि च मतं ह्येतन्नान्यथा लक्षणं भवेत्॥ * इत्युपश्लोकिता। * पापानां वा शुभानां वा वधार्हाणां प्लवंगम। कार्यं करुणमार्येण न कश्चिन्नापराध्यति * इति कपीश्वरस्यापि सान्त्वनेन आश्रितजनरक्षणदाक्षिण्यं प्रकाशितवती च। भर्तृवात्सल्येन चेतनविषयक-कारुण्येन च पुष्कलायास्तस्या स्सन्निधानेन नास्माकं फलव्यभिचारः शक्यशङ्क इति सूचितं भवति। [लक्ष्मीसंबन्धेन समिन्धानसमृद्धिकस्स भगवान्] इत्यत्र * श्रद्धयाऽदेवो देवत्वमश्नुते * इति श्रुतिवाक्यम्, * अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा * इति इतिहासरत्नस्थं मारीचवाक्यं चानुसंधेयम्। एतादृशोऽयं भगवान् * तदा विद्वान् पुण्यपापे विधूय * इतिश्रुत्युक्तरीत्या विधूननयोग्यपुण्यपापानुषङ्गविच्छेद-कारी भविता नूनमित्युक्तं भवति॥ .... .... .... .... (९)

## —※ नवमी गाथा—तरुमव्वरुम् पयनाह ※—

**पूर्वोक्त अतिश्रेष्ठ पुरुषार्थ देनेवाले भगवान, लक्ष्मीनाथ होते हुए वह फल देंगे। एवं लक्ष्मी संबंध से उज्वल वैभववाले वे भगवान (हमारे) पुण्य पाप रूप उभयविध कर्मसंबंध भी दूर करेंगे॥**

पिछली गाथा में बताया गया कि भगवान अपना सेवन करनेवाले भक्तों के समस्त पाप भी दूर करेंगे। इस पर यह शंका हुई कि, "अनादिकाल से अत्यधिक मात्रा में नानाविध पाप करनेवाले हम पर, भगवान अपना सेवन करने मात्र से कैसे अनुग्रह कर सकेंगे?" प्रकृत गाथा इसका समाधान करती है। तथाहि—हम तो एकाकी नारायण का नहीं, किंतु श्रीमन्नारायण का ही सेवन करते हैं। श्री, अथवा लक्ष्मीजी का यह लक्षण शास्त्रोक्त है—"लक्ष्मीः पुरुषकारत्वे निर्दिष्टा परमर्षिभिः। ममापि च मतं ह्येतत्....॥ अर्थात् महर्षि लोग लक्ष्मीजी को पुरुषकार बताते हैं; मैं (भगवान) भी इस विषय में सहमत हूं।" श्री रामायण की यह कथा प्रसिद्ध है कि रावणवध के बाद सीतादेवी से यह शुभ समाचार कहने के लिए अशोकवनिका में पधार कर हनुमानजी ने जब सीताजी से वहां की क्रूर राक्षसियों का संहार करने की अनुमति मांगी, तब सीताजी ने "पापानां वा शुभानां वा वधार्हाणां प्लवङ्गम। कार्यं करुणमार्येण न कश्चिन्नापराध्यति॥" (अर्थात् इस संसार में अपराध न करनेवाला कौन है? कोई भी नहीं। विचार करने पर सभी को दोषी बताना पड़ता है। अतः गुणदोषों की चिंता छोड़कर सबके प्रति दयाभाव करना ही सत्पुरुष का उचित कार्य है।) कहती हुई उन पापिनी राक्षसियों को भी उनसे बचाया। ऐसी लक्ष्मीजी में भर्तृवात्सल्य एवं चेतनों पर दयाभाव, ये दोनों गुण अत्यधिक मात्रा में विराजते हैं। अतः इनके द्वारा भगवान का आश्रयण करने पर हमारी इष्टसिद्धि अवश्य होगी। उत्तरार्ध में [**लक्ष्मीसंबंध से उज्वलवैभव-वाले वे भगवान्**] कहने का यह तात्पर्य है कि भगवान का वैभव लक्ष्मीसंबंध के अधीन है। श्रुति कहती

है कि "श्रद्धयाऽदेवो देवत्वमश्नुते," अर्थात् पहले अदेव होते हुए भगवान लक्ष्मीसंबंध से देव बन गये। (श्रद्धा—लक्ष्मी का वैदिक नाम है।) वाल्मीकि रामायण में मारीच का यह वचन भी जानने योग्य है—"अप्रमेयं हि तत्तेजो यस्य सा जनकात्मजा।" अर्थात् सीतादेवी जिसकी पत्नी हैं, वह अप्रमेय तेजोरूपी है। तथा च ऐसे माहात्म्यवाले भगवान अवश्य ही अपने आश्रित को मोक्षप्रतिबंधक सकलविध पुण्यपापरूप कर्मबंधन से मुक्त कर सकते हैं॥ .... .... .... ... (९)

(गाथा.) कडिवार् तीय विनैहळ् * नोडियारु मळवैकण् *
कोडिया अडुपुळ्ळुयर्त्त- * वडिवार् माधवनारे ॥ १० ॥

शत्रुनिरसनपटीयांसं पतगराजं ध्वजपदे निदधानो विलक्षणदिव्यमङ्गलविग्रहशाली श्रियःपतिः क्रूरतमानि पापानि क्षणमात्रे भस्मसात्कर्तुं प्रभवति ॥

लक्ष्मीपुरुषकारबलेन भगवता भक्तजनेषु क्रियमाणोऽनुग्रहः कियत्या कालकलया लब्धावकाशस्स्यादित्याकाङ्क्षायाम् अवतरति गाथेयम्। त्रुटिकामात्र इत्युच्यत इह। शत्रुविनाशनदक्षिणस्य पक्षिराजस्य वाहनतल्लजस्य * उपस्थितं तेन पुरो गरुत्मता त्वदंघ्रिसंमर्दकिणाङ्कशोभिना * इत्युक्तरीत्या सदा सन्निहितत्वेन * अवाहनपरिष्क्रियं पतगराजमारोहतः करिप्रवरबृंहिते भगवतस्त्वरायै नमः * इत्युक्तियोग्यतया त्वरितमेव खलु सर्वकार्यनिर्वर्तनम्। [विलक्षणदिव्यमङ्गलविग्रहशाली] इत्येतद्विशेषणम तदीयदिव्यमङ्गलविग्रहदर्शनमात्रतोऽपि भक्तजनदुरितराशिविनाशो भवितेति सूचयति। [क्रूरतमानि पापानीत्यादि।] *यद् ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे। एवं सदा सकलजन्मसु सापराधं क्षाम्यस्यहो तदभिसन्धिविराममात्रात्॥ * इत्येषा श्रीकूरेशमिश्र श्रीसूक्तिरिहानुसन्धेया॥ .... (१०)

—* दसवी गाथा—कडिवार तीय विनैहळ्* —

शत्रुविध्वंसक गरुड जी को अपना ध्वज बनानेवाले, अतिविलक्षण दिव्यमंगलविग्रहवाले लक्ष्मीपति भगवान, एक क्षणमात्र में अतिक्रूरपापों का विनाश कर सकते हैं॥

इस गाथा में यों कहा जाता है कि लक्ष्मीजी के पुरुषकार बल से भक्तों पर कृपा करनेवाले भगवान को उनके पाप मिटाने के लिए एक क्षणमात्र से अधिक समय नहीं लगेगा। यहां पर भगवान को गरुडध्वज कहने का यह भाव है—गरुडजी शत्रुओं का विनाश करने में समर्थ हैं; "उपस्थितं तेन पुरो गरुत्मता" इत्यादि स्तोत्ररत्न के अनुसार, सदा भगवान के सामने, आज्ञाप्रतीक्षी होकर खड़े रहते हैं और आवश्यकता होने पर (जैसे कि गजेंद्र की रक्षा करने के प्रसंग में) अति शीघ्र कार्य करनेवाले हैं। अतः इनके सान्निध्य से भक्तों के दुःख अवश्य ही दूर होंगे। भगवान के दिव्यमंगलविग्रह का कीर्तन करने का यह भाव है कि उसके दर्शनमात्र से भी भक्तों का ताप दूर हो जायगा। यथा अयोध्यावासी जनता ने कहा—"दृष्ट एव हि नश्शोक मपनेष्यति राघवः। तमस्सर्वस्य लोकस्य समुपस्थित भास्करः॥ (रा. अयो. (८२-९) अर्थात् उदय होते ही समस्त लोकों का अंधकार मिटानेवाले सूर्य की भांति श्रीरामचद्र भी अपने

दर्शन मात्र से हमारा शोक दूर करेंगे। [अतिक्रूर पाप] कहने का यह तात्पर्य है कि यह चेतन एक पलभर में इतने पाप कमाता है, जिनका अनेक ब्रह्मकल्पों तक अनुभव करने पर भी नाश न होगा। इतने प्रबल होते हैं इसके पाप ॥ ... (१०)

(गाथा) माधवन्पाल् शठकोपन् * तीदवमिल्लि मुरैच *
एदमि लायिर त्तिप्पत्तु * ओदवल्लार् पिरवारे ॥ ११ ॥

लक्ष्मीनाथे भगवति भक्तिभाजा श्रीशठकोपमुनिना अखिलहेय प्रत्यनीकस्य तस्य गुणविशेष-मधिकृत्य कीर्तितं निरवद्य सहस्रगीत्यन्तर्गतं दशकमिदमधीयानाः संसृतिचक्रपरिवर्तन-दवीयांसो भवितारः ॥ (इति फलकीर्तनेन समापितमिदं दशकम् ॥)

—* एतद्दशकतात्पर्यसारसंग्राहको द्रमिडोपनिषत्सङ्गतिश्लोक *—

दास्येषु देशसमयाङ्ककलापकर्तृद्रव्यादिना न नियमः पुरुषोत्तमस्य।
भक्तिः परं बहुमता तत एव सोऽयं स्वाराध इत्युपदिदेश मुनिस्तु षष्ठे ॥

—* ग्यारहवी गाथा—माधवन्पाल् शठकोपन् *—

लक्ष्मीनाथ भगवान के विषय में भक्ति करनेवाले श्रीशठकोपसूरी के, अखिलहेयप्रत्यनीक उनके गुणविशेष को लक्ष्यकर गाये हुए, दोषरहित सहस्रगीति के अन्तर्गत इस दशक का अध्ययन करनेवाले फिर इस संसार में जन्म लेने का कष्ट नहीं पायगे ॥ (इस फलश्रुति के साथ यह दशक समाप्त किया गया ॥ .. (११)

पहले शतक का छठा दशक समाप्त हुआ ॥
आळ्वार तिरुवडिगळे शरणम् ॥

श्रीमते रामानुजाय नमः । श्रीमद्वरवरमुनये नमः ॥

## ॥ सहस्रगीत्याम् प्रथमशतके - सप्तमं दशकम् - पिरवित्तुयरर ॥

(सं) अवतारिका—अधस्तनदशके भगवतः स्वाराधत्वाभिधानो गुणविशेषोऽनुभूतो मुनिवरेण। अनायासत आराधयितुं शक्यो भवतु काम स, आराधनस्य सुकरत्वेऽपि आश्रयणस्य भोग्यताविरहे न खलु तृप्तिर्भवेत्। लोके बहवः पुमांसः अल्पसन्तुष्टा सुकराराधना दृश्यन्ते ननु, तेषामाश्रयणं न खल्वस्माकं भोगाय कल्पते। स्वाराधत्व भोग्याश्रयणत्वयोः सामानाधिकरण्यं जगति दुर्घटमेव प्रायः। भगवति तु नैवम्, न केवलं स्वाराधत्वमस्य, परमभोग्यसमाश्रयणत्वं चास्य समधिकमसाधारणं चेति दशकेऽस्मिन् प्रतिपाद्यते। "भगवतस्समाश्रयणं न केवलं मस्मादृशामेव स्वादिष्ठम्, भगवतोऽपि स्वादिष्ठम्" इति आचार्याः अतिशयोक्ति-मालम्ब्य मधुरतरमाचक्षते। एतेन 'भगवान् स्वयं स्वात्मानमाश्रयति किम्?' इति केचिदनुयोक्तुमुपुञ्जीरन्।

मैवम्। 'भगवतो वैलक्षण्यं स्वस्यापि स्पृहणीयमिव भासते' इति तावद्विवक्षितमिह। अस्यार्थस्य संवादरूपतया श्रीपराशर भट्टार्यस्य दिव्यतम श्लोकद्वयमिह प्रदर्शयामस्सह विवरणेन।

श्रीरङ्गराजस्तवपूर्वशतके—(७५) * अग्रे तार्क्ष्येण पश्चादहिपतिशयनेनात्मना पार्श्वयोश्च श्रीभूमिभ्यामतृप्त्या नयनचुळकनैस्सेव्यमानामृतौघम्....रङ्गराजं भजामः * इति। अयं भावः। उत्सवमूर्तिर्भगवान् रङ्गनाथः स्वदिव्यमङ्गलविग्रह वैलक्षण्य स्वयमनुबुभूषुः स्वयमेव गरुत्मद्वपुस्सन् पुरतोऽवस्थाय मुखभागमुपमागनवरत मवलोक्यापि न तृप्यति। पुरोभागादपि पश्चाद्भागस्यातिसुन्दरत्वात् तदवलोकनहेवाकेन स्वयमेव मूलमूर्तिस्सन् भुजगपतिशयनशायी भूत्वा सततमवलोक्यापि न तृप्यति। अथ पार्श्वभागयोरपि परमशोभामनुभोक्तुकामस्स्वयमेव श्रीदेवीभूदेवीरूपे आस्थाय दर्शंदर्शं न तृप्यति इति। भगवद्दिव्यमङ्गलविग्रहस्य सर्वेऽपि भागा भृशं रमणीयाः स्पृहणीयाश्चेति कथितं भवति। अथ चोत्तरशतके—(७७) * मनुकुलमहीपालव्यानम्रमौलिपरम्परामणिमकरिकारोचिर्नीराजितांघ्रिसरोरुहः। स्वयमथ विभो! स्वेन श्रीरङ्गधामनि मैथिलीरमणवपुषा स्वार्हाण्याराधनान्यसि लम्भितः। * इत्यसौ श्लोकोऽतितरां मधुरः। मनागिदं विवरणमवधेयम्। श्रीरामायणे अयोध्याकाण्डे चक्रवर्तिसंकल्पित यौवराज्याभिषेक पूर्वाङ्गतया अनुष्ठानविशेषाणामुपवर्णनावसरे * सह पत्न्या विशालाक्ष्या नारायणमुपागमत् * इत्युक्तं सर्वे विदन्ति। भगवता रामचन्द्रेणोपासितेयं मूर्तिः का नाम? इति चेत्, इक्ष्वाकुवंश्यैर्महीपालैः पारम्पर्येणाराधिता मूर्तिरिति पौराणिकी प्रथा। रावणवधानन्तरमयोध्यामासाद्य मकुटाभिषेक महोत्सवानुभवावसरे सर्वेभ्योऽपि तत्तदनुरूप पारितोषिक प्रदान प्रकरणे विभीषणाय इयमेव मूर्तिः प्रदत्तेति श्रीरङ्गमाहात्म्यतः, * लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः * इति श्रीरामायण श्लोकतश्चावसीयते। मनुकुलमहीपालै राराधिता मिमां दिव्यमूर्तिं तेषु पार्थिवेष्वन्यतमो भगवान् रामचन्द्रोऽपि स्वयमाराधयामासेति स्फुटमवबुध्यामह इतिहासेन। अथात्र आराध्यः कः? आराधकः कः? इति विमर्शे वस्तुत उभयोरैक्यमेव ह्यप्रतिहतसिद्धिकम्। उदाहृतश्लोके एतदेवोच्यते * स्वयमथ विभो! स्वेन श्रीरङ्गधामनि मैथिलीरमणवपुषा स्वार्हाण्याराधनान्यसि लम्भितः * इति। लोके महाराजा भगवदाराधन स्वयमेव नानुतिष्ठन्ति, परिचारकद्वारैव प्रणयन्तीति सर्वतः पश्यामः; एवं चक्रवर्तितनूजो रामचन्द्रोऽपि देवताराधने कमपि परिचारक मनियुञ्जानः स्वयमेवाराधयामासेत्यतः स्ववैलक्षण्य स्वात्मानमपि हन्त! विवशयतीति वेदितव्यं हि भवति। आराधने इतरे केचन नियुक्ताश्चेद्, ते अश्रद्धया आलस्येन वा स्ववैलक्षण्यार्हमाराधनं नैवानुतिष्ठेयुरिति सीतापति भगवानमन्यतेति हि "स्वयं स्वेनैव स्वार्हाण्याराधनान्यसि लम्भितः" इति परमोदारया वचनव्यक्त्या विशोधयन्ति भट्टपादाः।

श्रीमान् वेङ्कटनाथार्योऽपि पादुकासहस्रे अनयैव दिशा किमपि पद्यरत्नमवातीतरत् —* मनुजत्वतिरोहितेन शक्ये वपुषैकेन विरोधिनां निरासे। अभजद्भरतादिभेदमीशः स्वयमाराधयितुं हि पादुके! त्वाम्॥ * इति। अयं भावः। दुष्कृतां विनाशाय हि भगवानवातरत्। स्वयमेकाकी सन्नवतीर्य कृत्स्नमपि कार्यजात मवलीलया निर्वर्तयितुं निपुणोऽपि भरतादिवर्ष्माण्यपि स्वयमेव बिभ्राणः किमर्थमवातरदिति विमृशन्नाचार्य इदं प्रतिपेदे "स्वयमाराधयितुं हि पादुके! त्वाम्" इति। स्वकीयपादुकाराधने स्वस्यैव कुतूहलमजनि; तदाराधनं यदि स्वयमेव कुर्याद् पण्डितपामरविभागमन्तरेण सर्वेऽपि परिहसेयुरिति मत्वा भरतवर्ष्म बिभर्तिस्मेति प्रोक्तमिह रसिकैः। तथाच भगवदाश्रयणम् अतदर्हस्य तस्यापि स्वाद्यमिति स्थिते भक्तानां किमुत? इमामेव परमभोग्यतामनुभुङ्क्ते मुनिवरोऽस्मिन्दशके। तृतीया गाथा दशकस्यास्य जीवनाडीति वेदितव्यम्॥ .... *

## —* पहले शतक के सातवें दशक की अवतारिका *—

(हिंदी.) पिछले दशक में आळ्वार से भगवान के स्वाराधत्व नामक गुण का अनुभव किया गया। अब परमभोग्यसमाश्रयणत्व (अथवा भोग्यता) नामक गुण का अनुभव किया जायगा। तथाहि—भगवान के स्वाराध होने मात्र से उनका आश्रयण करने की किसीकी प्रवृत्ति नहीं होगी; परंतु यदि यह आश्रयण भोग्य होगा, तो ही उसमें प्रवृत्ति होगी। यह तो लोकानुभव की बात है कि, यद्यपि हमारी अल्प सेवा सकार कर बहुत तृप्ति पानेवाले (अर्थात् स्वाराध) लोग बहुत मिलते हैं; तथापि उनकी सेवा करते हम प्रसन्न नहीं हो सकते (अर्थात् उनकी सेवा करने में हमें आनंद नहीं, वरन् दुःख ही मिलता है)। एवं यदि कदाचित् ऐसी कोई व्यक्ति मिलती हो, जिसकी सेवा करने में हम बडे चाव से उतर सकेंगे, तो ऐसे जन की सेवा बहुत कठिन होती है (अर्थात् वह स्वल्पपूजा से तृप्त न होगा)। अब आळ्वार कहते हैं कि भगवान स्वाराध तो हैं ही; तदुपरांत उनका आश्रयण इतना आनंदप्रद होता है, जो कुछ कहने की बात नहीं। इस प्रकरण में हमारे आचार्य कुछ अतिशयोक्ति से बात करते हुए कहते हैं कि, "यह बात नहीं है कि भगवान का आश्रयण करना हमारे जैसे भक्तों का ही आनंददायक है; किंतु वह स्वयं भगवान को भी मीठा लगता है।" यह सुन कर कोई पूछ उठेगा कि, "क्या भगवान कभी स्वयं अपनी सेवा करने को उतरेंगे?" परंतु यह अनुचित है। पूर्वोक्त आचार्यश्रीसूक्ति का इतना ही भाव है कि भगवान का माधुर्य इतना अधिक है कि वह स्वयं उनको भी अपनी ओर खींच सकता है। कदाचित् आचार्य यह भी रसमय अर्थ बताते हैं कि भगवान स्वयं अपनी सेवा भी करना चाहते हैं। श्रीपराशर भट्टर् स्वामीजी के दो पद्य इस विषय का सुंदर दृष्टांत होते हैं। "अग्रे तार्क्ष्येण पश्चादहिपतिशयनेनात्मना पार्श्वयोश्च श्रीभूमिभ्यामतृप्तया....रङ्गराज भजामः" इसका यह भाव है—श्रीरंगक्षेत्र में (सभी क्षेत्रों की भांति) भगवान की दो मूर्तियां विराजती हैं—अचलमूर्ति और चलमूर्ति या भोगमूर्ति। सामने गरुडजी विराजमान हैं और भोगमूर्ति के दोनों पार्श्व श्रीदेवी और भूदेवी विराजमान हैं। अब भट्टर स्वामीजी का कहना है कि भोगमूर्ति का सौंदर्य इतना आकर्षक है कि स्वयं भगवान को ही उसका अनुभव करने का लालच उत्पन्न हुआ। अतः उन्होंने स्वयं चार रूप लेकर (पूर्वोक्त गरुडजी, अचल शेषशायी मूर्ति और दिव्यमहिषियों के रूप लेकर) चारों ओर से उन भोगमूर्ति के दर्शन कर रहे हैं; परंतु उसमें अभीतक तृप्त न हुए। इस विलक्षण वर्णन का यह परम तात्पर्य है कि भगवान का सौंदर्य सभी दिशाओं में बडा आकर्षक होता है। यह दूसरा पद्य है—"मनुकुल महीपाल.... ...स्वार्हण्याराधनान्यसि लम्भितः॥" यह भाव है—श्रीरामायण मे अयोध्याकांड की कथा है कि जब दशरथ चक्रवर्तीने श्रीरामचंदजी का राज्याभिषेक करने की आज्ञा की, तब पहले दिन श्रीरामचद्रजी को, उपवास, देवताराधन इत्यादि कितने मंगलकार्य करने पडे। उस प्रसंग का वर्णन करते हुए श्रीवाल्मीकि भगवान कहते हैं कि "सह पत्न्या विशालाक्ष्या नारायणमुपागमत्" (अर्थात् श्रीरामचद्रजी ने अपनी पत्नी के साथ नारायण की पूजा की)। पौराणिक महर्षियों का मत है कि उक्त प्रकार श्रीरामचद्र जी से संपूजित देव साक्षात् श्रीरंगनाथ भगवान थे। अर्थात् श्रीरंगनाथ भगवान् इक्ष्वाकुवंश के राजाओं की वंशपरंपरा से पूजित उनके कुलदेव थे। अतः श्रीरामचंदजी भी उनकी

पूजा करते थे। रावणवध के बाद जब वे अयोध्या पधार कर राज्य में अभिषिक्त हुए, और समस्त अतिथि अभ्यागतों को सम्मान करने लगे, तब उन्होंने भक्ताग्रेसर विभीषणजी को उनकी भक्ति के अनुगुणतया, और उनकी प्रार्थना के अनुसार इन श्रीरंगनाथ भगवान का ही प्रदान किया। वाल्मीकि रामायण में भी इसकी सूचना मिलती है—"लब्ध्वा कुलधनं राजा लङ्कां प्रायाद्विभीषणः" (अर्थात् विभीषणजी कुलधन (श्रीरंगनाथ भगवान को) पाकर लङ्का लौट गये)। तथाच यह अर्थ सिद्ध हुआ कि मनुवंशके समस्त राजाओं से पूजित श्रीरंगनाथ भगवान की पूजा श्रीरामचंद्रजी से भी की गयी थी। श्रीरामचंद्रजी तो साक्षात् नारायण भगवान के ही अवतार थे। अर्थात् भगवान ने स्वयं अपनी ही पूजा की। उक्त भट्टर स्वामीजी के पद्य में यही अर्थ बतलाया जा रहा है कि, "हे श्रीरंगनाथ भगवन्! आपने सीतापति श्रीरामचंद्रजी के रूप से अपनी ही स्ववैभवोचित सेवा की।" यह भाव है—हम देख रहे हैं कि राजा महाराजा इत्यादि अमीर लोग आलस्य इत्यादि के परवश होकर नौकर से (किसी पंडितजी से) भगवान की पूजा कराते हैं; न तु स्वयं करते हैं। परंतु चक्रवर्तितनूज श्रीरामचंद्र जी यह प्रथा दूर कर स्वयं अपने करकमलों से ही भगवत्पूजा करते थे। इसका कारण यही था कि वह भगवत्सेवा उनको इतनी मीठी लगती थी, कि वे किसी कारण से उसे दूसरों को देना नहीं चाहते थे। एवं उनका यह भी भय था कि कदाचित् सेवक लोग भगवान का वास्तविक वैभव जानने में अशक्त होकर आलस्य व अश्रद्धा से ठीक ठीक उनकी सेवा नहीं करते होंगे। अतः उन्होंने यह निश्चय किया कि, "यदि इन (श्रीरंगनाथ) भगवन्मूर्ति की अनुरूप सेवा करनी हो, तो सेवारसज्ञ मुझे ही उसमें उतरना चाहिए; पैसे लेकर काम करनेवाले पुजारी के हाथों उसे छोड देना बहुत अनुचित होगा।" तथाच उक्त दो श्लोकों का यह तात्पर्य हुआ कि भगवान के दर्शन, पूजन इत्यादि, स्वयं उनको भी अच्छे लगते हैं।

श्री वेदांतदेशिक स्वामीजी भी पादुकासहस्र में ऐसा ही एक सुंदर अर्थ बताते हैं इस पद्यमें—"मनुजत्वतिरोहितेन शक्ये वपुषैकेन विरोधिनां निरासे। अभजद्भरतादिभेदमीशः स्वयमाराधयितुं हि पादुके त्वाम्॥" श्रीरामायण की कथा है कि रावणादि दुष्टों का विनाश करने के लिए भगवान ने इस धरातल पर अवतार किया। ठीक है। परंतु इस लिए रामलक्ष्मणभरतशत्रुघ्नों के रूपमें चार अवतार लेने की आवश्यकता कौनसी थी? क्या एक ही रूपसे वह काम नहीं बन सकता था? अवश्य ही बन सकता था। फिर भगवान ने क्यों कर चार रूपों का धारण किया? इस प्रश्न का यह अत्यद्भुत प्रत्युत्तर दिया जा रहा है कि श्रीरामपादुका की पूजा करने के लिए ही भरतादि रूपों का अवतार हुआ। अर्थात् श्रीदेशिकस्वामीजी उक्त श्लोक में बताते हैं कि भगवान को अपनी पादुका की पूजा करने की इच्छा हुई; परंतु यह कुछ अशक्य-सी प्रतीत हुई; क्योंकि स्वयं अपनी पादुका की पूजा करनेवाला जन सबकी हँसी का पात्र बनेगा। अतः चतुर भगवान ने भक्त भरतजी के रूप में अवतार लेकर श्रीरामचंद्ररूपी अपना पादुका की पूजा की। तथा च इस प्रकरण का यह तात्पर्यार्थ निकला कि भगवान का सेवन जब उसके अनधिकारी स्वयं भगवान को भी मीठा लगता, तब यह अवश्य ही भक्तलोगों को बहुत बहुत अच्छा लगेगा। अतः यह शंका करना अनवसर है कि क्या भगवदाश्रयण सुखद होगा अथवा दुःखद होगा। क्योंकि

भगवान से संबंधित सभी वस्तु—उनके दर्शन, चेष्टित, रूप, सेवन इत्यादि सभी—परमभक्तों के लिए अतिभोग्य ही होते हैं ; कभी अन्यथा नहीं होंगे । प्रकृत दशक की तीसरी गाथा में इस अर्थका सुंदर वर्णन किया जायगा । यही इस दशक का मुख्यपद्य है ॥ .... .... ..... *

(गाथा.) पिरविचुयरर आनुव्व् निलु * तुरवि च्चुडर् विळक्कम् तलैप्पेय्वार् *
अरवने आळिप्पडै पन्दणने * मरविये यिन्नि मनत्तु वैप्पारे ॥ १ ॥

(प्रथमगाथावतारिका ॥ भगवदाश्रयणस्य परमभोग्यता विवक्षुर्मुनिवरः प्रथमगाथायामस्यां कैवल्यार्थिषु गर्हामाविष्करोति । परमभोग्यवस्तुनोऽनुभवं विहाय क्षुद्रानुभवनिष्णाताः खलु भवन्ति हन्त! कैवल्यार्थिन इति गर्हणं कलयति ॥

**जननमरणजन्यदुःखमात्रनिरासाय आत्मावलोकनात्मके कैवल्योपासने विगाह्य सकलोपाधिविनिर्मुक्तस्वयंप्रकाशजीवात्मसाक्षात्कारप्रेप्सवः कैवल्यार्थिनः परमधार्मिकं हेतिराजालंकृतपाणिं परमपरिशुद्धं च भगवन्तं स्वाभिलषितक्षुद्रफले विस्मृतिगन्धमन्तरेण उपासते हन्त! ॥**

गीतायां "जरामरणमोक्षाय मामाश्रित्य यतन्ति ये" इत्यनेन श्लोकेन प्रतिपादिता अधिकारिणः स्वात्मानुभवमात्रप्रेप्सवः कैवल्यार्थिनः। एते हि केवलं पुनर्जन्म मा भूदिति कामयमाना भगवदनुभवनिस्पृहाश्च। अधस्तात्पञ्चमे दशके सप्तम्यां गाथायामेतेऽधिकारिणो मुनिवरेण संश्लाघिता अभूवन्; अत्र तावदमी विदूष्यन्ते; तदेतदुभयं कथमिव घटेत? इत्याशङ्का मा स्म भूत्। मुनीन्द्रः स्वनिकर्षानुसन्धानेन स्वस्य भगवदुपसर्पणं भगवतस्तस्यावद्यावहं स्यादिति मन्यमानः खलु पञ्चमं दशकं तत् व्यजिज्ञपत्। तदात्वे 'केवला अनुभवावसरे भगवन्तमुपसृत्य तं न दूषयन्ति खलु; ते भृशं श्लाघ्याः' इति धिया तथा नाम तान् श्लाघते स्म। तथा च तत्प्रकरणोचितं तत्प्रशंसनमिति मन्तव्यम्। प्रकृतं तावत् भगवद्भोग्यतानुभवप्रकरणम्। ईदृशीं भोग्यतामननुभवन्तः स्वात्ममात्रभोगे विश्राम्यन्ति हन्त! केवला इति धिया तेषां गर्हणं च स्थाने।

जननमरणजन्यदुःखनिरासकामना यद्यपि परमैकान्तिनामप्यस्ति, तथाऽपि तेषां तादृशदुःखनिरासमात्रकामना नास्ति; भगवदनुभवकैङ्कर्यादिस्पृहाया एव तेष्वपरिमितत्वात्। अतः प्रकृतगर्हा तान् न स्पृशतीति वेदितव्यम्। सकलोपाधिविनिर्मुक्त स्वयंप्रकाशजीवात्म साक्षात्कारः केवल केवलैरुद्दिष्ट फलमिति मूल एव सुस्पष्टमभ्यधायि खलु। -अत्र पूर्वाचार्याणां पिण्डितार्थकथनमित्थम्—"सांसारिकसकलदुःखध्वंसकामनया आत्मोपासनेऽवगाह्य प्रकृतिविनिर्मुक्तात्मस्वरूपानुभवप्रेप्सवः पूर्वार्धतो निर्दिष्टाः" इति।

एवंविधं क्षुद्रफलमपि ते भगवतस्सकाश एव प्रार्थयन्ते; भगवानपि तेभ्यस्तत् प्रददाति स्वकीयया करुणया इत्यभिधीयत उत्तरार्धेन। परमधार्मिकमिति भगवतो विशेषणम् प्रयोजनान्तरपराणामप्युपकारकतारूपमौदार्यातिशयं व्यनक्ति। हेतिराजालंकृतपाणिमिति विशेषणम्—आभरणकोटिप्रविष्टमायुधपरिवृढं श्रीसुदर्शनमवेक्ष्य "भगवन् हेतिराज! जय विजयी भव" इति मङ्गलाशासने प्रयोक्तव्ये सत्यपि कथममी वराकाः केवलाः

क्षुद्रफललाभेन दूरतोऽपसरन्तीति मुनिवरस्य विस्मयं निर्वेदं वा व्यनक्ति । अथ अन्तिमं विशेषणम्—केवलानां भगवति शुद्धिगुणविशिष्टत्वानुसन्धानमेव केवलमस्ति हन्त ! भोग्यताधीस्तु नैव इति मुनिवरस्य हार्दं तापमभिव्यनक्ति । हरेः परमभोग्यताया अस्मरणम्-स्वामिलषिते क्षुद्रफले अविस्मरणं च केवलानामतितरां शोचनीयमिति चरमचरणः स्फुटयति ॥.... .... .... .... .... (१)

—※-पहली गाथा—पिरवित्तुयरर ※—

**(हिंदी अवतारिका)** भगवत्सेवा को परमभोग्य बताना चाहनेवाले आळ्वार, उसकी भूमिकारूप, प्रकृत गाथा में कैवल्यार्थियों की निंदा करते हैं, कि "हाय! केवलनामक ये मूर्ख लोग, परमभोग्य भगवान का अनुभव छोडकर क्षुद्र आत्मानुभव करने में निरत हो रहे हैं ॥"

**जननमरण प्रयुक्त दुःख मात्र को दूर करने के लिए, आत्मावलोकन नामक कैवल्योपासन करते हुए, उससे सकल उपाधियों से विरहित एवं स्वयंप्रकाश जीवात्मा का साक्षात्कार पाना चाहनेवाले कैवल्यार्थी लोग, परमधार्मिक तथा चक्रायुधधारी और परमपरिशुद्ध भगवान की उपासना को, हाय! अपने अपेक्षित क्षुद्रफलकामना को किंचिन्मात्र भी शिथिल बनाये विना ही, किया करते हैं ॥**

भगवद्गीता में "जरामरणमोक्षाय" इत्यादि पद्य में उपवर्णित कितने लोग जननमरणचक्ररूप इस संसार से विरक्त होकर, इससे छूटकर परिशुद्धात्मस्वरूप-दर्शन नामक आत्मानुभवमात्र करना चाहते हैं। अर्थात् पुनर्जन्म का अभावमात्र इनका अपेक्षित पुरुषार्थ है, न तु भगवान का अनुभव। इनकी निंदा प्रकृत गाथा में की जा रही है। पाचवें दशक के सातवीं गाथा में आळ्वार ने ही इनकी प्रशंसा की थी, जो अब निंदा कर रहे हैं। परंतु इसमें कोई विरोध नहीं है। क्योंकि वह प्रकरण ही दूसरा था। तथाहि—उस दशक में आळ्वार भगवान के परत्व के दर्शन कर, और अपनी नीचता का अनुसंधान कर, अपने को भगवत्सेवा करने के अनधिकारी मानते हुए, भगवान से दूर भागना चाहते थे। उस समय उनकी भावना यह थी कि भगवान की सेवा करने के बहाने उनको दूषित करने की प्रवृत्ति की अपेक्षा, उनसे दूर रहना कई गुन श्रेष्ठ है। इस कारण से भगवद्विमुख कैवल्यनिष्ठों की प्रशंसा उधर की गई। परंतु भगवान के सौशील्यादिगुणदर्शन के बाद आळ्वार का वह (नैच्यानुसंधानरूप) रोग मिट गया और आप पूर्णरूप से भगवदनुभव करने में उतर गये। अतः आळ्वार को अब, जब कि उन्हें भगवान की परमविलक्षण भोग्यता का अनुभव हुआ किया, ऐसे विलक्षण भोग्य भगवदनुभव की परवाह नहीं करते हुए केवल आत्मानंद में निरत मानव अत्यंत भाग्यहीन प्रतीत हो रहे हैं। अतः इसमें किसी प्रकार का विरोध नहीं।

गाथा के उपक्रम में सूचित जननमरणप्रयुक्त दुःख दूर करने की इच्छा, 'केवलों' की भांति परमैकांतियों को भी होती ही है। परंतु 'केवल' उतनामात्र पाना चाहते हैं, परमैकांति मुख्यतया भगवदनुभव ही करना चाहते हैं; जन्म मरण परंपरा से छूटना तो भगवदनुभव का पूर्वांगमात्र है। अतः उन्हें जननमरणप्रयुक्तदुःख मात्र को दूर करने की इच्छा नहीं है। इस लिए वे प्रकृतगाथोक्त निंदा के पात्र

नहीं हो सकते। यद्यपि मूलगाथा में यहां पर मात्र शब्द का प्रयोग नहीं किया गया; तथापि आगे यह स्पष्ट शब्द प्रयुक्त है ही कि ये ('केवल') लोग स्वयंप्रकाश जीवात्मा का ही साक्षात्कार पाना चाहते हैं। अतः हाल में मात्र शब्द जोडा गया। तथाच इन सभी अर्थों का विवेचन कर, पूर्वाचार्य इसका यह तात्पर्य बताते हैं कि, "प्रकृत गाथा के पूर्वार्ध से आल्वार उन लोगों का संकेत कर रहे हैं जो सांसारिक समस्तदुःखों का विनाश पाने की इच्छा से आत्मोपासन करते हुए उससे प्रकृतिवियुक्त परिशुद्ध आत्मा का अनुभव करना चाहते हैं।"

गाथा के उत्तरार्ध में यह अर्थ कहा जाता है कि, ये 'केवल' लोग स्वयं भगवान से ही पूर्वोक्त अपना इष्ट माँगते हैं; और भगवान भी अपनी सीमातीत करुणा से उन्हें अपेक्षित यह पुरुषार्थ दे देते हैं। प्रयोजनांतरपरों की भी उक्त इच्छा का पूरण करना भगवान के सीमातीत औदार्य का फल है; इस अर्थकी सूचना करने के लिए उनको विशेषण दिया गया—[**परमधार्मिक**]। एवं भगवान को [**चक्रायुधधारी**] कहनेवाले आल्वार इस प्रकार अपने निर्वेद तथा आश्चर्य की सूचना करते हैं कि, "शत्रुविध्वंसक आयुध होते ही, भगवान की शोभा बढानेवाले आभूषण भी बननेवाले सुंदर चक्रराज के दर्शन करने पर भक्तलोग तो, "जय जय श्री सुदर्शन" कहते हुए उनका मंगलाशासन करते हैं; परंतु हतभाग्य ये 'केवल' इस बात पर ध्यान न देते हुए, क्षुद्रफल लेकर भगवान को छोड दूर भाग जाते हैं।" एवं भगवान को [**परमपरिशुद्ध**] विशेषण देते हुए आल्वार् अपना यह हार्द संताप बताते हैं कि, "अहो! ये मूर्ख लोग भगवान में शुद्धिगुणमात्र का अस्तित्व मानते हैं; नतु भोग्यता का।" चौथे पाद का यह भाव है कि, ये "केवल" लोग न तो अपने अपेक्षित स्वात्मानुभवरूप क्षुद्र पुरुषार्थ को कभी भूलते हैं; न वा भगवान की परमभोग्यता का किंचित् भी स्मरण करते हैं; यह इनका काम सबसे अधिक शोचनीय है॥ .... .... .... .... .... (१)

(गाथा.) वैप्पाम् मरुन्दाम् अडेयरै * वल्विनै पुप्पाम् पुलनैन्दुम् तुञ्ज कोडानवन् *
एप्पाल् यवर्कुम् नलत्ताल् उयर्न्दुयर्न्दु * अप्पालवन् * एङ्ग लायर् कोलुन्दे ॥ २ ॥

**स्वाश्रितान् जनान् प्रबलदुरितनिदानभूतपञ्चेन्द्रियवश्यतारूपादात्मविनाशादपसार्य संरक्षन् तेषामक्षय्यनिधिर्भवन् विरोधिनिरसनमुखेन दिव्यौषधनिर्विशेषश्च भवति। स क इति चेत्; सार्वत्रिकसर्वजनातिशायिमहानन्दविषये * यतो वाचो निवर्तन्ते * इत्युपनिषदाम्नातरीत्या वाङ्मनसयोरभूमिः अस्मत्स्वामी गोपालतल्लजः॥**

अधस्तनगाथायां कैवल्यार्थिप्रस्तावनवशात् तत्प्रत्यनीकाः परमैकान्तिनः स्मृतिविषया बभूवुर्मुनिवरस्य। तादृशानां परमभागवतानां विषये भगवदनुग्रहप्रकारः परमशोभन इति कीर्त्यतेऽनया गाथया। जगति येये जनाः प्रबलदुरितभरिता दृश्यन्ते ते सर्वेऽपि पञ्चेन्द्रियवश्यतावलादेव तथाविधा भवन्तीति नैतत्परोक्षम्। ये तावदनन्य-प्रयोजनास्सन्तः स्वात्मानमुपसर्पन्ति, तान् इन्द्रियकिङ्करत्ववैदेशिकानाकलय्य परमसुकृतिव्यपदेशं प्रापयति भगवान्। तेषां महानिधिर्भवति, दिव्यौषधात्मकश्च शोभतीति। उपाय उपेयं च स्वयमेव भवतीति भावः।

* अन्तर्हितो निधिरसि त्वमशेषपुंसां लभ्योऽसि पुण्यपुरुषैरितरैर्दुरापः * इति श्रीकूरेशमिश्र श्री सूक्तिरीत्या पुण्यपुरुषैकसुलभमहानिधिर्भवति; चिरमनुभवेऽप्यशक्यो भवतीति भावः। भक्तानां दिव्यौषधं भवतीत्यत्र * य आत्मदा बलदाः * इति श्रुतिवाक्यमुपदर्श्य रस्यतममर्थमनुगृह्णन्त्याचार्याः। उपात्तश्रुतिवाक्यस्यायमर्थः;—आत्मानं ददातीत्यात्मदाः; बलं ददातीति बलदाः। * यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम् * इत्याम्नातरीत्या नन्दगोपयशोदादिभ्य इव स्वदिव्यमङ्गलविग्रहमनुभाव्यं प्रयच्छति भक्तेभ्यः। क्षुद्रविषयोपभोगेऽप्यशक्तस्संसारी जनो भगवदनुभवे कथं नु धृष्णुयात्? नैव धृष्णुयादिति स एव भगवान् कलयन् स्वानुभवौपयिकं बलमपि ददाति। एतदेव भगवतो दिव्यौषधत्वं नाम। अथ आनन्दवल्लीप्रसिद्धमवाङ्मनसगोचरमानन्दभूमानं मनागुपवर्णयति मुनिवरस्तृतीये पादे। * उपर्युपर्यब्जभुवोऽपि पूरुषानित्यादिस्तोत्ररत्नसूक्तिरिहानुसन्धेया। भगवत आनन्दमयत्वकथनम् प्रकृतविवक्षितपरमभोग्यत्वकथनपर्याय इति प्रतिपत्तव्यम्॥ .... (२)

—* दूसरी गाथा—वैप्पाम् मरुन्दाम् *—

**(हिंदी) अपने पादाश्रितों को प्रबल पाप के हेतुभूत इंद्रियवश्यतारूप आत्मविनाश से बचाते हुए उनकी रक्षा करनेवाले, उनके लिए अक्षय निधि के सदृश बननेवाले, और उनके विरोधियों को निरास कर दिव्य औषध के सदृश रहनेवाले भगवान, सर्वदेशस्थ समस्त जनों से बढ़कर रहनेवाले आनंदगुण के बारे में हमारे मन या वचन से परे रहते हैं और हमारे स्वामी गोपश्रेष्ठ हैं॥**

पूर्वगाथा में कैवल्यार्थियों का प्रस्ताव करने पर आळ्वार को उनसे विरुद्ध परमैकांतियों का स्मरण आया। अतः इस गाथा में आप ऐसे विलक्षण भक्तों के विषय में भगवान से किये जानेवाले महान अनुग्रह का वर्णन करते हैं। यह तो निश्चित वार्ता है कि लोगों के दुःख भोगने का कारण उनकी पंचेंद्रियवश्यता ही है। अतः भगवान अनन्यप्रयोजन होकर अपने पादारविंदों का आश्रय लेनेवाले परमैकांति भक्तजनों की इंद्रियपरवशता दूरकर, उन्हें पुण्यवान बनाते हैं; और उनके लिए वे महानिधि एवं दिव्य औषधरूपी भी होते हैं। अर्थात् भगवान उनके लिए स्वयं फल और तत्साधक उपाय होते है.। निधि तो पुण्यवानों को ही मिलता है, और बहुत उपयोग किये जाने पर भी कम नहीं होता। भगवान में भी ये दो गुण परिपूर्ण रहते हैं; अतः उन्हें निधि कहना बहुत उचित है। एव भगवान को दिव्यौषध पुकारने का यह रसमय कारण आचार्यों से बताया जाता है—एक वेदवाक्य भगवान को "य आत्मदा बलदाः" कहता है। आत्मानं ददातीति आत्मदाः—अर्थात् अपने का ही प्रदान करनेवाला आत्मदाः कहलाता है; एवं बलदाः शब्द का अर्थ है—बल देनेवाला। तथाच यह अर्थ हुआ कि भगवान अपने भक्तों को स्वयं अपने का प्रदान करते हैं, और साथ में उपना अनुभव करने के आवश्यक बल का भी प्रदान करते हैं। हम जानते है कि भगवान ने नंदगोप यशोदा आदियों को स्वात्मदान (माने अपने दिव्यमंगलविग्रह का ही प्रदान) कर दिया। परंतु अल्पशक्तिवाला यह मानव, जब अल्प लौकिक विषयों का भी ठीक अनुभव नहीं कर सकता, फिर वह अलौकिक भगवान का अनुभव कैसे करेगा? नहीं करेगा। अतः स्वय भगवान ही उसे अपना अनुभव करने में पर्याप्त बल भी देते हैं। इस लिए वे स्वयं दिव्यौषध कहलाते हैं। औषध का प्रसिद्ध काम

तो शरीर व इंद्रियों को बलवान बनाता है। अत भगवान को औषध पुकारना सर्वथा उचित है। आनद-वल्ली नामक उपनिषद बताती है कि भगवान का आनद न केवल मनुष्य, गन्धर्व, देव, इंद्र, बृहस्पति, चतुर्मुख आदि दूसरे सभी ऐश्वर्यान्वितों के आनद से कई गुन अधिक है, किंतु हमारी वाणी अथवा मनसे भी परे है। श्रीयामुनाचार्यस्वामीजी ने भी स्तोत्ररत्न में "उपर्युपर्यब्जभुवोऽपि" इत्यादि (उन्नीसवें) पद्य में इस अर्थ का वर्णन किया। भगवान को परमभोग्य बताने के लिए हाल में आळ्वार उनको यह विशेषण दे रहे हैं। ऐसे महामहिम ही अपना वैभव छिपा कर गोपालकृष्ण के रूप में अवतीर्ण हुए ॥ . . (२)

(गाथा) आयर् कोळुन्दाय् अवराल् पुडैयुण्णुम् * मायप्पिरानै एन् माणिक्क चोदियै *
तूयअमुदै परुहि प्परुहि * एन् मायप्पिरवि मय वेरुत्तेन् ॥ ३ ॥

गोपालकृष्णतयाऽवतीर्णम्, गव्यस्तेयाद्यपराधनिमित्तेन तैस्तैर्वल्लवैः प्रापितप्रहारबन्धनादिशिक्षा-विशेषम्, मायाचेष्टितविदग्धम्, माणिक्यभास्वज्ज्योतिर्मयदिव्यमङ्गलविग्रहानुभवं मह्यमुपकृत-वन्तम्, परिशुद्धदिव्यामृतवदतिमधुरमच्युतमनुभूयानुभूय सांसारिकमशेषं कल्मषमपाकृत-मकार्षम् ॥

भगवत परमभोग्यता हि दशकस्यास्य प्रमेयसर्वस्वम्, तादृशी भोग्यता मुनिवरोऽसौ स्वस्मिन् फलपर्यवसायिनीमवेक्षमाणस्सानन्दमभिदधाति गाथामिमाम्। भगवतो भोग्यता हि न भवत्येकविधा, उच्चावचा सा। तस्य स्वरूपम् रूपम् गुणजालम् चेष्टितवृन्दम् विभूतिविस्तार इत्यादिष्वेकैकमपि चिन्त्यमान भावुकाना परमभोग्य भवति। * चरणौ मधुरौ चरण मधुरम् मधुराश्चरणाङ्गुलयोऽपि दश। चरणाभरणावलिका मधुरा मधुराधिपतेरखिल मधुरम् ॥ * मधुर वदन मधुर नयन मधुर हसित मधुर रुदितम्। अटन मधुर नटन मधुर मधुराधिपते रखिल मधुरम् ॥ * दधि मधुर मधु मधुर द्राक्षा मधुरा सिताऽपि मधुरैव। मधुरादपि मधुरतरा मधुरानाथस्य माधवस्य कथा ॥ * इत्येवविधान्यनुभवरसिकसुभाषितानि विराजन्ते खलु परश्शतानि। प्रकृतगाथाया तु श्रीकृष्णचेष्टितविशेषनिष्ठा परमभोग्यतामनुभवति मुनिवर। गोपालकृष्णतयाऽवतीर्णमित्येताव मात्रकथनेऽपि भोग्यता-तिशयोऽनुभूत एव स्यात्, तदुपरि गव्यस्तेयाद्यपराधनिमित्तेनेत्यादिकथन शब्दानुसन्धानमात्रमपि परम-भोग्यताप्रचुरम्। भगवत कृष्णकिशोरस्य व्रजे प्रतिगोपगृह च लगुडप्रहारलाभ उदूखलबन्धप्राप्तिश्च तस्य श्रिया परमभाग्यसर्वस्वम्, भक्ताना श्रिया परमभोग्यसर्वस्वम्। सान्दीपनिपुत्रानयन-वैदिकब्राह्मणपुत्रचतुष्टयानयनादीना कृत्यानामतिमानुषत्वेऽपि तेषु भोग्यता नानुसंदधते रसिकप्रवरा भक्ता। * अन्तर्गृहे कृष्णमवेक्ष्य चोर बध्वा कवाट जननी गतैका। उलूखले दामनि बद्धमेन तत्रापि दृष्ट्वा स्तिमिता बभूव ॥ * इत्येवमेव प्रतिपाद्यमानेषु चेष्टितविशेषेषु भोग्यता अनन्यसाधारणी खलु। तामेव भोग्यतामत्रानुसंदधानो मुनिवर आनन्दस्य परमकाष्ठा प्रपद्यते।

मायाचेष्टितविदग्धमित्यत्र मायाशब्द आश्चर्यार्थक। भगवतो श्रिया न कुत्रापि कृत्ये किमप्याश्चर्यं नाम, अनुभोक्तृभक्तजनश्रिया तु सर्वमप्याश्चर्यमहो। * घुघुमिति किं भ्रमति अम्ब! दधिमध्ये? डिम्भ! ननु भूतमिह दूरमपयाहि। अम्ब! नवनीतमिति सगदति कृष्णे मन्दहसित जयति मातुरतिरम्यम् ॥ * इत्यादिकमिह

ध्येयम्। स्वयमवाप्तसमस्तकामस्सर्वेश्वरस्सन्नपि अनाप्तसमाप्तव्य यद्वस्तीति मन्यमान इव भुव्यवतीर्य तस्करप्रथा च प्रतिलभ्य बद्धो बभूवेत्येतद्वस्तुत परमाद्भुत खलु। अथच माणिक्याभज्योतिर्मयदिव्यमङ्गलविग्रहवत्त्वकथनं न तावद्दिव्यधामस्थितिकथनम्, अपितु व्रजे तद्रूपकान्धकालिकस्थितिकथनमिति व्याचक्षाणानामाचार्यवर्याणा मेधाविलसितमनुभवरासिकस्य च हन्त! को वा वर्णयितुं प्रभवति ॥ .. .... (३)

— ❋ तीसरी गाथा—आयर्कोळुन्दाय् ❋ —

**गोपालकृष्ण के रूप मे अवतार लेकर, (दूध मक्खन इत्यादि की चोरी करने के अपराध में गोपों से मार खानेवाले, मायाचेष्टित करने में समर्थ, मुझे माणिक्य के सदृश ज्योतिर्मय अपने दिव्यमंगलविग्रह का अनुभव देनेवाले परमोपकारक, और परिशुद्ध अमृत के सदृश अति मधुर भगवान का पुनः पुनः अनुभव करते हुए मैंने सांसारिक समस्त कल्मष का पार किया ॥**

अवतारिका में बताया गया कि भगवान को परमभोग्य बताना ही प्रकृत दशक का लक्ष्य है। अब आळ्वार प्रकृत गाथा में अपने से अनुभूत उस भोग्यता का वर्णन करते हैं। भगवान की भोग्यता एक प्रकार की नहीं, बरन् नाना प्रकारों की होती है। तथाहि उनके स्वरूप, दिव्यमंगलविग्रह, कल्याणगुण, व्यापार, विभूति इत्यादि में एकैक भी अनुभव करनेवालों को परमभोग्य लगता है। इस भोग्यता के प्रकाशक भावुकों के उद्गार हजारों मिलते हैं। यथा, "चरणौ मधुरौ चरण मधुर मधुराश्चरणाङ्गुल्योऽपि दश। चरणाभरणावलिका मधुरा मधुराधिपतेरखिलं मधुरम् ॥" (मधुरानाथ श्रीनंदनंदन के चरण, चरणतल, चरण की उंगलियाँ, चरण के आभूषण इत्यादि सभी मधुर होते हैं।) "मधुर वदन मधुर नयनं मधुर हसित मधुर रुदितम्। अटन मधुर नटन मधुर मधुराधिपते रखिल मधुरम् ॥" (मधुरानाथ नंदकिशोर के मुख, नेत्र, हँसी, रोदन, चलन, नर्तन, इत्यादि सभी मधुर ही होते हैं।) "दधि मधुर मधु मधुर द्राक्षा मधुरा सिताऽपि मधुरैव। मधुरादपि मधुरतरा मधुरानाथस्य माधवस्य कथा ॥" (मधुरानाथ लक्ष्मीपति श्रीकृष्ण की दिव्य कथा, लोक में मधुरतया प्रसिद्ध, मीठा दही, मधु, द्राक्षा, मिश्री इत्यादि वस्तुओं से बढ़कर मधुर होती है।) इत्यादि। आळ्वार प्रकृत गाथा में श्रीकृष्णचंद्र की किसी एक विलक्षण चेष्टा की भोग्यता का अनुभव करते हैं। भगवान का गोपालकृष्ण के रूप से अवतार करना ही, अथवा इस वृत्तात का संकीर्तन मात्र ही अतिभोग्य होता है। तदुपरांत मक्खनचोरी इत्यादि वृत्तांतों का कथन और भी भोग्य है। स्वयं भगवान ने ही, व्रज मे प्रत्येक घर मक्खन की चोरी करना, उस समय गोपियों से पकड़ा जाना, मार पीट खाना, ओखली में बंधित होना इत्यादि अपने विचित्र चेष्टितों को अपना परमविलक्षण भोग्य माना। "जन्म कर्म च मे दिव्यम्" यह प्रसिद्ध गीतावचन इस विषय में प्रमाण है। (इसका यह अर्थ है—भगवान का कहना है कि मेरे जन्म और चेष्टित, मेरे दिव्यम्—मुझे बहुत अच्छे माने भोग्य लगते हैं।) अत भक्त लोग भी उन्हींको परम भोग्य मानते हैं। रसिक भक्त लोग, सांदीपनिपुत्रों को लौटाना, वैदिकब्राह्मण के चार पुत्रों को परमपद से लौटाना इत्यादि श्रीकृष्ण के चरित्रों को इतने भोग्य नहीं

मानते, जितने पूर्वोक्त नवनीत चौर्यादियों को भोग्य मानते हैं।। अत एव ऐसे वृत्तांतों का वर्णन करनेवाले ही वचन अधिकतर मिलते हैं। जैसा—"अंतर्गृहे कृष्णमवेक्ष्य चोरं बध्वा कवाटं जननीं गतैका। उलूखले दामनि बद्धमेनं तत्रापि दृष्ट्वा स्तिमिता बभूव॥ (एक दिन श्रीकृष्ण चोरी से किसी एक गोपी के घर घुसकर कमरे में सुरक्षित मक्खन खाते थे। इतने में घरवाली गोपी ने उन्हें देख लिया। वह रुष्ट तो अवश्य हुई, परंतु श्रीकृष्ण को पकडकर स्वयं पीट न सकती थी, क्यों कि उसको यशोदाजी का डर था। अत उसने सोचा कि, "मैं अभी यशोदाजी के पास जाकर, उन्हें यह वृत्तांत सुनाकर, यश पर लेती आवूगी। परतु उतने में यह धूर्त कदाचित् बाहर निकल जायगा, अत किवाड बदकर जाऊगी।" यों सोचकर वह गोपी अपने घर को ताला लगाकर बदकर, शीघ्र यशोदाजी के यहा गयी। परतु उधर वह देखती क्या? श्रीकृष्ण ओखली में बाधा जाकर रो रहे हैं। यह दृश्य देखते ही बेचारी वह गोपी स्तब्ध हो गयी।) श्रीकृष्ण के ऐसे चेष्टितों की भोग्यता सत्य ही वाचामगोचर है। अत प्रकृत गाथा में आल्वार इसी भोग्यता का अनुसधान करते हुए सीमातीत ब्रह्मानद जैसा आनद भोगते हैं।

[मायाचेष्टित करने में समर्थ] इत्यादि। यहा पर माया शब्द का अर्थ है—अत्याश्चर्यमय। यद्यपि भगवान की दृष्टि में उनका कोई भी चेष्टित आश्चर्यकारक नहीं होता। तथापि उनका अनुभव करनेवाले भक्तजनों के अभिप्राय में उनके सभी चेष्टित आश्चर्यमय ही होते हैं। अत एव वे उनके अल्पल्प चेष्टित की भी भूरि प्रशसा करते हैं। यथा, "घुमुघुमिति किं भवति अम्ब! दधिमध्ये? डिम्भ! ननु भूतमिद दूरमपयाहि। अम्ब नवनीतमिति मणदति कृष्णे म इहसितं जयति मातुरतिरम्यम्॥" (एक दिन यशोदाजी दही मथती थीं, पास ही श्रीकृष्णकिशोर खडे थे। मथने का शब्द सुनकर उन्होंने पूछा—"मैया! दहि में यह कोई वस्तु घुघु करती हुई भ्रमण कर रही है, यह क्या है?" माताजी ने उत्तर दिया कि, "बेटा! यह तो भूत है, तुमको पकड लेगा। अत इसके पास मत आओ, दूर जा।" फिर श्रीकृष्ण बोले, "मैया! तुम मुझे धोखा दे रही हो। यह तो मक्खन है!" यह सुनकर यशोदाजी आनदपरवश होकर हँस पडी।) स्वय परिपूर्ण, अवाप्तसमस्तकाम और सर्वेश्वरेश्वर होते हुए भी, शायद कुछ पुरुषार्थ कमाना चाहते होंगे, इस प्रकार भूतल पर अवतार करना, दूध मक्खन इत्यादि अल्पवस्तुओं की चोरी करना, इस अपराध के निमित्त गोपियों से पकडा जाना, मार पीट खाना, बधन पाना, इत्यादि भगवान के सभी चेष्टित परमाद्भुत हैं। [मणिक्य के सदृश ज्योतिर्मय दिव्यमंगलविग्रह] कहना परमपदनिवासी का वर्णन नहीं, परतु ओखली में बाधे हुए श्रीकृष्ण की तात्कालिक शोभा का वर्णन है—ऐसे सुदर अर्थ का वर्णन करनेवाले हमारे पूर्वाचार्यों की प्रतिभा सत्य ही परमाद्भुत है॥ (३)

(गाथा) मयर्नेर वेन् मनत्ते मन्निनान्तवै * उयर्विनैये तरुम् ओण्शुड कैत्तैये *
अयर्वि लमरर्ह्ळ् आदिक्कोळुन्दै * एन् इडैच्चिनै एनुशोलि यान् विडुवेनो॥ ४॥

मम मनसि नित्यमभिधानेन अज्ञाननिरसननिरतम्, मम ज्ञानभक्तिविवृद्धिप्रदायकम्, तेजसा राशिसदृशभासमानम्, नित्यविकसितज्ञाना सूरीणा निर्वाहकम् मम स्वामिकुलसम्पत्तिमपि।

**स्वयमेवानुगृहीतवन्तम् भगवन्तं केन वा कारणेनाहं विसृजेयम्? [न कदाऽपि कथञ्चिदपि विसृजेयमिति यावत् ॥]**

मुनिवरः स्वस्य कृतकृत्यता सूचयन्निव हि गाथामधस्तनीं व्यजिज्ञपत्। कृतकृत्यतायां सत्यां विश्रान्तिरेव हि वरम् इति शङ्का जायेत खलु; तामपाकुर्वन्निमां गाथामाह। भगवता कृताना क्रियमाणाना चोपकारपरम्पराणामनुसन्धाने क्रियमाणे मम वाचो विश्रान्तिः कथमहो भवित्री? इत्यावेदयति। **[मम मनसि नित्यसन्निधानेन अज्ञाननिरसननिरतम्]** यद्यपि भगवान् आदावेव मुनिवरस्य ज्ञानपौष्कल्यमनुगृहीतवान्, मुनिवरश्च तमनुग्रहं प्रथमगाथायामेव प्रकाशितवांश्च; तथाऽपि ज्ञानक्षयकरे प्रकृतिमण्डले निवासात् अज्ञानाङ्कुरो जायेतापीति मन्यमानस्स एतस्य हृदये नित्यसन्निधिमकार्षीत्। एतादृशमहोपकारानुसन्धानेन स्वस्य विश्रान्त्यवकाशो नेति विवक्षति मुनिवरः **[मम ज्ञानभक्तिविवृद्धिप्रदायकम्]** "मम उत्कर्षप्रदायकम्" इत्येव मूलगाथायामुक्तिः। ज्ञानभक्तिभ्यामेव हि समुत्कर्षो मुनिवरस्य। अन्येऽपि नानाविधास्समुत्कर्षा इह सुवचा.; ते हि संसारसागरशोषकत्वम् विमुखानामपि विषये उपदेशनिरततरम् यमकिङ्कर भयानकत्वमित्यादयः। **[तेजसां राशिवदवभासमानम्]** भगवतस्स्वाभाविकी तेजस्विता नात्र विवक्षिता; मुनिवरविषये निरुक्तमहोपकारकरणेन समुदितस्सर्वाङ्गीणसमुल्लासो विवक्षित.। भगवतो भक्तजनानां हर्षणं स्वस्यैव प्रहर्षाय प्रकल्पते; * अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम्। कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह॥ * इत्यादिकमिह भाव्यम्। **[नित्यविकसितज्ञानानां सूरिणां निर्वाहकम्]** मुनिवराय महोपकारकरणेनैव भगवान् स्वस्य नित्यसूरिनिर्वाहकत्वं प्रतिष्ठितं मन्यते; तदवगत्यैतदुदीरितमिति ध्येयम्। **[मम स्वाभिमुख्यसम्पत्तिमपि स्वयमेवानुगृहीतवन्तम्]** एतत्तु महोपकाराणा मूर्धन्यमिति मुनिवरस्तदिदमसकृदनुसन्धत्ते। "प्रीतिपूर्वक ददामि बुद्धियोगं तं येन मामुपयान्ति ते" इति गीतोक्तिः स्वस्मिन्नेव सफलेति विश्वसिति मुनिवरः। तथा चैवंविधमहोपकारकरणैरूदीक्षित भगवन्तं विसृज्य कथमिवाहमन्यां कथां कथयेयमित्युक्तं भवति॥ .... .... (४)

—* चौथी गाथा—मयर्वर।वेन्मनत्ते मन्निनान्तन्नै *—

**अज्ञान का निरसन करते हुए मेरे मन में नित्यनिवास करनेवाले, मेरे ज्ञान व भक्ति बढानेवाले, मनोहर तेजोराशि के सदृश, ज्ञानसंकोच विरहित नित्यसूरियों के नाथ, और अपने से (भगवान से) मिलने की मेरी इच्छा उत्पन्न करनेवाले, भगवान को मैं क्योंकर छोड दूं? [किसी कारण से कभी न छोडूंगा।]**

आळ्वार ने मानों अपने को पूर्णतया कृतकृत्य बताते हुए पिछली गाथा गायी। उनके कृतकृत्य होने पर इस दिव्य प्रबंध को भी समाप्त ही होना था; फिर यह कैसे चालू हो रहा है? यह शंका दूर करने के लिए प्रकृत गाथा गायी जा रही है। इसमें सारतया आळ्वार यह कहते हैं कि, "मेरे विषय में भगवान के किये हुए और किये जानेवाले असंख्य उपकारों का चिंतन करने पर मैं कैसे उनको भूल सकूंगा!" [अज्ञान का निरसन करते हुए] इत्यादि। यद्यपि भगवान ने आरंभ में ही आळ्वार का

अज्ञान मिटाकर उन्हें सच्चे ज्ञान का प्रदान किया था, जो कि स्वय आळ्वार से ही (सहस्रगीति की) पहली गाथा में कीर्तित हुआ। तथापि यों सोच कर कि, "ज्ञान का सकोच करनेवाले ससार में रहनेवाले आळ्वार को कदाचित् फिर भी अज्ञान उत्पन्न होगा," ऐसे होने का अवकाश न देते हुए उन्होंने आळ्वार के हृदय मे नित्य निवास कर दिया। अत आळ्वार कहते हैं कि "भगवान के किये हुए इस महोपकार का स्मरण करने पर मैं कैसे विश्रांति पाऊ? [मेरे ज्ञान व भक्ति बढानेवाले]। मूल गाथा में इतना ही कहा गया है कि "मुझे श्रेष्ठता देनेवाले।" इसका यही अर्थ हो सकता है कि भगवान ने आळ्वार को ज्ञान व भक्ति देकर उनको श्रेष्ठ बनाया। आळ्वार की दूसरी कौन-सी श्रेष्ठता हो सकती है? अथवा, ससार-सागर को सुखा देना, विमुखों को भी सदुपदेश देना, यमभटों के भयकर होना इत्यादि नानाप्रकार की श्रेष्ठताएं भी इस शब्द का अर्थ हो सकता है। [मनोहर तेजोराशि के सदृश] कहना भगवान के स्वाभाविक तेज का वर्णन नहीं, किंतु उक्त प्रकार आळ्वार के विषय में महोपकार करने से भगवान के सारे श्रीविग्रह पर जो शोभा छा गयी, उसका वर्णन है। भक्तजनों के उपकार करने से स्वय भगवान आनदित और उज्ज्वल होते हैं। अत एव श्री सक्षेप रामायण म नारदजी ने विभीषण को लका का राजा बनाने पर श्रीरामचद्रजी को कृतकृत्य, दुःखमुक्त तथा प्रहृष्ट बनाया—अभिषिच्य च लङ्कायां राक्षसेन्द्रं विभीषणम्। कृतकृत्यस्तदा रामो विज्वरः प्रमुमोद ह॥ [नित्यसूरियों के नाथ] कहने का यह तात्पर्य हैं कि आळ्वार के विषय मे पूर्वोक्त उपकार करने के बाद ही भगवान अपने को नित्यसूरिनाथ मानते हैं। [अपने से मिलने की मेरी इच्छा उत्पन्न करनेवाले।] आळ्वार के अभिप्राय से भगवत्कृत उपकारों में सब से बडा उपकार यही है कि, वे अपने से मिलना नहीं चाहने वाले चेतन के मनमें मिलने की इच्छा उत्पन्न करते है। अत आळ्वार बार बार इस उपकार का कीर्तन करते हैं। यह इच्छा ही चेतन के श्रेयों का मूल है और इसे भी भगवान की देन के रूप में ही पाना पडता है। गीताचार्य ने भी गाया, "प्रीति-पूर्वकम्, ददामि बुद्धियोग त येन मामुपयान्ति ते।" आळ्वार का अभिप्राय है कि, "भगवान की यह उक्ति दूसरे किसी चेतन के विषय में नहीं, बल्कि मेरे विषय में ही सफल हुई।" तथाच, ऐसे महोपकारक भगवान को छोड, मैं कैसे दूसरी बात कर सकूंगा? ॥ (४)

(गाथा) विड्डवेनो एन्विळक्कै एन्नाविये * नडुवे वन्दु उय्यकोळ्हिन्र नाथनै *
तोडुवे शेय्दु इळवाय्चियर् कण्णिनुळ् * विडवे शेय्दु विळिक्कुम् पिरानैये ॥ ५ ॥

मम सकलार्थप्रकाशकप्रदीपोपमम् मम धारकम् मामुज्जीवयितुमचिन्तितमेव स्वतः प्रवृत्तं नाथम्, कृत्रिमचेष्टितकरणेन वल्लवीजननयनेषु धूर्तकृत्यान्याकलयन्तं च भगवन्तं कथमहं विसृजेयम् ॥

व्रजवासिनीनां वल्लववनितानामक्ष्णो पुरत प्रादुर्भूय विविधशृङ्गारचेष्टितविभ्रमै स्वकीयां परम-भोग्यतां प्रदर्श्य ता आनन्दतुन्दिलस्वान्ता व्यरचद्वासुदेवो यथा, तथैव मामपि चेष्टितविशेषैर्वशीकृत्य स्वभोग्यता-लुब्धं कृतवानहो! कथमिममुत्सृजेयमहम्? गोपाङ्गना यदि कृष्ण विहाय वैकुण्ठनाथ कामयेरन् तर्हि अहमपि

तं विसृज्य इतरत्किमपि कामयेय इत्यभिदधाति। मूलगाथायाम् **मम प्रदीप** मित्येवानुगृहीतम्। प्रदीपो यथा तिमिर मपसार्य सर्वं वस्तुजात सुष्ठु प्रकाशयति, तथा भगवानपि तत्वहितपुरुषार्थादि समस्तमर्थजातं स्वस्मै प्राचीकशदित्युपकारस्मृतिः। [**मम धारकम्**] अस्मादृशां संसारिणाम अन्नपानादि हि धारकं भवति। न तथा मुनिवरस्य। * वासुदेवस्सर्वमिति रीत्या वासुदेवमेकमेव धारकपोषकभोग्यादि सर्वं मन्यते। [**मामुज्जीवयितुमचिन्तितमेव स्वतः प्रवृत्तं नाथम्**] * आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मन इति गायति भगवान् गीताचार्यः। अहं तावदात्मनो बन्धुर्नाभूवम्। आत्मनः शत्रुरेव सन्नहं स्वानर्थमेव सुचिरात्सम्पादितवानभूवम्; एव गच्छति काले स एव भगवान् स्वकीय वस्तु नष्टं माभूदिति धिया मच्चिन्तालेशमन्तरेण स्वयं समुपेत्य स्वीकृत्य समुज्जीवयामासेति तदीयस्सौहार्दगुण आविष्कृतो भवति।

अथ * कृत्रिमचेष्टितकरणेनेत्यादिना श्रीकृष्णकिशोरस्य परममधुरचरितविशेषोऽनुभूयते। कृत्रिमचेष्टितकरणम् धूर्तकृत्यकरण चेति कृत्यद्वयमिहानुसन्धीयते। नवनीतमोषणादिक कृत्रिमचेष्टितवर्गे ध्येयम्। गोपीव्यामोहनादिक धूर्तकृत्यवर्गेऽनुसन्धेयम्। * धूर्तायित तव हि यत्किल रासगोष्ठ्या तत्कीर्तनं परमपावनमामनन्तीति श्रीकूरनाथगुरुवरोक्तरीत्या परमपवित्रकीर्तन हि कृष्णस्य धूर्तायितम्; न केवल पवित्रम्, परमभोग्यमिति धियाऽत्र तदनुभव.। **वल्लवीजन नयनेष्विति** कथनम्—तच्चक्षुर्मात्रगोचराणाम् इतरजनचक्षुरगोचराणा च धूर्तकृत्यानां करणे कृष्णस्य वैदग्ध्यकथनमित्यवगन्तव्यम्॥ ... ... (५)

—※ पाचवी गाथा—विडुवेनो वेन् विळक्कै एन्नावियै ※—

**मेरे लिए समस्त सदर्थों के प्रकाशक दीप के सदृश, (मेरे धारक), विना कारण स्वयमेव मेरा उद्धार करने में प्रवृत्त मेरे स्वामी, और कपटचेष्टा करते हुए गोपबालिकाओं के नेत्रों में धूर्तकृत्य करनेवाले भगवान को मैं कैसे छोड सकूंगा?**

यह भाव है—श्रीकृष्ण ने जैसे व्रजनिवासिनी गोपियों के सामने प्रकट होकर नानाविध श्रृंगार चेष्टा करते हुए अपनी भोग्यता दिखा कर उनको आनंदसागरमग्नमानस बनाया, इसी प्रकार उन्होंने मुझको भी नानाचेष्टितों से अपने वश बनाकर अपनी भोग्यता में अपहृतचित्त बना दिया; ऐसे भगवान को मैं कैसे भूल सकूगा? यदि गोपीजन श्रीकृष्ण को छोडकर श्रीवैकुठनाथ से प्रेम कर सकेंगी, तो मैं भी उनको छोड कर दूसरी किसी वस्तु का ध्यान कर सकूगा। [**मेरे दीपके सदृश**] कहने का यह तात्पर्य है कि जैसे दीप अधकार हटाकर समस्त पदार्थों को प्रकाशित करता है, ठीक इसी प्रकार भगवान ने आळ्वार को तत्वहित-पुरुषार्थ नामक समस्त अर्थों का प्रकाशन करवाया। यह भी आपका एक महान उपकार है। [**मेरे प्राणसदृश**] कहने का यह भाव है कि भगवान प्राण के सदृश, आळ्वार के धारक हैं। यह वार्ता अक्षरश· सत्य है। प्राण, एव अन्नपानादि साधारण मानव के धारक होते हैं; "वासुदेवस्सर्वम्" इत्यादि वचन के लक्ष्य आळ्वार के तो, धारक पोषक भोग्य इत्यादि सभी स्वय भगवान ही हैं। [**स्वयमेव मेरा उद्धार करने में प्रवृत्त मेरे स्वामी।**] मैं तो अभी तक अपने आत्मोद्धार का मार्ग नहीं जानता हुआ, अपने को अनर्थ ही पहुंचाता रहा। ऐसे बहुत समय के बीत जाने [illegible] भगवान ने विचार किया,

कि "मेरी यह वस्तु (आळ्वार) विनाश पाकर मुझसे छूट जा रही है; इसे ऐसे होना नहीं देना चाहिए," और मेरी चिंता के भी विना उन्होंने स्वय मेरे पास आकर मुझको स्वीकार कर अनुगृहीत किया। अहो उनका सौहार्दगुण है! इस सौहार्द का मूल है उनका स्वामित्व।

[कपट चेष्टा करते हुए] इत्यादि से श्रीकृष्ण भगवान के एक अतिमधुर चरित का अनुभव किया जाता है। वस्तुतस्तु एक चरित्र नहीं, बल्कि कपट चरित्र और धूर्तचेष्टित नामक दो चरित्रों का वर्णन किया जाता है। मक्खन चोरी इत्यादि कपटचरित्र हैं और गोपियों को व्यामोहित करना धूर्तचेष्टित है। श्रीकूरेश स्वामीजी ने, "धूर्तायित तव हि यत्किल रासगोष्ठ्या तत्कीर्तन परमपावनमामनन्ति" इत्यादि से श्रीकृष्ण के रासक्रीडादि धूर्तचरित्रों के सङ्कीर्तन को परमपवित्र बताया। आळ्वार तो परम मधुर मानकर हाल में उनका कीर्तन कर रहे हैं। [गोपबालिकाओं के नेत्रोंमें] धूर्तकृत्य करने का यह अर्थ है कि श्री कृष्ण कदाचित् गोपियों के नेत्र के ही विषय हो, दूसरों को विदित न हो, ऐसे विलक्षण शृंगार चेष्टित करके उनको व्यामोहित करते थे; इस विलक्षण सामर्थ्य का अनुभव किया जाता है॥ (५)

(गाथा.) पिरान् पेरुनिलम् कीण्डवन् * पिन्नुम् विराय् मलर्त्तुळाय् वेयून्द मुडियन् *
मरामर मेय्द मायनन् * एन्नुळ् इरानेनिल् पिन्नैया नोट्टुवेनो ॥ ६ ॥

उपकारैकशीलः, वराहरूपेणावतीर्य भूम्युद्धरणप्रवीणः, सुकलितसुरभितुलसीस्रगलंकृतमूर्धा, सप्तसालभञ्जनविख्यातयशाश्च भगवान् यदि ममान्तःकरणे न संनिदध्यात्तर्हि किमहमात्मधारणे शक्तस्स्याम्? [जलादुद्धृतमत्स्यनिर्विशेष एव स्यामिति यावत्।]

अधस्तनगाथायाम् "भगवन्तं कथमहं विसृजेयम्" इत्युक्तवन्तं मुनिवरं प्रति प्रश्न एवं समजनि,—त्वं तत्रभवान् न विसृजतीत्यास्ता नाम, स भवन्त विसृजेद्यदि अथ किं क्रियेतेति। तत्रोत्तर गाथा सेयम्। सन्ततमाश्रितजनतार्थकृत्यकरणैकदीक्षितस्स भगवान् नैव मा विसृजेत्सत्यम्। विसर्जन नाम अन्तःकरणसन्निधानप्रहाणमेव खलु, तन्नैव कुर्यात्स। यदि कदाचित्कुर्यात्, * न च सीता त्वया हीना न चाहमपि राघव। मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ॥ * इति सौमित्रिवचनप्रक्रियया नैव स्वात्मान धारयेयम् इत्यभिधीयते गाथयाऽनया। [उपकारैकशीलः] इत्येतत् प्राथमिक विशेषणम् प्रतिज्ञारूपम्, अथच स्थित विशेषणत्रितय तद्विवरणात्मकम्। वराहरूपेणावतीर्य भूम्युद्धरणम्, सुग्रीवविस्रम्भजननार्थं सप्तसालनिष्पत्रीकरण च उपकृतिरिति सत्यम्, तुलसीस्रगलंकृतशिरस्कत्वमित्येतदपि किमहो उपकार? इति पृच्छेयु केचित्, एतदेव सत्य महानुपकारो भक्तजनानाम्। अविरलतुलसीदामसजातभूम्न स्वस्य सदर्शनप्रदानेन भूयसा हि भक्तानामार्तिमपाकुरुते, सुमहान् खल्वसावुपकार। कस्य प्रार्थनया [illegible] तुलसीस्रजा स्वात्मान विभूषयति; भक्ता अपहृतार्तयो भूयासुरित्यनुकम्पया स्वयमेव हि स्वात्मान विभूषयति। एव नाम सन्ततमुच्चावचोपकृतिकरणैकशीलो भगवान् नैव ममान्तरङ्गादपसरेत् क्षणमात्रमपि, यदि स्वातन्त्र्येण कदाचिदपसरेत्तर्हि सत्यमहमपगतप्राण एव भावयितव्य इत्युक्त भवति॥ (६)

—※ छठी गाथा—पिरान् पेरुनिलङ्कीण्डवन् ※—

**उपकारशील, वराहरूप से अवतार लेकर भूदेवी का उद्धार करनेवाले, ठीक बनी हुई सुगंधितुलसीमाला से अलंकृत मुकुटवाले, और सप्तसालवृक्षों का भेदन करने से प्राप्त यशवाले भगवान यदि मेरे हृदय में निवास नहीं करेंगे, तो क्या मैं आत्मधारण कर सकूंगा? [अर्थात् भगवान से विश्लेष पाने पर, पानी से उठाये हुए मीन की भांति मेरा अस्तित्व ही मिट जायगा ॥]**

पिछली गाथा में आळ्वार ने कहा कि मैं भगवान को कैसे भी छोड न सकूंगा। इस पर यह प्रश्न हुआ कि "आप भगवान को बेशक न छोड़ें; परंतु यदि भगवान आपको छोड दें, तो क्या किया जायें?" इसका यह उत्तर प्रकृत गाथा में दिया जाता है—सर्वदा आश्रितो का मनस्सतोष कराना ही भगवान का स्वभाव है। अतः वे कथचिदपि मुझे नहीं छोडेंगे। छोडने का अर्थ है मेरे हृदय से हट जाना। भगवान क्योंकर यह काम करेंगे? यदि कदाचित् कर भी देंगे तो तुरत मेरा शरीर छूट जायगा। [उपकार-शील]—यह पहला विशेषण आळ्वार का प्रतिज्ञावचन है; और आगे के तीन विशेषण इसका विवरण हैं। अर्थात् इन तीनों विशेषणों से भक्तों के बारे में भगवान की उपकारशीलता का विवरण किया जाता है। कोई पूछेगा कि, वराहावतार लेकर भूमिका उद्धरण करना और सुग्रीव के मन में विश्वास उत्पन्न करने के लिए सात सालवृक्षों का भेदन करना, ये दोनों अवश्य उपकार हैं; परंतु तुलसीधारण से कौनसा उपकार होगा? समझना चाहिए कि चूंकि तुलसीमाला से अलकृत भगवान के दर्शन से भक्तजनों का सताप मिट जाता है, अत. यह तुलसीधारण ही भगवत्कृत महोपकार है। अर्थात् तुलसीधारी अपने दर्शन से भक्तों का ताप मिटाने के सदुद्देश्य से ही भगवान किसीकी प्रार्थना के विना, स्वयमेव अपने को तुलसी माला से सजाते है। तथा च यह तात्पर्य हुआ कि इस प्रकार सर्वदा भक्तो के विषय में उपकार ही करने के स्वभाववाले भगवान कभी मेरे हृदय से दूर न होंगे; परतु सर्वथा स्वतत्र होने के कारण यदि कदाचित् वे दूर हट भी जाये तो और क्या होगा? मेरी सत्ता ही उड जायगी ॥ .... (६)

(गाथा.) यानोट्टि येन्नुळ् इरुत्तुव मेन्निलन् ※ तानोट्टि वन्दु एन् तनिनेञ्जै वञ्जित्तु ※
ऊनोट्टि निन्ऱु एन्नुयिरिल् कलन्दु ※ इयल्वान् ओट्टुमो इनियेन्नै नेहिल्गवे ॥ ७ ॥

**न तावदहं स्वकीयोद्यमेन भगवन्तं स्वात्मनि निवेशयितुं व्यवसितः। अपि तु स्वयमेव कृतप्रतिज्ञस्सन् समेत्य मम मनो वञ्चयित्वा मम वपुषि चात्मनि च संश्लिष्य विराजमानो भगवान् कथमिव मद्विश्लेषं सहेत ॥**

मुनिवरोऽयमधस्तात् ※ वळवेळुलहु ※ शीर्षके पञ्चमे दशके स्वनैकर्श्यानुसन्धानतस्तं भगवन्तं विहातुमुपाक्रस्तेत्यवगतवन्त. केचित् 'भगवन् मुनीन्द्र! भवदीया प्रवृत्तिस्तु न विचाराही प्रतिभाति; तदुपरि प्राकृतमण्डलस्यास्य चर्याऽप्यतिराश्चर्यजननी हहो! भगवान् सोऽपि नियोगपर्यनुयोगानर्हस्सन्नप्य इत्यविषादम्।

सोऽपि भवन्तं विस्रष्टुमीष्टे' इति कथयेयुरिति कृत्वा गाथामिमामाह मुनिसार्वभौमः। आवयोः [भगवतो मम च] योऽयं संबन्धस्संजातोऽस्ति, स कीदृग्विध इति युष्माभिर्विमर्शनीयम्। संबन्धस्यास्य समुत्पत्तये न मया कृपिलेशोऽपि कृतः; अप्रतिषेधोऽपि नासीन्मयि। स एव भगवान् मत्संबन्धं परमप्रयोजनं मन्वानः "पराङ्कुशमुनिना सह संबन्धे लब्धे जीवेयम्, न चेद्विलीयेय" इति सुदृढप्रतिज्ञस्सन्नुपेत्य स्वकीयविप्रलम्भवैदग्ध्येन मां व्यामोह्य मयि सर्वाङ्गीण संश्लेषमाकलय्य अलभ्यलाभसंतुष्ट इव विभाति। तत्तादृशो भगवानसौ स्वयमपि न विजह्यात्, मामपि न हापयेदित्युक्तं भवति॥ .... .... .... (७)

—* सातवीं गाथा—यानोट्टि येन्नुळ् इरुत्तुवमेन्निलन् *—

**मैंने तो अपने प्रयत्न से भगवान को अपने हृदय में रखना नहीं चाहा; किंतु स्वयं भगवान ही प्रतिज्ञापूर्वक मेरे मन को धोखा देकर, मेरे शरीर व आत्मा से मिलकर विराजमान हैं। फिर ऐसे आप, क्या मेरे विश्लेप का कभी सहन करेंगे?**

"वळवेळुलहु" नामक पिछले पाचवें दशक मे आळ्वार ने अपनी नीचता का अनुसंधान करते हुए भगवानको छोड कर दूर भाग जाना चाहा न? यह अर्थ जाननेवाले किसीने उनसे पूछा, कि, "हे मुनिवर! आपका स्वभाव सदा एकरूप नहीं, परंतु क्षणे क्षणे बदलता रहता है; अतः उस पर विश्वास रखना कठिन है; (अर्थात् यह नहीं कहा जा सकता कि भगवान से मिलकर ही रहने की आपकी वर्तमान इच्छा कायम रहेगी)। एतदुपरात आप अब संसारमंडल में विराजमान है; इसका भी स्वभाव अनिश्चित है। एवं भगवान भी सर्वथा स्वतंत्र हैं, जिससे वे अपनी इच्छा के अनुसार चाहे जो काम कर सकते हैं, माने आपको छोड भी सकते हैं। तथाच आप कैसे निश्चय कर सकते हैं कि अपने को भगवान से विरह नहीं होगा?" इस प्रश्न का प्रत्युत्तर प्रकृत गाथा में दिया जा रहा है। यह तात्पर्य है—हाल में भगवान के साथ मेरा जो संबंध (माने संश्लेष) बना है, इसका स्वरूप तुम्हें अविदित है। मैंने तो यह संबंध पाने का किंचित् भी प्रयत्न नहीं किया; इतना ही नहीं; यह संबंध पाने की मेरी इच्छा तक न रही। परंतु स्वयं भगवान ही मेरे संबंध को अलभ्यलाभ मानते हुए, यों सुदृढ प्रतिज्ञा कर कि, "आळ्वार का संबध पाने पर ही मैं जीवित रह सकूंगा, अन्यथा शरीर छोड दूंगा" मेरे पास पधार कर, अपने कपट करने के सामर्थ्य से मेरे मन में व्यामोह पैदा कर मेरे साथ सर्वावयव संश्लेप पाकर अपनेको कृतार्थ मानते हुए विराज रहे हैं। अतः यह सर्वथा अशक्य है कि ऐसे भगवान कभी मुझे छोड दें, अथवा मुझे दूर हट जाने का अवकाश दें॥ .... .... .... .... (७)

(गाथा.) एन्नै नेहिळ्हिकिलुम् एन्नुडै नन्नेञ्जन्तन्नै * अहल्विक्क तानुम् किल्लानिनि *
पिन्नै नेडुम् पणैत्तोळ् महिळ् पीडुडै * मुन्नै यमरर् मुळुमुदलाने ॥ ८ ॥

**नीलादेवीसुभगभुजाश्लेपसमुदित्वरहर्षभूमा नित्यसूरिसर्वस्वभूतश्च भगवान् मद्वियोगं समुत्पादयन्नपि कदाचित्, ममान्तःकरणं वियोजयितुं न कथञ्चिदपि शक्तस्स्यात्॥**

'स मां न विजह्यात्' अहं तं न विजह्याम्' इति कथनं विफलम्; दुर्घटमपि घटयितुं शक्तस्स इति हेतुना कामं स मा विजहातु; अहमपि तं विजहामीति चास्तु। मदीयं मनो विश्लेपयितुं तु सोऽपि परिवृढो न प्रभवेन्नाम। एवं सुदृढोक्तौ किं निदानमिति चेत्, अनुग्रहमयी नित्यमज्ञातनिग्रहा च नीलादेवी खलु तन्नित्यसंश्लिष्टा वर्तते; तद्विश्वासबलादेवाहमेव प्रतिजाने। न केवलमेतावदेव; नित्यसूरिपरिषन्निर्वाहकश्च खल्वसौ; तेषां पुरतो न शक्नुयादसावकृत्यं किमपि कर्तुम्। अत एव सुदृढं प्रतिजाने॥ .... (८)

—* आठवी गाथा—एन्नै नेहिळ्क्किलुम् *—

**नीलादेवी के विशाल भुजों का आलिंगन कर अत्यधिक आनंद पानेवाले और नित्यसूरियों के सर्वस्वभूत नाथ भगवान कदाचित् मुझसे वियुक्त भी होते होंगे; तथापि वे किसी प्रकार मेरे मन को अपने से छुडा नहीं सकेंगे॥**

यद्यपि 'अघटितघटनासमर्थ' विरुदधारी भगवान कदाचित् मुझको छोड भी सकते होंगे; एवं संसारमंडल में निवास करनेवाला मैं भी उनको छोड सकता हूंगा। तथापि सर्वशक्त वे सर्वेश्वर भी किसी अवस्था में मेरे मन को अपने से छुडा नहीं सकेंगे। मैं इस कारण यह दृढ प्रतिज्ञा कर रहा हूं कि वे भगवान साक्षात् अनुग्रहस्वरूपिणी और दंड देने के काम से सर्वथा अपरिचित नीलादेवी से नित्यसंश्लिष्ट विराजते हैं। पुरुषकारभूत उनके सांनिध्य में मुझे विश्लेष मिलना अशक्य है। इतना ही नहीं; भगवान नित्यसूरियों के भी निर्वाहक हैं; ऐसे आप, स्वतंत्र होते हुए भी, उनके सामने कैसे यह अकार्य (मुझे विश्लेष देना) कर सकते हैं? अतः मैं सुदृढ विश्वास कर सकता हूं कि मुझे कभी विश्लेष न होगा॥ (८)

**(गाथा.) अमरर् मुळुमुदल् आहिय आदियै * अमर र्केमुदीन्द आयर् कोळुन्दै ***
**अमर पळुम्प तुळावि येन्नावि * अमर चाळुवित्तु इनि यहलुमो॥ ९॥**

**नित्यसूरीणां स्वरूपस्थितिप्रवृत्तिनिदानभूतम्, इन्द्रादीनाममराणाममृतप्राशनप्रवणम् गोपालकुलकिसलयं च भगवन्तं ममात्मा पृथगुपलम्भव्यवहारयोग्यताविरहितस्सन् समाश्लिषत्। अतश्च नैव विश्लेषप्रसक्तिः॥**

गुणगुणिनोः क्रियाक्रियावतोः जातिव्यक्त्योश्च यथा पृथगुपलम्भो न संभवति, तथैव तस्य मम चेति भक्तव्यता हि समुत्पन्ना; तथाच आवयोर्विश्लेषानुदयकथनम् अप्रसक्तप्रसञ्जनमेवेति चारुतरमुच्यते गाथयाऽनया। अत्रेदमन्वेयम्। सिद्धान्ते * जगत्सर्वं शरीरं ते * इत्युक्तरीत्या, * यस्य पृथिवी शरीरम्.......यस्यात्मा शरीरम् * इत्याम्नातरीत्या च चिदचिदात्मकं सर्वं वस्तुजातं भगवतः शरीरं सत् पृथक्स्थित्युपलम्भानर्हमेवेति परमार्थः। एवं च जीवात्मपरमात्मनो विश्लेषकथाया एव नावसरः। कथं तर्हि दिव्यप्रबन्धेष्वन्यप्रबन्धेषु च संश्लेषविश्लेषवार्तोपलम्भ इति शङ्का जायेत। अत्रैतदवगन्तव्यम्। भगवतो दिव्यात्मस्वरूपं दिव्यमङ्गलविग्रह इति द्वितयमस्ति। * इच्छागृहीताभिमतोरुदेहः * इति पुराणरत्नोक्तरीत्या भक्तजनानुभवैकश्रद्धया परेण पुंसा परिगृह्यमाणो दिव्यमङ्गलविग्रहो यदाऽनुभवगोचरो भवति, तदा संश्लेषव्यपदेशः, यदा तु न तथा भवति तदा विश्लेषव्यपदेशः इति॥

—* नवमी गाथा—अमरर् मुळुमुदलाहियवीदानै *—

**नित्यसूरियों के स्वरूपस्थितिप्रवृत्तियों के हेतुभूत, इंद्रादिदेवों को अमृत पिलानेवाले, और गोपकुलतिलक भगवान के साथ मेरी आत्मा इस प्रकार ठीक मिल गयी कि उसका उनसे अलग अस्तित्व ही न देखा जायँ, अतः उनसे अलग होने का प्रसंग ही नहीं बनेगा ॥**

इस गाथा में यह अंश बताया जाता है कि भगवान और आळ्वार के बीच में सपन्न यह मिलाप गुण-गुणवान्, क्रिया-क्रियवान् अथवा जाति-व्यक्तियों के मिलाप जैसा अपृथक्सिद्ध संबंध है, अर्थात् यह संबंध ऐसा है कि इसकी वजह से एक दूसरे को छोड नहीं सकता। अतः आळ्वार कहते हैं कि अब मुझे भगवान से छूट जाने का प्रसंग ही नहीं बनेगा। यद्यपि "जगत्सर्वं शरीरं ते" इत्यादि प्रमाण के अनुसार, एवं "यस्य पृथिवी शरीरम् . यस्यात्मा शरीरम्" इत्याद्युपनिषद के अनुसार वेदांतियों का सिद्धांत है कि चेतनाचेतनरूप समस्त पदार्थ ही भगवान का शरीर होकर उनसे अविनाभूत रहते हैं, अतः किसी वस्तु को भगवान से अलग रहना अशक्य है, अतः आळ्वार भी कभी भगवान से विश्लिष्ट न रहे। तथाच दिव्य-प्रबंधों में आळ्वार, तथा अन्यत्र भक्तलोग जो अपने भगवत्संश्लेष अथवा विश्लेष की बात करते हैं, ये सभी अनुचित-सी प्रतीत होंगी। तथापि भगवान के दिव्यमंगल विग्रह से ही संश्लेषविश्लेष की ये बातें की जाती हैं। अर्थात् भक्तलोग भगवान के दिव्यात्मस्वरूप से मिलकर रहने मात्र से अपने को कृतार्थ अथवा प्रसन्न नहीं मानते, किंतु सदा उनके दिव्यमंगलविग्रह के ही दर्शन इत्यादि अनुभव करना चाहते हैं। परंतु ये दर्शन कभी मिलते हैं और कभी नहीं मिलते। जब यह अनुभव मिलें तब संश्लेष है, और जब यह न मिलें तब विश्लेष है। "इच्छागृहीताभिमतोरुदेह" इत्यादि पुराणरत्न स्पष्ट कहता है कि भगवान भक्तों पर अनुग्रह करने की इच्छा से उनके और अपने इष्ट, सुंदर दिव्यमंगलविग्रह लेते हैं। इस प्रकार संश्लेषविश्लेषों की बातें ठीक संगत होती हैं ॥ (९)

(गाथा) अहलि लहलुम् अणुहि लणुहुम् * पुहलु मरियन् पोरुवल्ल नेम्मान् *
निहरिलवन् पुहल् पाडि यिळैप्पिलम् * पहलुम् मिरवुम् पडिन्दु कुडैन्दे ॥ १० ॥

**स्वसकाशे क्षुद्रफलमुपलभ्य दवीयस्सु जनेषु स्वयमपि दवीयान्, अनन्यप्रयोजनतया सन्तत-सन्निहितेषु सत्सु स्वयमपि नेदीयान्, प्रतिकूलानां दुष्प्रापः अनुकूलानामप्रतिहतोपसर्पणश्च यः, असदृशस्य तस्य भगवतो यशांसि दिवारात्रमविश्रान्तमनुभुञ्जीय ॥**

स्वसंश्लिष्टभगवद्गुणविशेषमनुभूय, एवं निरन्तरमनुभवे कृतेऽपि स्वस्य पर्याप्त्यनुदयमभिदधाति मुनिवरो गाथयाऽनया। भगवतः परमभोग्यताकथनं हि दशकस्यास्य प्रमेयम्। तादृश्या भोग्यतायां दत्तदृष्टयो जना भगवत्सकाशे न किमपि प्रयोजनं लिप्सेरन्, लिप्सेरन् यदि केचित् * वरीश! वर्तेय सदा त्वदन्तिके * इति श्रीकूरेशसूक्तरीत्या सदा भगवतस्सविधे वर्तनमेव परमप्रयोजनमन्यत्रस्य तत्तदेव लिप्सेरन्। ये तु क्षुद्रं फलं किमपि कामयमानास्तल्लाभाय भगवन्तमुपसृत्य लब्ध्वाऽथ निवर्तन्ते, तानधिकृत्य भगवानतीव निर्विण्णहृदयो

भूत्वा स्वयमुदास्ते। ये तावदाभिमुख्यप्रदर्शनेन क्षुद्रफलनिस्पृहास्सन्त संनिदधते, तेषु स्वयमपि सदा संनिहितो भवति इत्यसौ गुण. प्रथमपादेनान्वभावि। अथ, प्रतिकूलानां दुष्प्राप इत्यादिना कौरवाणां विषये पाण्डवानां विषये च भगवतो वासुदेवस्य वर्तनमनुस्मार्यते ॥ .... .... (१०)

—* दसवीं गाथा—अहलिलहलुम् अणुहिलणुहुम् *—

**अपने से कुछ अल्प फल लेकर दूर निकल जानेवालों से स्वयं भी दूर होनेवाले, अनन्य-प्रयोजन होकर अपने साथ ही रहना चाहनेवालों से स्वयं भी मिलनेवाले, प्रतिकूलों को पाने में अशक्य, अनुकूलों को सुप्राप, एवं उक्त प्रकारों से अद्वितीय भगवान के दिव्ययशों का दिनरात गाकर अनुभव करेंगे ॥**

इस गाथा में आळ्वार यों कहते हैं कि मेरे साथ संश्लेष करनेवाले भगवान का गुणगान करता हुआ, कल्पान्त तक उनका अनुभव करने पर भी मैं तृप्त नहीं होऊंगा। यह अर्थ बताया गया कि भगवान की भोग्यता का वर्णन करना ही प्रकृत दशक का लक्ष्य है। ऐसी भोग्यता की परवाह नहीं करते हुए कितने लोग भगवान से कुछ अल्प फल पाकर निकल जाते हैं। भक्तजन तो "वरीश! वर्तेय सदा त्वदन्तिके" (हे वरदराज भगवन्! मैं सदा के लिए आपके पास ही रहूं) इत्यादि श्री कूरेश स्वामीजी की श्रीसूक्ति के अनुसार भगवान की संनिधि में रहना ही परम पुरुषार्थ मानते हुए वही मांगते हैं। इनमें से, जो अल्प फल पाकर भगवान को छोड निकल जाते हैं, उनके विषय में भगवान बहुत दुःखपूर्वक, उदासीन रहते हैं, इनके बदले में जो लोग क्षुद्र फल की आशा छोड कर भगवान के अभिमुख होते हैं, उनके विषय में भगवान स्वयं बहुत प्रसन्न होकर, स्वयं सदा उनके पास ही विराजते हैं—यह भगवान का विलक्षण गुण गाथा के पहले पाद में बतलाया गया। [प्रतिकूलों के पाने में अशक्य] इत्यादि से कौरवों तथा पाण्डवों के विषय में श्री कृष्णभगवान के आचरण की याद दिलायी जाती है। (भगवान कौरवों के वश न हुए, परन्तु पाण्डवों के दास तक बन गये) ॥ .... (१०)

(गाथा.) कुडैन्दु वण्डुण्णुम् तुळाय् मुडियानै * अडैन्द तेन्कुरुहूर् शठकोपन् *
मिडैन्द शोल्तोडै आयिर त्तिप्पत्तु * उडैन्दु नोयूहळै ओडुविक्कुमे ॥ ११ ॥

**अवगाढचञ्चरीकोपभुक्तमाध्वीकदिव्यतुलसीस्रगलंकृतमूर्धानं भगवन्तं प्रपन्नेन श्रीकुरुकापुरावतीर्णशठकोपसूरिणा विज्ञापिते सदुक्तिसान्द्रे सहस्रे दशकमिदं भक्तानां भगवत्प्राप्तिप्रतिबन्धकवर्गं शिथिलीकुर्यात् ॥**

दशकेऽस्मिन्ननुबुभुक्षितभोग्यतागुणस्य साक्षिभूतं विशेषणं विन्यस्यते अवगाढचञ्चरीकेत्यादि। भगवान् स्वदिव्यमकुटे तुलसीस्रजं यद्धारयति तत् स्वयमेव सर्वरक्षक इति ख्यापनायेति बहवो मन्येरन्, वस्तुस्थितिश्च तथा स्यान्नाम। मुनिवरस्तु न तथात्राभिमन्यते, तद्भोग्यतयैव स्वयमाकृष्टचित्तो भवन् विशेषणमिदं विन्यस्यति। ईदृशभोग्यतानुभवजनितहर्षप्रकर्षपरीवाहरूपतया श्री शठकोपमुनिवरेण * पदानां सौभाग्यादनिमिष-

गुणेषु आर्जवमभ्यर्हितमित्यवधेयम् । पञ्चवटीमुपागता शूर्पणखा भगवन्तं रामचन्द्रमुपसृप्य * आगतस्त्वमिमं देशं कथं राक्षससेवितम् । किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ॥ * इत्यन्वयुङ्क्त । एवमनुयुक्तो दाशरथिस्तस्याः कुटिलचित्तवृत्तिमवजग्मिवानपि स्वयं कौटिल्यलेशमप्यनवलम्बमानः * आसीद्दशरथो नाम राजा * इत्युपक्रम्य सर्वं यथायथमाचचक्षे । तदिदं कथयन् भगवान् वाल्मीकिः तत्रैवमवतारयति * ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे * इति । भगवान् कौटिल्यमशतोऽपि न जानातीत्युक्तं भवति । कौटिल्यादन्यदजानद्भिरस्माभिस्सह सश्लिष्यन् भगवान् अस्मान् स्ववर्त्मन्यनाकर्षन् अस्मदीयमेव वर्त्म स्वयमनुव्रजन्ननुभावयतीत्येतदेव भगवत आर्जवं नाम ।

दशकेऽस्मिन् अन्तिमगाथायाम् "सलिलसवर्णस्य भगवतो गुणमधिकृत्य" इति यदनुगृहीतम् तत् आर्जवगुणदृष्ट्यैवेति श्रीपराशरभट्टार्याणा मुपन्यासः । सलिलं हि यत्रयत्राकृष्यते तत्रतत्र स्वयमागच्छति; निम्नेतरस्थलेष्वपि सदुपायेनाकृष्टं सदायात्येव । तथा चार्जवगुणानुभवो दशकस्यास्य प्रमेयमिति सुस्थम् । वेदान्ताचार्या अपि तात्पर्यरत्नावल्याम् * निरुपधि मृजुता नीरवर्णे जगाद * इति, * प्रकृतिऋजुतया * इति च; सारे * सुशील स्वाराधं सरसभजन स्वार्जवगुणम् * इति च श्लोकैरिमामेव पद्धतिमाद्रियन्ते स्म ॥ *

**(हि.) पहले शतक में आठवें दशक की अवतारिका**—पिछले दशक में भगवान की भोग्यता का अनुभव करने के बाद, अब आळवार उनके आर्जवगुण का अनुभव करने को उतरते हैं । आर्जव माने कुटिलता का अभाव, अथवा सीधापन । तन मन वाणियों का एक रूप में रहना सीधापन है, और उनका अलग अलग प्रकार रहना कुटिलता है । अत एव कहा जाता है कि "मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यत् दुरात्मनाम् । मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥" अर्थात् दुष्ट लोग अपने मन में एक विचार रखते हैं, बोली में दूसरा बोलते हैं और काम में तीसरा कर देते हैं; महात्मा लोग तो, मनमें जो विचार करते, वाचा वही बोलते और शरीर से वही करते है । अत्र शास्त्र बताते है कि भगवान में यह सीधापन पुष्कल मात्रा में विराजमान है । अत एव श्री यामुनाचार्य स्वामीजी ने भी स्तोत्ररत्न में भगवान के कल्याणगुणों में इस गुण को मिला दिया—"वशी वदान्यो गुणवान् ऋजुः ।" श्रीरामायण में भी इसका वर्णन मिलता है । तथाहि—पंचवटी मे विराजमान श्रीरामचद्रजी के पास आकर शूर्पणखा पूछने लगी कि, "तुम लोग कौन हैं, किधरके हैं, क्योंकर इधर आये है" इत्यादि । श्रीरामचद्र जी जानते थे कि वह कपटी राक्षसी है जिसे अपना परिचय बताने की कोई आवश्यकता नहीं है । तथापि उन्होंने "आसीद्दशरथो नाम राजा" इत्यादि से अपनी सारी कथा बतायी । भगवान के इस सीधापन से अपहृतचित्त होकर वाल्मीकीजी उस प्रकरण में लिखते हैं कि "ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे" (सीधी बुद्धि के होने से श्रीरामचद्रजी अपना सारा चरित्र बताने लगे ।) तथा न इस प्रकरण का यह अर्थ हुआ कि भगवान कुटिलता से सर्वथा अपरिचित हैं । सर्वथा कुटिल हमसे मिलने के समय, भगवान हमें अपने रास्ते में न खींचते हुए, स्वय हमारे मार्ग में आकर, अर्थात् हमारे साथ एकरस होकर जो मिलते हैं, यही उनके आर्जवगुण का प्रयोजन है । भक्तों को भगवान के इस गुण का चिंतन करना बहुत आवश्यक है; क्योंकि इसके चिंतन से वे उन पर विश्वास कर सकते हैं ।

गुणेषु आर्जवमभ्यर्हितमित्यवधेयम्। पञ्चवटीमुपागता शूर्पणखा भगवन्तं रामचन्द्रमुपसृत्य * आगतस्त्वमिमं देशं कथं राक्षससेवितम्। किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ॥ * इत्यन्वयुङ्क्त। एवमनुयुक्तो दाशरथिस्तस्या कुटिलचित्तवृत्तिमवगमितवानपि स्वयं कौटिल्यलेशमप्यनवलम्बमानः * आसीद्दशरथो नाम राजा * इत्युपक्रम्य सर्वं यथायथमाचचक्षे। तदिदं कथयन् भगवान् वाल्मीकि तत्रैवमवतारयति * ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे * इति। भगवान् कौटिल्यमशतोऽपि न जानातीत्युक्तं भवति। कौटिल्यादन्यदजानद्भिरस्माभिस्सह सश्लिष्यन् भगवान् अस्मान् स्ववर्त्मन्यनाकर्षन् अस्मदीयमेव वर्त्म स्वयमनुव्रजन्ननुभावयतीत्येतदेव भगवत आर्जवं नाम।

दशकेऽस्मिन् अन्तिमगाथायाम् "सलिलसवर्णस्य भगवतो गुणमधिकृत्य" इति यदनुगृहीतम् तत् आर्जवगुणदृष्टयैवेति श्रीपराशरभट्टार्याणा मुपन्यासः। सलिलं हि यत्रयत्राकृष्यते तत्रतत्र स्वयमागच्छति, निम्नेतरस्थलेष्वपि सदुपायेनाकृष्य सदायात्येव। तथा चार्जवगुणानुभवो दशकस्यास्य प्रमेयमिति सुस्थम्। वेदान्ताचार्या अपि तात्पर्यरत्नावल्याम् * निरुपधि मृजुता नीरवर्णे जगाद * इति, * प्रष्टतिऋजुतया * इति च, सारे * सुशीलः स्वाराधः सरसभजनः स्वार्जवगुणम् * इति च श्लोकैरिमामेव पद्धतिमाद्रियन्ते स्म ॥ *

**(हि.) पहले शतक में आठवें दशक की अवतारिका**—पिछले दशक में भगवान की भोग्यता का अनुभव करने के बाद, अब आळ्वार उनके आर्जवगुण का अनुभव करने को उतरते हैं। आर्जव माने कुटिलता का अभाव, अथवा सीधापन। तन मन वाणियों का एक रूप में रहना सीधापन है, और उनका अलग अलग प्रकार रहना कुटिलता है। अत एव कहा जाता है कि "मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यत् दुरात्मनाम्। मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥" अर्थात् दुष्ट लोग अपने मन में एक विचार रखते हैं, बोली में दूसरा बोलते हैं और काम में तीसरा कर देते हैं, महात्मा लोग तो, मनमे जो विचार करते, वाचा वही बोलते और शरीर से वही करते हैं। अब शास्त्र बताते हैं कि भगवान में यह सीधापन पुष्कल मात्रा में विराजमान है। अत एव श्री यामुनाचार्य स्वामीजी ने भी स्तोत्ररत्न में भगवान के कल्याणगुणों में इस गुण को मिला दिया—"वशी वदान्यो गुणवान् ऋजुः।" श्रीरामायण में भी इसका वर्णन मिलता है। तथाहि—पञ्चवटी म विराजमान श्रीरामचद्रजी के पास आकर शूर्पणखा पूछने लगी कि, "तुम लोग कौन हैं, किधरके हैं, क्योंकर इधर आये हैं" इत्यादि। श्रीरामचद्र जी जानते थे कि वह कपटी राक्षसी है जिसे अपना परिचय बताने की कोई आवश्यकता नहीं है। तथापि उन्होंने "आसीद्दशरथो नाम राजा" इत्यादि से अपनी सारी कथा बतायी। भगवान के इस सीधापन से अपहृतचित्त होकर वाल्मीकीजी उस प्रकरण में लिखते हैं कि "ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे" (सीधी बुद्धि के होने से श्रीरामचद्रजी अपना सारा चरित्र बताने लगे।) तथा च इस प्रकरण का यह अर्थ हुआ कि भगवान कुटिलता से सर्वथा अपरिचित हैं। सर्वथा कुटिल हमसे मिलने के समय, भगवान हमें अपने रास्ते में न खींचते हुए, स्वयं हमारे मार्ग मे आकर, अर्थात् हमारे साथ एकरस होकर जो मिलते हैं, यही उनके आर्जवगुण का प्रयोजन है। भक्तों को भगवान के इस गुण का चिंतन करना बहुत आवश्यक है, क्योंकि इसके चिंतन से वे उन पर विश्वास कर सकते हैं।

गुणेषु आर्जवमभ्यर्हितमित्यववेयम्। पञ्चवटीमुपागता शूर्पणखा भगवन्तं रामचन्द्रमुपसृप्य * आगतस्त्वमिमं देशं कथं राक्षससेवितम्। किमागमनकृत्यं ते तत्त्वमाख्यातुमर्हसि ॥ * इत्यन्वयुङ्क्त। एवमनुयुक्तो दाशरथिस्तस्याः कुटिलचित्तवृत्तिमवजग्मिवानपि स्वयं कौटिल्यलेशमप्यनवलम्बमानः * आसीद्दशरथो नाम राजा * इत्युपक्रम्य सर्वं यथायथमाचचक्षे। तदिदं कथयन् भगवान् वाल्मीकि तत्रैवमवतारयति * ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे * इति। भगवान् कौटिल्यमशक्तोऽपि न जानातीत्युक्त भवति। कौटिल्यादन्यदजानद्भिरस्माभिस्सह सश्लिष्यन् भगवान् अस्मान् स्ववर्त्मन्यनाकर्षन् अस्मदीयमेव वर्त्म स्वयमनुव्रजन्ननुभावयतीत्येतदेव भगवत आर्जवं नाम।

दशकेऽस्मिन् अन्तिमगाथायाम् "सलिलसवर्णस्य भगवतो गुणमधिकृत्य" इति यदनुगृहीतम् तत् आर्जवगुणदृष्ट्यैवेति श्रीपराशरभट्टार्याणा मुपन्यासः। सलिलं हि यत्रयत्राकृष्यते तत्रतत्र स्वयमागच्छति; निम्नेतरस्थलेष्वपि सदुपायेनाकृष्टं सदायात्येव। तथा चार्जवगुणानुभवो दशकस्यास्य प्रमेयमिति सुस्थम्। वेदान्ताचार्या अपि तात्पर्यरत्नावल्याम् * निरुपधि मृजुतां नीरवर्णे जगाद * इति, * प्रकृतिऋजुतया * इति च; सारे * सुशील स्वाराध सरसभजन स्वार्जवगुणम् * इति च श्लोकैरिमामेव पद्धतिमाद्रियन्ते स्म ॥ *

**(हि.) पहले शतक में आठवें दशक की अवतारिका**—पिछले दशक में भगवान की भोग्यता का अनुभव करने के बाद, अब आळ्वार उनके आर्जवगुण का अनुभव करने को उतरते हैं। आर्जव माने कुटिलता का अभाव, अथवा सीधापन। तन मन वाणियों का एक रूप में रहना सीधापन है, और उनका अलग अलग प्रकार रहना कुटिलता है। अत एव कहा जाता है कि "मनस्यन्यत् वचस्यन्यत् कर्मण्यन्यत् दुरात्मनाम्। मनस्येकं वचस्येकं कर्मण्येकं महात्मनाम् ॥" अर्थात् दुष्ट लोग अपने मन में एक विचार रखते हैं, बोली में दूसरा बोलते हैं और काम में तीसरा कर देते हैं; महात्मा लोग तो, मनमें जो विचार करते, वाचा वही बोलते और शरीर से वहीं करते हैं। अब शास्त्र बताते हैं कि भगवान में यह सीधापन पुष्कल मात्रा में विराजमान है। अत एव श्री यामुनाचार्य स्वामीजी ने भी स्तोत्ररत्न में भगवान के कल्याणगुणों में इस गुण को मिला दिया—"वशी वदान्यो गुणवान् ऋजुः।" श्रीरामायण में भी इसका वर्णन मिलता है। तथाहि—पंचवटी में विराजमान श्रीरामचद्रजी के पास आकर शूर्पणखा पूछने लगी कि, "तुम लोग कौन हैं, किधरके हैं, क्योंकर इधर आये हैं" इत्यादि। श्रीरामचद्र जी जानते थे कि वह कपटी राक्षसी है जिसे अपना परिचय बताने की कोई आवश्यकता नहीं है। तथापि उन्होंने "आसीद्दशरथो नाम राजा" इत्यादि से अपनी सारी कथा बतायी। भगवान के इस सीधापन से अपहृतचित्त होकर वाल्मीकीजी उस प्रकरण में लिखते हैं कि "ऋजुबुद्धितया सर्वमाख्यातुमुपचक्रमे" (सीधी बुद्धि के होने से श्रीरामचद्रजी अपना सारा चरित्र बताने लगे।) तथा च इस प्रकरण का यह अर्थ हुआ कि भगवान कुटिलता से सर्वथा अपरिचित हैं। सर्वथा कुटिल हमसे मिलने के समय, भगवान हमें अपने रास्ते में न खींचते हुए, स्वयं हमारे मार्ग में आकर, अर्थात् हमारे साथ एकरस होकर जो मिलते हैं, यही उनके आर्जवगुण का प्रयोजन है। भक्तों को भगवान के इस गुण का चिंतन करना बहुत आवश्यक है; क्योंकि इसके चिंतन से वे उन पर विश्वास कर सकते हैं।

इस दशक की अंतिम गाथा का यह वचन है कि, "नीरवर्ण भगवान को लक्ष्य कर।" श्री पराशर भट्टर स्वामीजी कहते थे कि इससे आर्जवगुण सूचित किया जाता है। जल का यह स्वभाव है कि वह बुलाये जाने पर चाहे जैसे स्थल आता है। उचित उपायों से उसे ऊँची जगह पर भी ले जाना शक्य है। पूर्वोक्त प्रकार, यह तो आर्जव का सूचक है। अतः आचार्यों का सिद्धांत हुआ कि यह सारा दशक ही आर्जव का प्रतिपादक है। श्री वेदान्तदेशिक स्वामीजी ने भी अपनी द्रमिडोपनिषत्तात्पर्यरत्नावली में, "निरुपधिमृजुता नीरवर्णो जगाद" (नीरवर्ण भगवान की अवच्छिन्न ऋजुता बतायी गयी), और "प्रकृति-ऋजुतया" (स्वाभाविक ऋजुता से), एवं द्रामिडोपनिषत्सार में "सुशीलः स्वाराध सरसभजनं स्वार्जवगुणम्" (भगवान को सौशील्यवान्, सुलभ-आराधनीय, परमभोग्य व श्रेष्ठ आर्जवगुणवाले बताया) इन शब्दों से प्रकृत दशक का यही तात्पर्य बतलाया ॥.... .... .... .... *

(गाथा.) ओडुम् पुळ्ळेरि * शूडुम् तण्डुळाय् *
नीडु निन्रवै * आडु मम्माने ॥ १ ॥

**शेषशेषाशनगरुडप्रमुखैर्नित्यसूरिभिस्सह संश्लिष्य रमोपभोगं कुर्वाणस्सर्वस्वामी भगवान् गरुत्मन्तं वाहनतया परिगृह्य व्रजति सरभसम्; शिशिरतुलसीस्रजमवतंसयति ॥**

गाथाया उत्तरार्धं विशेष्यवाचि। आर्जवगुणयुक्तो भगवान् ह्यत्र विशेष्यभूतः। स तावन्नित्यसूरि-सश्लेषैकरसिक इति प्रोच्यते पूर्वार्धानुभूयमानगुणानुकूल्याय। पतगराज वाहनतया स्वीकृत्य तेनोह्यमानस्सन् धावतीति, तुलसीस्रजमवतंसपदे निदधातीति च कथनेन आर्जवगुणानुभव कथमिव सिध्यतीति पृच्छा स्यात्। गरुत्मान् तुलसी च श्रीवैकुण्ठवास्तव्ये वस्तुनी, तयो. कौटिल्य सर्वथाऽप्यप्रसक्तम्; कुटिलकरणैरस्मादृशैस्सह आर्जवेन संश्लिष्यतीत्युक्तिर्युज्येत कामम्, स्वत कौटिल्यगन्धविरहितवस्तुसश्लेषतः कथमार्जवं प्रकाशेतेति प्रश्नः स्थाने। उच्यते। वैकुण्ठवासिना कौटिल्यगन्धोऽपि नास्तीति सत्यमेतत्। तेषा खलु सूरीणामनुभाव्यो विषय एक एव यद्यपि, तथाऽप्येकैकोऽपि सूरिरेकैका कैङ्कर्यवृत्तिं परिगृह्णाति; परिगृहीत वृत्तिभेदेन रुचिभेदो भवेदेव खलु। भगवांस्तावत्तत्र स्वकीयाया रुचे प्राधान्यमनिच्छन् तत्तत्सूरिगतरुचीनामेव प्राधान्य दिशन् तानुभूय तान् प्रमोदयति। भगवन्त स्वयमूढ्वा तत्रतत्र पर्यटितुमिच्छति सति तार्क्ष्ये तद्रुच्यानुगुण्येन त स्वात्मान वाहयति। तुलसी यदि कामयते 'भगवतोऽहमलङ्कारो भवानीति, तर्हि स तयैवालङ्कृतस्सन् तत्प्रहर्षणमुखेन स्वय प्रहृष्यति। एतदेव सूरिषु प्रकाश्यमान भगवत आर्जवम् ॥ .... .... .... (१)

**(हिंदी) अनंत गरुड विष्वक्सेनादि नित्यसूरियों से मिलकर रसानुभव करनेवाले सर्वस्वामी भगवान्, गरुत्मान के ऊपर सवार होकर तेज चलते हैं, और सुशीतल तुलसीमाला का धारण करते हैं ॥**

इस गाथा में [अनंतगरुड] इत्यादि उत्तरार्ध विशेष्य है, और [गरुत्मान के] इत्यादि पूर्वार्ध विशेषण है। यह अर्थ कहा गया कि इस दशक में आर्जवगुणवाले भगवान का वर्णन चलता है।

यही गुण पूर्वार्ध में उपवर्णित है। इसके अनुकूलतया यह कहा जा रहा है कि भगवान नित्यसूरियों के नित्यसंश्लेष का रसानुभव करते हैं। ऐसे भगवान गरुडारूढ तथा तुलसीधारी होकर अपने आर्जवगुण का प्रकाशन कर रहे हैं। यह समझना कुछ कठिन-सा होगा कि भगवान परमपदवासियों से मिलकर आर्जव गुण का प्रकाशन कैसे कर सकते हैं; क्योंकि परमपद में, जहा कुटिलताका अवकाश नहीं, सौशील्य का प्रकाशन होना भी अशक्य है। दया क्षमा इत्यादियों की भांति आर्जवगुण भी इस कुटिल ससार में ही प्रकाशित हो सकता है। इसका यह समाधान है—यह बात सोलह आने का सत्य है कि परमपद में सर्वथा कौटिल्य का अभाव है; तथापि उधर भगवान के आर्जव गुण का भी प्रकाशन हो सकता है। तथाहि—यह बात सर्वविदित है कि वहाके नित्यसूरी जन, सभी एक समान होते हुए भी, एकैक एकैक प्रकारकी भगवत्सेवा करते हैं। इन प्रसगों भगवान अपनी इच्छा की परवाह नहीं करते हुए उन उन सूरी की इच्छा के अनुगुणतया ही उनकी सेवा सकार कर उनको प्रसन्न करते हैं। अर्थात् यदि कभी गरुडजी की यह इच्छा हुई कि भगवान को अपनी पीठ पर विराजमान कर उनकी सेवा करनी चाहिए, तो भगवान निर्विकार ही उन पर सवार होकर उनकी इच्छा के अनुसार यात्रा करते हैं। एव कदाचित् यदि तुलसी की यह इच्छा हुई कि अब मुझे भगवान को सजाना चाहिए, तो भगवान तुरत उसका धारण कर उसे आनदित कर स्वय भी प्रहर्ष पाते हैं। इस प्रकार भगवान परमपदनिवासी सभी दिव्यसूरियों से अपने आर्जवगुण का प्रकाशन करते हैं॥ .... .... .... .... .... (१)

(गाथा.) अम्मानाय् प्पिन्नुम् * एम्माण्बु मानान् *
वेम्मावाय् कीण्ड * शेम्मा कण्णने ॥ २ ॥

**सर्वस्मात्परः स्वामी सन् क्रूरवाजिवेषधरकेशिनामकदैत्यवक्त्रविदारणः सरसिजायतविलोचनो भूत्वा तत्तादृशनानाचेष्टितरसिको भगवान्॥**

अधस्तनगाथाया नित्यविभूतिवर्तिनित्यसूरिविषये प्रकाश्यमानमार्जवमन्वभावि। गाथायामस्याम्—ततोऽवतीर्य विरोधिनिरसनपूर्वक ससारिषु प्रकाश्यमानमार्जवमनुभूयते। [सर्वस्मात्परः स्वामी सन्] इति पूर्वगाथोक्तार्थानुवाद। कृष्णजिघासया व्रज प्रति कसप्रचोदितेष्वसुरेषु वाजिवेषधर केशी नाम दैत्योऽन्यतम.। स एव तावत्स्वकीय वक्त्र सुमहत्तरमुद्घाट्य व्रजमशेष भक्षयितु प्रवृत्तो यदा, तदा कृष्णकिशोर स्वहस्ताभ्या तदीय वक्त्रमुत्पाट्य त व्यापादयामासेति कथा। तदानी भगवान् सचस्तन्निरसनमाकलय्य, "अवतारे कृते विरोधिवर्गसपातात् पुन पुन क्लेशो जायते, किमर्थमेव क्लेशोऽस्माभिरनुभाव्य ? स्वस्थाने दिव्येव वासे कृते क्लेशावकाशो नास्त्येव खलु, अत इत पर स्वस्थानगमनमेव वरम्" इत्यविभावयन् ससारिभिस्सह विहरणमेव परमप्रयोजन मन्यमानश्च सन् स्वकीयहार्दहर्षप्रकर्षसूचनाय सरसीरुहोपमविलोचनता प्रकाशयन् नानाचेष्टितानि पुन पुनरुद्भावयदित्येष महागुणोऽनुभूतोऽत्र॥ . . .. .... (२)

सर्वस्वामी होते हुए ही, क्रूर घोडे के रूप मे आये हुए केशिनामक दैत्यका मुख चीर डालनेवाले विशाल व रक्त नयनवाले श्रीकृष्ण, और भी ऐसे नानाविध चेष्टित करने मे रसिक होते हैं॥

पिछली गाथा में नित्यसूरियों के विषय में प्रकाशित किये जानेवाले भगवान के आर्जवगुण का अनुभव किया गया, इस गाथा मे परमपद से ससार में अवतार लेकर, विरोधियों का निरासपूर्वक प्रकाशित भगवान के आर्जव का अनुभव किया जा रहा है। [सर्वस्वामी] यह तो पिछली गाथा में उक्त अर्थ का अनुवाद है। कसप्रेषित नानाविध असुरों में से एक, केशिनामक दैत्य ने, बडे घोडे के रूप में बन आकर मुख खोलकर सारा वन निगलने की चेष्टा की। तब श्रीकृष्ण ने उसका मुख चीर कर सहार किया। इसके बाद भगवान ने यह विचार नहीं किया कि, "इस ससार में हमारे अवतार करने पर, यहा बारबार इन दुष्ट विरोधियों से लडते ही रहना पडेगा, हमें ऐसा दु ख भोगने की आवश्यकता कौन-सी है? परमपद में कभी यह दु ख न होगा। अत अबसे अवतारों को समाप्त कर परमपद में ही रह जाना उत्तम है।" परतु वे ससारियों के सहवास को ही परमपुरुषार्थ मानकर, उससे बहुत सतुष्ट होकर, अपनी विकसित आँखों से उस हर्ष का प्रकाशन भी करते हुए कमलनयन होकर, पुन पुन ऐसे अनेकविध चेष्टा करने में ही उत्साह दिखाते जो विराज रहे हैं, इस महागुण का कीर्तन यहा पर किया गया है॥ .... (२)

(गाथा.) कण्णावा नेन्नुम् * मण्णोर् विण्णोर्कु *
तण्णार् वेङ्कड(म्) * विण्णोर् वेर्प्पने ॥ ३ ॥

**भूतलवर्तिनां वैकुण्ठवर्तिनां च सदा नयनभूतः स भगवान् शिशिरवेङ्कटाद्रिनामक-दिव्यगिरिराजनिवासी ॥**

यमलपुत्रप्रसवित्री जननी उभयोरपि पुत्रयोर्मध्ये स्थित्वा यथा स्तन्य पाययति, तथा ससारिणां दिविषदां च रक्षार्थे उभयलोकमध्यस्थ श्रीवेङ्कटाद्रि मध्यास्ते उभयविभूतिनाथो भगवानिति चारुतरमुच्यते। तैत्तिरीयसहितायां चतुर्थकाण्डे षष्ठप्रपाठके * चक्षुर्देवानामुत मर्त्यानाम् * इत्याम्नायते। अत्र उतेति समुच्चय। देवानां मर्त्यानां च चक्षुरित्यर्थ। एतदेव श्रुतिवाक्य गाथायामस्यां पूर्वार्धत्वेन परिणतम्। स्वकार्य निर्वहणे स्वेषामक्षमत्व ससारिणां दिविषदां च अविशिष्टमित्युक्त भवति। शिशिरवेङ्कटाद्रीति शैशिर्यकथन सासारिक सकलतापनिवारकत्वनिबन्धनम्। नानातीर्थनिषेवितत्वेन अविश्रान्तनिर्झरपातेन च प्रात्यक्षिक शैत्य च विवक्षितम्॥

**भूलोकनिवासी तथा स्वर्गादिनिवासी सभी जनों के सदा नेत्रभूत विराजनेवाले भगवान सुशीतल दिव्य वेंकटाद्रि पर नित्यनिवास कर रहे हैं॥**

जैसे जुडवें बच्चों का जन्म देनेवाली माता बीच में रहकर दोनो को दूध पिलाती है, ठीक इसी प्रकार उभयविभूतिनाथ भगवान भी भूलोक तथा ऊपर के लोकों की रक्षा करने के लिए दोनों लोकों के बीच में श्री वेंकटाद्रि पर निवास करते हैं। तैत्तिरीय यजुस्सहिता के चौथे काड के छठे प्रपाठक में यह एक वाक्य है—"चक्षुर्देवानामुत मर्त्यानाम्"। इसका यह अर्थ है कि भगवान देव और मानवों के नेत्ररूपी है। यही अर्थ इस गाथा के पूर्वार्ध में उपवर्णित है। इसका यह तात्पर्य है कि अपने रक्षणादि कार्य करने में मानवों की भांति देव भी अशक्त होते हैं। सासारिक समस्त सताप मिटाने से, तथा सतत बहनेवाले निर्झरों के कारण शीतल होने से श्रीवेंकटाद्रि को [सुशीतल वेंकटाद्रि] कहने में आया है॥ ... (३)

(गाथा-) वेर्प्पै योन्रेडुत्तु * ओर्कं मिन्रिये *
निर्कु मम्मान् शीर् * कर्प्पन् वैहले ॥ ४ ॥

**गोवर्धनाभिधानमेकमद्रिमुद्धृत्य श्रान्तिलेशमन्तरेण सप्ताहं स्थितवतो भगवतो महागुणं सततमुपभुञ्जीय ॥**

गोवर्धनोद्धरणकथा सर्वविदिता सुप्रथिता । तत्र तावदार्जवमेव प्राधान्येन प्रकाशमानो महागुणः । दुर्जनेन एकस्य भागवतस्योत्पादितामपि व्यथां न महते मनागपि भगवानिति स्थिते, बिडौजसा युगपदेव अपरिमितगोगणगोपालवृन्दभरितस्य व्रजस्य समुत्पादिता सुमहतीं व्यथा कथमिव विषेहे ? महाद्रोहिणो वासवस्य शिरश्छेदो हि सद्यः कर्तव्यः, कुतो न कृतस्स इति वहव आशङ्केरन् । कृष्णस्य तावदभिसन्धिरेवमिह ; इन्द्रस्य भुक्तिमपहृतवता मया किं तत्प्राणापहारकेणापि भवितव्यमिति । एतदेवार्जवमिहानुभूयते । [ श्रान्तिलेशमन्तरेण सप्ताहं स्थितवतः ] इत्यत्र "क्षोणीध्र पुनरविमध्य सप्तरात्रम्....अम्लाना वरद ! तथाऽपि पाणयस्ते" इति श्रीकूरनाथगुरुवरसूक्तिरनुसन्धेया ॥ .... .... .. .... (४)

**(हिंदी) गोवर्धन नामक एक पहाड उठाकर, छत्र के रूप में उसे धारण कर, आयास के विना सात दिन रहनेवाले भगवान के महागुण का में नित्य संकीर्तन करूं ॥**

गोवर्धन पर्वत का धारण करना श्रीकृष्णभगवान का एक प्रसिद्ध चेष्टित है, जिससे मुख्यतया उनके आर्जवगुण का ही प्रकाशन किया जाता है । तथाहि—भगवान का यह स्वभाव है कि वे अपने किसी एक भक्त के विषय में किये जानेवाले अपराध का भी सहन नहीं कर सकते । ऐसे उन्होंने व्रजनिवासी समस्त गोगोपसमूहके विषय में महेंद्र के किये हुए (घोरवर्षण रूप) महापराध का कैसे सहन किया ? उसी क्षण में उन्हें भक्तजनद्रोही उस महापापी का सिर काट डालना था । परन्तु उन्होंने उसे अत्यल्प भी शिक्षा नहीं दी । इस विलक्षण कृत्य का कारण क्या है ? यही कि श्रीकृष्ण ने सोचा, "महेंद्र के भोजन का अपहरण करनेवाले मुझको क्या उसके प्राणों का भी अपहरण करना उचित होगा ? नहीं नहीं । अतः उसकी उपेक्षा करना ही पर्याप्त दंड है ।" इस महान आर्जवगुण का संकीर्तन यहा पर किया गया ॥ (४)

(गाथा.) वैहलुम् वेण्णेय् * कैक्कल न्दुण्डान् *
पोयू कलवाद् * एन्मेय् कलन्दाने ॥ ५ ॥

**सदा नवनीतभाण्डे बाहुम् आमूलं प्रसार्य नवनीतमास्वादितवान् सत्यमेव मम वपुषि समश्लिष्यत् ॥**

यथाऽहं भगवन्तमुत्सृज्य भगवतो गुणाननुभवामि, तथा सोऽपि परमः पुमान् मां विहाय मम वपुष्येवासक्त इत्याह मुनिवरो गाथयाऽनया । यथाहि मम तस्य गुणस्सततं धारकः, तथा तस्य आश्रितकरस्पर्शपावनं गव्यमेव सततभोग्यं भवति । नवनीते सञ्जातेन स्पृहातिशयेन स तावत् हस्तमपि बाहुं पात्रे प्रवेश्य गृहीत्वा समास्वाद्य गव्यगन्धिना स्वविग्रहेण मम हेयमपि वपुस्समाश्लिष्यदहहेति विस्मयस्तिमितो भवति मुनिवरः ॥ .... .... .... .... .... (५)

(हिंदी) अपने पूरे बाहु को बरतन में घुसाकर मक्खन उठाकर खानेवाले भगवान सत्य ही मेरे शरीर से मिल गये ॥

इस गाथा में आळ्वार यों कहते हुए आश्चर्य पा रहे हैं कि, "जैसे मैं भगवान के शुभगुणों का अनुभव करता हू, इसी प्रकार वे मुझे छोड, मेरे शरीर का ही अनुभव कर रहे हैं। जैसे मुझे उनके गुण ही धारक होते हैं, वैसे उन्हे अपने आश्रितों के हस्तस्पर्श से पवित्र बना हुआ मक्खन ही धारक होता है। अत उसपर अत्यधिक आशा करते हुए वे नवनीतपात्र में अपना सारा बाहु घुसाकर मक्खन खाकर उस सुगंध से विभूषित अपने भुज से अतिहेय मेरे शरीर का भी आलिंगन कर रहे हैं॥ .... (५)

(गाथा) कलन्दे नावि ∗ नलङ्गोंव् नायन् ∗
पुलन्कोंव् माणाय् ∗ निलम् कोण्डाने ॥ ६ ॥

मया सह संश्लिष्य मदात्मभूषणभूतं शेषत्वमपहृतवान् स्वामी सर्वेन्द्रियापहारचतुरवामनवेषधारी सन् भूमिं भिक्षित्वा स्वीकृतवान् ॥

अत्र उद्देश्यविधेययोर्नियमो न कोऽपि। यो महाबलित्वमपहृतवान् स एव मम स्वमपहृतवान्, यो मम स्वमपहृतवान् स एव महाबलित्वमपहृतवान् इत्युभयथाऽपि विवक्षणं मतम्। मुनिवरस्यास्य स्वम्— शेषत्वम्, तस्यापहरणं नाम शेषित्वे स्थापनम्। शेषभूतस्यापि चेतनस्य कदाचित् शेषत्वप्रतिभट शेषित्वमास्थेय भवति, कथमिति चेत्, शेषत्वादप्यभ्यर्हितस्य पारतन्त्र्यस्यापि परिपालनीयतया तादृशं पारतन्त्र्यं स्मारयन् भगवान् 'शठकोपमुनीन्द्र भो! भवान् सिंहासनमधितिष्ठतु, अहं भवतस्सेवां करवाणि' इति कथयेद्यदि, तर्हि पारतन्त्र्यपरतन्त्रेण मुनिवरेण तत्प्रतिषेधस्य कर्तुमशक्यत्वादयोग्यत्वाच्च ओमित्यभ्युपगम एव कर्तव्यो भवति। तथाऽभ्युपगमे शेषत्वं प्रनष्टमेव भवतीति सुगमम्। एतदेवोच्यते [मया सह संश्लिष्य मदात्मभूषणभूतं शेषत्वमपहृतवान्] इति। सैषा चर्या भगवत कौटिल्यकृत्यमिति मितधियो मन्येरन्। नव तथा। गायति स्म भगवान् स्वयम्—∗ ज्ञानी त्वात्मैव मे मतम् ∗ इति। ज्ञानी आत्मा भवति चेत् भगवान् शरीरं ननु भवति। नियन्तृत्व धारकत्व शेषित्वैर्निरूपणीय आत्मा। नियाम्यत्वधार्यत्वशेषत्वैर्निरूपणीयं शरीरम्। ज्ञानिनमात्मानं मन्यमानस्य कथयतश्च भगवत शरीरत्वे अक्षतसिद्धिके सति मुनिवरस्य शेषत्वं प्रत्युतमेव खलु। नैतदन्याय्यं नाम। तथाचात्र भगवत शेषित्वप्रहाणं मुनिवरस्य शेषत्वप्रच्यावनं च न कौटिल्यम्, अपि त्वार्जवमेवेति सिध्यति। अथ सर्वेन्द्रियापहारचतुरवामनवेषधारणेन भूमिस्वीकरणे द्यावापृथिव्योराक्रमणे च न कौटिल्यकथा, सर्वथाऽप्यार्जवमेव। भिक्षणकाल एव "मम पादतो मयैव विक्रमणार्हा भूमि प्रदीयताम्" इति खल्वपेक्षितम्। ओमित्यभ्युपगम्यैव हि बलिना दानमकारि। तथा चार्जवमेवेत्यलम् ॥ (६)

(हिंदी) मेरे साथ मिलकर मेरी आत्मा के अलंकारभूत शेषत्व का अपहरण करनेवाले हमारे नाथ ने सर्वेंद्रियों का अपहरण करने में समर्थ वामनवेष का धारण कर भूमि माँग कर उसे अपनाया ॥

इस गाथा का तात्पर्य इन दोनों प्रकारों से हो सकता है कि, (१) महाबलि की संपत्ति का अपहरण करनेवाले भगवान ने मेरी संपत्ति भी लूट ली; अथवा, (२) मेरी संपत्ति के चोर भगवान ने महाबलि की संपत्ति भी चुरा दी। भगवान ने आळ्वार की कौन-सी वस्तु की चोरी की? शेषत्व की। शेषत्व की चोरी क्या चीज है? यही, कि आळ्वार को शेषी बना देना। कहने का यह भाव है—सर्वदा भगवान का शेष ही रहना चाहनेवाले इस चेतन को कभी ऐसा प्रसंग आता है जब कि यह अपना शेषत्व छोडकर स्वयं शेषी बनने को बाध्य हो जाता। यह अर्थ बताया गया है कि शेषत्व की भांति पारतंत्र्य भी इस चेतन का एक महान गुण है, जिसका भी पालन करना आवश्यक है। तथा च कभी कभी इस पारतंत्र्य की याद दिलाते हुए भगवान आळ्वार से कहते हैं कि, "हे शठकोप मुनिवर! आप कृपा करके इस दिव्य सिंहासन पर विराजिएगा; मैं आपकी सेवा करूंगा।" तब अपने पारतंत्र्य का स्मरण करनेवाले आळ्वार कैसे यह भगवदाज्ञा टाल सकते हैं? अतः उन्हें सिंहासन पर विराजना ही पडेगा। परंतु यों करने पर उनका शेषत्व नष्ट होगा। हाल में इस अर्थ का वर्णन किया जाता है इन शब्दों से—[**मेरे साथ मिलकर मेरी आत्मा के अलंकार भूत शेषत्व का अपहरण करनेवाले**]। कोई लोग यों मानते होंगे कि यह तो भगवान की कुटिलता हुई, न तु आर्जव। यह बात ठीक नहीं; चूंकि भगवान स्वयं गीताजी में गाते है कि "ज्ञानी तु आत्मेव मे मतम्" अर्थात् ज्ञानी मेरी आत्मा ही है। ज्ञानी आत्मा हुआ तो भगवान उसका शरीर बनते हैं। शरीर व आत्मा के ये लक्षण शास्त्रसिद्ध हैं, कि (१) नियंता, धारक व शेषी आत्मा है, और (२) नियाम्य, धार्य व शेष शरीर है। तथा च ज्ञानी को आत्मा कहनेवाले भगवान के अभिप्राय से जब वे स्वयं शरीर (अथवा शेष) ठहरे, तब ज्ञानी का शेषत्व नष्ट ही हुआ। ज्ञानि के प्रति भगवान के सीमातीत प्रेम के कारण बने हुए इस प्रसंग में कुटिलताका प्रश्न ही न उठ सकेगा; किं तु यह पूर्ण आर्जव का ही प्रताप सिद्ध होगा। एवं सकल इंद्रियों के भी चुराने में समर्थ वामन रूप का धारण कर महाबलि से भूमि माँगने के प्रसंग में भी कौटिल्य का अवकाश नहीं है; क्योंकि भगवान ने महाबलि से स्पष्टतया यही माँगा कि, "मुझे तीन पग भूमिका प्रदान करो, जिसे मै स्वयं अपने पाद से नाप लूं।" महाबलि ने भी यह अर्थ ठीक जान कर ही दान दिया था। अतः इसमें भी आर्जव ही प्रकट होता है॥ .... .... .... .... .... (६)

(गाथा.) कोण्डा नेव्वविडै * उण्डा नेव्वैयम् *
तण्डामम् शेयदु * एन्नेणूता नानाने ॥ ७ ॥

नीलादेवीपरिणयार्थं मृषभसप्तकौद्धत्यमपाकृतवान्, सप्तलोकीं संवर्तसमये सप्तुपभुक्तवांश्च भगवान् श्रीवैकुण्ठनिर्विशेषं मयि प्रेमबन्धमाबध्य मदीयमनोरथानशेषानपि स्वयमुवाह हन्त! [मदीयमनोरथप्रतिकोटिभूतान्मनोरथान् स्वयं वहतीति यावत्॥]

मदीयमनोरथानशेषानपीत्यादिकं गाथाया अस्या जीवसर्वस्वम्। मुनिवरोऽसौ श्रीवैकुण्ठभुवनगमनाय, विरजास्नानाय, * एतत्साम गायन्नास्ते * इत्याम्नातसामगानाय च मनोरथान् बिभर्ति। भगवांस्तु श्रीवैकुण्ठादिहागमनाय, मुनिवरपरिसरप्रवहत्ताम्रपर्णीविगाहनाय, सहस्रगीतिगाथागानाय च स्वकीयानां मनो-

रथानामनटान् प्रगाहानुग्रहृयन्नास्त इत्युक्त भवति। एवंविध स्वामिलषितं साधयितु नायमशक्तः, अपि तु सुसमर्थ एवेति द्योतनाय सप्तर्षभौद्धत्यनिरसनापदानम् सप्तलोकीनिगरणापदान च पूर्वार्धेनानुसंहितम् ॥ ... (७)

(हिंदी.) नीलादेवी से परिणय करने के लिए सात बैलों का दमन करनेवाले, और प्रलय काल में सातों लोक अपने पेट में रखनेवाले भगवान ने श्री वैकुंठ की भांति मुझसे प्रेम करते हुए मेरी समस्त इच्छाओं को स्वयं अपनाया ॥ (अर्थात् मैने जो जो इच्छा की, भगवान ने भी ऐसी ही इच्छा की है ॥)

इस गाथा का सारभूत भाग [मेरी समस्त इच्छाओं के] इत्यादि अंतिम वाक्य है। आळ्वार यों विचार करते रहे कि, मुझे श्री वैकुंठदिव्यलोक जाना चाहिए, विरजानदी में स्नान करना चाहिए और सामगान करना चाहिए, इत्यादि। यह जानकर भगवान ने अपने मन में यह आशा की कि, मुझे वैकुंठ से आळ्वार तिरुनगरि जाना चाहिए, ताम्रपर्णी नदी में स्नान करना चाहिए, सहस्रगीति का गान करना चाहिए, इत्यादि। इस प्रकरण में सप्तवृषभमर्दन और सप्तलोकी-भक्षण के इतिहासों का वर्णन करने का यह भाव है कि भगवान अपनी पूर्वोक्त इच्छा पूर्ण करने के पर्याप्त शक्तिमान हैं ॥ . (७)

(गाथा.) आना नानायन् * मीनो डेनमुम् *
तानाना नेन्निल् * तानाय शङ्गे ॥ ८ ॥

गोपालो भूत्वा गोरक्षणेऽधिकृतोऽभूत्। मत्स्यवराहरूपेणाप्यवातरत्। एवमेव मवताराः किमर्थं कृता इति चेत्, मयि स्वस्य सजातया प्रीत्या ॥

तेषुतेषु कालविशेषेषु भगवता कृता अवतारा यद्यपि तत्तत्कालिक प्रयोजनविशेष प्रेप्सानिमित्तेनेति पौराणिकरूपाविशेषै प्रतिपत्तव्य भवति, तथाऽपि श्रीशठकोपमुनीन्द्रसधर्माणो ज्ञानिनामग्रेसरास्तु सर्वानपि तान्स्तानवतारान् स्वार्थमेव कृताननुमन्यते। कथमुपपद्येत तदिद मनुसन्धानमिति शङ्का स्यादपि। * परित्राणाय साधूनामिति गीताश्लोकस्य भाष्यमनुगृह्णन् भगवान् भाष्यकार एवमाह—"साधवः—उक्तलक्षणधर्मशीला वैष्णवाग्रेसरा मत्समाश्रयणे प्रवृत्ता मन्नामकर्मस्वरूपाणा वाङ्मनसागोचरतया मद्दर्शनादृते स्वात्मधारणपोषणादिक-मलभमाना क्षणमात्र कल्पसहस्रं मन्वाना प्रशिथिलसर्वगात्रा भवेयुरिति मत्स्वरूपचेष्टितावलोकन आलापादि-दानेन तेषा परित्राणाय सभवामि" इति। अत्र बहुभिर्विशेषणैर्विशेषितास्मन्तो वैष्णवाग्रेसरा इति निर्दिष्टा व्यक्तिविशेषा पराङ्कुशपरकालादिदिव्यसूरिवरा एवेत्यत्र न सन्देहगन्धोऽपि। अनुगृहीत मेकैकमपि विशेषण वस्तुतस्तेष्वेव हि समन्वेति। तेषा परित्राण कीदृग्विधमुद्दिष्टमिति निर्दिष्टभाष्य पङ्क्तितो विमर्शनीयम्। "मत्स्वरूपचेष्टितावलोकनदानेन तेषा परित्राणाय"इति सुस्पष्ट भाषितत्वात्, युगान्तरेषु कृतानामप्यवताराणा चेष्टितविशेषान् प्रदर्श्य तान् परिरक्षतीति सुस्पष्ट प्रतीयते। तथा च भगवदवताराणा तत्तत्कालिकप्रह्लादप्रभृति भक्त-रिरक्षिषामात्र नोद्देश्यम्; अपितु गुणचेष्टितानुभवलोलुपानामेवविधानामर्वाचीनाना भक्ताना रिरक्षिषाऽपि भगवद् विवक्षितेति भगवद्भाष्यकाराणामाशयोऽवसीयते। तथा चात्र गाथाया 'मत्स्यकूर्मगोपालाद्यवतारा भगवता मयि

स्वस्य संजातया प्रीत्या कृता' इति कीर्तितं सर्वथा स्थाने। अवतारसमकाले रक्षणप्रकारोऽन्यः, समनन्तरकाले रक्षणप्रकारस्ततोऽन्यः परमविलक्षणः। समकाले रक्षणं विरोधिविनाशनप्रधानं स्यात्। समनन्तरकाले एतन्मुनीन्द्रसधर्मणा रक्षणं गुणानुभवप्रदानप्रधानं प्रतिपत्तव्यम्; अवतारेषु पूर्वमकृतेषु सत्सु पश्चाद्गुणानुभव प्रसक्तेरेवानुत्थितेः॥ .... .... .... .... .... (८)

(हिंदी.) भगवान स्वयं गाय चरानेवाला गोपाल बने; मत्स्यवराहादिरूपों से अवतीर्ण भी हुए। मुझसे प्रेम करते हुए ही उन्होंने ये सभी अवतार किये॥

पुराणकर्ता महर्षियों का कहना है कि भगवान के इस संसार में बारंवार अवतार करने का कारण, उस समय के दुष्टशिक्षण, शिष्टपरिपालनादि कतिपय कार्य संभालना ही है। परंतु आळ्वार जैसे भक्त जन उन अवतारों को अपने लिए ही अनुष्ठित मानते हैं। यह बात असंभावित-सी लगती होगी; परन्तु है बिलकुल ठीक। तथाहि—भगवद्गीता में अवतार-प्रयोजन का वर्णन करनेवाला "परित्राणाय साधूनाम्" इत्यादि पद्य प्रसिद्ध है। इस पर श्रीरामानुजस्वामीजी का यह भाष्य है—"साधु—पूर्वोक्तलक्षणवाले वैष्णवाग्रेसर, जो कि मेरा आश्रयण करने में प्रवृत्त होकर, मेरे नामकर्मस्वरूपों को अपने मन व वाणी के गोचर न होने के कारण मेरे दर्शन पाये बिना अपनी आत्मा के धारण-पोषणादि प्राप्त न करते हुए (मेरे दर्शन के अलाभ में) एक पल भर के समय को भी हजारों कल्प मानते हुए शिथिलगात्र हो जायंगे; अतः उन्हें अपने विग्रह व चेष्टितों के दर्शन, वार्तालाप इत्यादि देकर उनका संरक्षण करने के लिए....मैं प्रकट होता हूं।" इस लंबे वाक्य में वैष्णवाग्रेसर शब्द से कीर्तित साधु जन श्रीपरांकुश परकालादि आळ्वार ही हैं; क्योंकि यहां प्रयुक्त सभी विशेषण उनको ही लगते हैं। भगवान के दर्शन करने की, तथा उनसे वार्तालाप करने की तीव्र इच्छा करना, उनके अलाभ से बहुत दुःखी होना, इस दुःख के फलतया पलभर को युगसहस्र मानना, शिथिलांग होना, ये सभी आळ्वारों के ही लक्षण होते हैं। उद्धृत भाष्य पंक्ति से हम यह भी जान सकते हैं कि इन साधुशब्दवाच्य आळ्वारों का परित्राण (माने रक्षण), भगवान के श्रीविग्रह चेष्टितादियों के दर्शन तथा वार्तालाप से होता है। अर्थात् भगवान आळ्वारों को अपने पुरातन अवतारों के चेष्टित दिखा कर उनकी रक्षा करते हैं। तथा च यह अर्थ सिद्ध हुआ किया कि अवतारों के प्रयोजन तत्काल में स्थित प्रह्लाद विभीषणादि भक्तों का संरक्षण मात्र नहीं, वरन् बहुत समय के बाद जन्म लेनेवाले आळ्वारों का भी संरक्षण है। आळ्वारों की स्पष्ट श्रीसूक्तियों का आधार लेकर ही श्रीरामानुजस्वामीजी ने उक्त गीताश्लोक का यह सुंदर अर्थ लिखा। अतः हाल में आळ्वार जो कह रहे हैं कि, "मुझसे प्रेम करते ही भगवान ने अनेक अवतार किये," यह सर्वथा उचित है। अवतारों के समय दुष्टों का संहार करने से कतिपय भक्तों का रक्षण हुआ होगा; परन्तु यह बताना कठिन है कि उन समयों कौन-सा भक्त भगवान के दर्शन पाकर आळ्वारों की भांति विरह दुःख से पार हुआ होगा। वे लोग तो दुष्टविनाश से तृप्त हो गये। गुणानुभव से रक्षित होनेवाले आळ्वार ही हैं। यदि भगवान पूर्व में अवतार नहीं किये होते, तो फिर आळ्वार को उनके दर्शन अथवा गुणानुभव कैसे मिलता? अतः ठीक कहा गया कि आळ्वार के लिए ही भगवान ने मत्स्यवराहगोपालादि अवतार किये॥ .... ... .... (८)

(गाथा) शङ्गु शक्करम् * अङ्गैयिल् कोण्डान् *
एङ्गुम् तानाय * नङ्गळ् नाथने ॥ ९ ॥

अवतरणमुखेन सर्वगतो भगवान् अस्मन्नाथः शङ्खचक्रविभूषितपाणितलो विराजते ॥

कतिपयान् वशयितुं पर्यटन्तो जना यथाहि वशीकरणौषधसनाथा अटन्ति तथा भगवानपि भक्तजन-वशीकरणार्थं मन्वन्तरं वशीकरणसाधनभूतदिव्यायुधपरिकर्मित एव सन्नवतारानीत्यनुसन्धीयत इह। अत्रेदं विमर्श-पदम्। * जातोऽसि देवदेवेश ! शङ्खचक्रगदाधरेति पुराणरत्ने कथनात् कृष्णावतारे परं शङ्खचक्रादिसाहित्य श्रुवम्, रामाद्यवतारेषु च किमस्ति तत्साहित्यमिति। अत्रेयमनुगृह्णन्त्याचार्याः—'अस्त्येव तत्साहित्यं सर्वेष्व-प्यवतारेषु। दिव्यायुधानि तानि समयविशेषेषु सन्निधित्सया तिरोहितानि स्युः" इति। उपपद्यते सत्यमेतत्। श्रीरामायणे प्रथमतो दाशरथिं प्रेक्षमाणो हनुमान् पृच्छति—* आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः। सर्व-भूषणभूषार्हाः किमर्थं न विभूषिताः * इति। अत्र व्याख्याता गोविन्दराजार्य आह—" हनुमतो भक्तप्रवरत्वेन तस्य चतुर्भुजवेषेण दृश्योऽभवत्" इति। रावणवधानन्तरं मन्दोदर्या क्रियमाणे प्रलापे "व्यक्तमेष महायोगी शङ्खचक्रगदाधरः" इत्येतदप्येवं भवितुं मर्हति। सुदर्शनशतके प्रोक्तम्—* वाणी पौराणिकी य प्रथयति महितं प्रेक्षणं वेङ्कटाद्रौ. शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिना तद्विभूत्याम् * इति। श्रीरामाद्यवतारेषु तिरोहि-तानां स्थितानां दिव्यहेतीनां शक्तिविशेषो वस्तुविशेषेषु व्याप्य कार्यकारी बभूव, रामावतारे इषौ, वराहावतारे दंष्ट्रायाम्, नरसिंहावतारे नखेषु, जामदग्न्यावतारे परशौ, एवमवतारान्तरेषु यथायोगं व्याप्य स्वसत्त प्राचीकशन्नायुधानीति भावः ॥ (९)

(हिंदी) अवतारमुख से सर्वत्र व्याप्त होनेवाले हमारे नाथ भगवान अपने सुंदर हाथों में शङ्खचक्रों का धारण करते हैं ॥

इस गाथा में यों कहा जा रहा है कि जैसे दूसरों को अपने वश करना चाहनेवाले हाथ में वशीकरण का औषध लेकर उनके पास जाते हैं, इसी प्रकार भगवान भी भक्तों को अपने वश करने के लिए भूतल पर अवतार करते हुए, हाथ में शङ्खचक्रादि दिव्यायुधों का धारण करते हैं, क्योंकि ये दिव्यायुध ही उनके वशीकारसाधन होते हैं। यद्यपि 'जातोऽसि देवदेवेश ! शङ्खचक्रगदाधर" (हे देवाधि देव ! आप शङ्खचक्रगदाधारी हो कर ही अवतीर्ण हैं) इत्यादि श्री विष्णुपुराण के अनुसार एकमात्र श्रीकृष्णाव-तार में शङ्खचक्रों की सत्ता प्रतीत होती है, अन्य अवतारों में तो उनकी बात सुनी नहीं जाती। तथापि आचार्यों का अभिप्राय है कि सभी अवतारों में भगवान के साथ दिव्यायुध भी विराजते ही हैं, परंतु भगवान आवश्यक किसी किसी समय उनसे कार्य लेते हुए दूसरे समय उनको छिपा रहते हैं। यह बात बहुत ठीक है। श्रीरामावतार को ही लीजिए। साधारणतया हम कहते हैं कि श्रीरामचंद्र द्विभुज और अत एव शङ्खचक्रविरहित थे। परंतु पहले पहल उनके दर्शन करनेवाले हनुमान जी उनसे पूछते हैं कि "आयताश्च सुवृत्ताश्च बाहवः परिघोपमाः। सर्वभूषणभूषार्हाः किमर्थं न विभूषिताः ॥ अर्थात् प्रभो ! विशाल, बेलन के समान, परिघसदृश, व समस्तविध आभूषण पहनने योग्य अपने बाहुओं को आपने क्योंकर नहीं

सजाया?" इसमे विचार यह है कि हनुमान जी ने क्योंकर, बाहवः करके बहुवचन का प्रयोग किया? संस्कृत भाषा में दो वस्तुओं की सूचना करने के लिए द्विवचन का ही प्रयोग करना चाहिए, न तु बहुवचन का। रामायण के व्याख्याता श्री गोविन्दराज यहां पर लिखते हैं कि भक्तप्रवर हनुमानजी को चतुर्भुज श्रीरामचंद्रजी के दर्शन हुए; अतः इस बहुवचन का प्रयोग किया गया। एवं रावणवध के बाद प्रलाप करनेवाली मंदोदरी कहती है—"व्यक्तमेष महायोगी....शंखचक्रगदाधरः। माने रावणवध करनेवाले ये श्रीरामचंद्र साधारण मानव नहीं; किंतु साक्षात् परमपदवासी चतुर्भुज श्रीमन्नारायण ही है।" इससे स्पष्ट होता है कि उसे भी चतुर्भुज रूप का ही साक्षात्कार हुआ। इससे यह अर्थ सिद्ध होता है कि श्रीरामचंद्रजी साधारणतया द्विभुज दीखते तो थे; परंतु परमभक्तों को उनके चतुर्भुज रूप के ही दर्शन मिलते थे। अथवा "शक्तिर्यस्येषुदंष्ट्रानखपरशुमुखव्यापिनी तद्विभूत्याम्" इत्यादि श्री सुदर्शनशतक-श्रीसूक्ति के अनुसार चक्रराज की शक्ति भगवान के तत्तदवतार के अनुगुणतया श्रीरामचंद्रजी के बाण में, वराह भगवान की दंष्ट्रा में, नरसिंह भगवान के नाखूनों में, परशुराम के परशु में एवं दूसरे अवतारों मे दूसरी वस्तु मे व्याप्त होती है; अर्थात् उक्त सभी वस्तु चक्रराज के अवतार मानी जा सकती हैं। अतः यह तत्व जाननेवाले भक्त जन भगवान के उक्त सभी आयुध आदियों को चक्रराज ही मानते हैं। अतः भगवान को सर्वदा चक्रधारी कहना उचित होता है। अथवा मूलगाथास्थ (शंखचक्र) शब्द न केवल शखचक्रों का ही, किंतु सभी दिव्यायुधों का सूचक है। तथाच यह अर्थ हुआ कि भगवान एकैक अवतार मे भी अपने साथ भक्तों के चित्त का वशीकार करने में समर्थ शंख चक्र बाण हल इत्यादि कतिपय दिव्यायुध भी लाते हैं॥

(गाथा.) **नाथन् ञालङ्गोळ् * पाद नेक्सम्मान् ***
**ओदम्बोळ् किळर् * वेद नीरने॥ १०॥**

**सर्वनियन्ता, वसिष्ठचण्डालविभागविरहेण सर्वजनताशीर्षविनिहितचरणोऽस्मत्स्वामी भगवान् उत्तरङ्गजलधिवदुज्जृम्भमाणानां वैदिकगिरामेव हि गोचरमहिमा॥**

भगवतो गुणगणान् कीर्तयितुं हन्त! के वयम्? * वेदैश्च सर्वैरहमेव वेद्यः * इति गीतोक्तरीत्या वेदैकसमधिगम्यमहिमा हि सः इति कथयति गाथैषा। * वेदैश्चेत्यादिगीताश्लोके एकत्रावतिष्ठमान एवकारो नेतुं प्रभवति। वेदैरेवाहं वेद्यः, नान्यैः प्रमाणाभासैः। वेदैरहमेव वेद्यः, नान्यान्यवरदैवतानि। वेदैस्सर्वैरहं वेद्य एव; न तु प्रमाणपथातिगोऽस्मि। सर्वैरेव वेदैरहं वेद्यः। [अधुना एवकारः अन्यर्थकः।] ब्रह्मकाण्डगतैरिव कर्मकाण्डगतैरपि वाक्यैरहं वेद्यः॥ एवं नाम भगवत्प्रतिपादने प्रवणैः प्रवीणैश्च वेदैरेव स्तुत्यमहिमा परमः पुमानिति कथितं भवति॥ .... .... .... (१०)

**(हिंदि.) सबके नियन्ता और वसिष्ठचंडाल पक्षपात के बिना सबके सिर पर अपना श्रीपाद रखनेवाले हमारे स्वामी भगवान लहरों से समाघुत सागर की भांति घोषण करनेवाले वेदों से जानने योग्य वैभववाले हैं॥**

इस गाथा का यह तात्पर्य है कि "वेदैश्च सर्वैरहमेव वेद्यः" इत्यादि प्रमाण के अनुसार वेदप्रतिपाद्य महावैभववाले भगवान के कल्याणगुणों का, अत्यल्पज्ञानशक्तिवाले हम कैसे वर्णन कर सकेंगे। उक्त वाक्य में 'एव' शब्द का अन्वय तत्रत्य दूसरे सभी पदों के साथ हो सकता है। तथाहि—(१) सर्वैः वेदैरेवाहं वेद्यः—माने समस्त वेदों से ही मैं समझा जा सकता हूं; न तु दूसरे किसी आभास प्रमाण से। (२) सर्वैः वेदैः रह मेव वेद्यः—माने समस्त वेदों से प्रतिपाद्य मैं ही हूं; न तु दूसरा कोई क्षुद्र देवतांतर। (३) वेदैः स्सर्वैः अहं वेद्य एव—माने समस्त वेदों से मैं वेद्य ही हूं, न तु प्रमाण के अगोचर हूं। (४) सर्वैरेव वेदैः अहं वेद्यः—सभी वेदों से मैं वेद्य हूं; (अब एवकारका अर्थ 'भी' है।) अर्थात् कर्मकांड, ब्रह्मकांड नामक दोनों वेदभागों से मैं वेद्य हूं। इस प्रकार भगवान का प्रतिपादन करने के लिए ही प्रवृत्त, उस कार्य में समर्थ वेदों के सिवाय दूसरा कौन उनका वर्णन कर सकता है? .... .... (१०)

(गाथा.) नीर् पुरै वण्णन् * शीर् शठकोपन् *
नेर्द लायिरत्तु * ओर्द लिवैये ॥ ११ ॥

**नीरसवर्णस्य सर्वेश्वरस्य (आर्जवाभिधानं) गुणविशेषमधिकृत्य शठरिपुमुनिना प्रोक्तमिदं दशकं सहस्रगाथामध्ये सम्यग्विमर्शसुशोभनम् ॥**

आर्जवगुणप्रतिपादनमेव दशकस्यास्य प्रमेयमिति मुनिवरो गाथयाऽनया स्वयमेव प्रतिपादितवान् भवति। "नीरसवर्णस्य भगवतो गुण" इत्यनेन आर्जवमेव विवक्षितं भवितुमर्हतीति विवृतमवतारिकायामिहानुसन्धेयम्। अन्येषु दशकेष्विवात्र फलकीर्तनं नास्ति। सुष्ठु विमृश्य व्याहृतस्यास्य दशकस्य विमर्श एव परमप्रयोजनं भक्तानामिति विवक्षितमिव ॥

गाथायामस्यां नीरसवर्ण इति निर्दिष्टो भगवान् भूयोभिः प्रकारैर्नीरसावर्ण्यं धत्ते। द्वाविंशत्या प्रकारैर्निरूपयाम इह तत् रसिकानां मनोविनोदाय। (१) नीरं निम्नस्थलेष्वेव स्वयं रागतः प्रसरति; उन्नतस्थलेषु तत्प्रसरं बहुलप्रयाससाध्यं हि पश्यामः। भगवान् जात्यादिभिस्स्वात्मानं जघन्यं मन्यमानं नीचं जनमुद्दिश्यैव स्वरसतः प्रसारयति कृपारसम्। उत्तुङ्गम्मन्येष्ववलिप्तेषु स्वकीयं कृपारसं प्रसारयितुं सङ्कुचति च। हस्तिनापुरराजवीथिकायां राजाधिराजेषु बहुषु विराजमानेष्वपि * विदुरस्य ययौ वेश्म * इत्युक्तरीत्या सर्वथा स्वात्मानमतिजघन्यं मन्यमानस्य विदुरस्यैव हि सदनं प्रविवेश वासुदेवः। * भीष्मद्रोणावतिक्रम्य मांश्चैव मधुसूदन!। किमर्थं पुण्डरीकाक्ष! भुक्तं वृषलभोजनम् ॥ * इति प्रष्टव्यतां दधानो विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥ (२) जलं सर्वेषाऽप्यनुपेक्षणीयं भवति। अन्नादीनि वस्तूनि यथा स्वप्रतिनिधिभूतगोधूमक्षीरपिष्टफलादिसहानि, न तथा जलं स्वप्रतिनिधिसहं दृश्यते। एवं भगवानपि न सहते स्वस्य प्रतिनिधिम्। फलविशेषानुरक्ता जनाः स्वस्वरुच्यनुगुणकर्मज्ञानभक्त्यादिषु योगेषु अन्यतममवलम्बमाना अपि भगवन्तं विहातुं नैव शक्नुवन्ति। फलदशायामिव साधनदशायामपि भगवानपरित्याज्य एव हि साधनान्तरनिष्ठानामपि। तदुक्तं श्रीवत्साङ्कमिश्रैः—* या कर्मणामधिकृतिर्य इहोद्यमस्तेषु अन्वेष्वनुष्ठितिरशेषमिदं हि पुंसाम्। त्वामन्तरेण न कथञ्चन शक्यमाप्तुम् एवं च तेषु मयि चास्ति न ते विशेषः ॥ इति श्रीवैकुण्ठस्तवे। (३) आपः स्वतः शैत्यशालिन्यः, "शीतस्पर्शवत्य आपः"।

इति हि लक्षणमपाम्। ऊष्मा तु तासामौपाधिकः। एवं भगवानपि स्वतः करुणाशिशिरहृदयः, * चन्द्रमा मनसो जातः * इति पुरुषसूक्ताम्नातरीत्या चन्द्रमसोऽपि जन्मस्थानत्वेन हि प्रसिद्धं तस्य मनः। एवंविधोऽपि भगवान् * यद् ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे * इत्युक्तरीत्या सन्ततसन्तन्यमानैरस्मादृशामपराधैरूष्मलहृदयो भवति तावत्। शिशिरतरे सागरेऽपि बडबानलो ज्वलति हि॥ (४) आगन्तुकोष्णभावा अप्यापः ऊष्मशमनाय अप एवापेक्षन्ते। एवम् अपराधैराविलचेतसोऽपि भगवतः तस्यैव प्रसादोऽपेक्षितः। * निरासकस्यापि न तावदुत्सहे महेश! हातुं तव पादपङ्कजम् * इत्यनुगृह्णन् यामुनार्यवर्यः इममेवार्थं स्फोरयति। * समुद्रं राघवो राजा शरणं गन्तुमर्हति * इति विभीषणवचसि प्रत्ययेन भगवान् रामचन्द्रः प्रतिशयनभूमिकाभूषितपयोधिपुलिनस्समभूत्। 'त्रिरात्रोषितस्तोऽतिनक्रम्।' समुद्रराजो नाभूदभिमुखः। * चापमानय सौमित्रे! शरांश्चाशीविषोपमान्। सागरं शोषयिष्यामि पद्भ्यां यान्तु प्लवंगमाः॥ * इति कथयन् कोपमाहारयत्तीव्रम् अवनिजाजानिः। वाचामभूमिस्स कोपोऽथ स्वयमेव प्रशममुपययौ। (५) सलिलं तावदस्मदिच्छानुगुणम् क्वचिन्नियन्त्रणयोग्यम्, क्वचित्प्रसारणार्हं च भवति। उदपाने द्वारपिधानेन अवस्थाप्यते सलिलम्, तदेव द्वारोद्घाटनेन बहिः प्रसरयोग्यं च भवति खलु। एवं भगवानपि * स्वोच्छिष्टायाः स्रजि निगलितम् या बलात्कृत्य भुङ्क्ते * इत्युक्तरीत्या गोदादेवीसधर्मणाम् 'निगलरचेनानुभाव्यो' भवति। इतरेषाम् * तूल्यप्रसङ्गोत्सुकम् * इत्युक्तरीत्या बहिः प्रसारणार्हश्च भवति। (६) पानीयम् अन्नादीनां पाकाय साधनं भवति यथा, तथा स्वयं पेयं च भवति। अन्नादिपाकोपयोगकाले पयसः उपायत्वाकारोऽनुभूयते। पानीयतादशायां तु उपेयत्वाकारोऽनुभूयते। एवं भगवानपि * उपायोपेयत्वे तदिह तव तत्त्वं न तु गुणौ * इति श्रीपराशरभट्टार्यदिव्यसूक्त्यनुरोधेन उपायत्वमुपेयत्वं च बिभर्ति। भगवन्तमुपायतया परिगृह्य प्रयोजनान्तराणि प्रेप्सन्ति केचित्। कर्मज्ञानभक्त्यादिकमुपायतया स्वीकृत्य भगवन्तमुपैतुमीहन्ते केचित्। उपायस्पर्शगन्धमप्यसहमाना परमैकान्तिनः उपायत्वमुपेयत्वं च तस्मिन्नेव सुप्रतिष्ठितमवधारयन्ति। (७) अन्नगोधूमादिकानि वस्तुजातानि स्वप्रतिनिधिसंहानि प्रेक्ष्यन्ते। कन्दमूलफलादीनि च अन्नस्थाने निविशन्ते खलु। पानाय तु न तथा प्रतिनिधिसहम्। पानीयस्थाने वस्त्वन्तरं न किमपि निवेशमर्हति। पानायनं निर्वाह्य कृत्यं पानीयेनैव हि निर्वाह्यं भवति। भगवानपि न प्रतिनिधिं सहते। भगवतो लिप्सा भगवतो लाभेनैव पूर्णीया भवति। गुणानुभवतोऽपि कालक्षेपो न दुष्करो भवति भगवद्दर्शनकामुकानाम्। (८) अन्नमश्यमानं सत् तोयमवश्यमपेक्षते। विना तोयमशितुं न प्रभूयते खलु। तोयं तु स्वोपभोगकाले नेतरदपेक्षते। पिपासितो हि पयसैव तृप्यति, बुभुक्षितो न भुक्त्यैव तृप्यति। भगवद्विषयोऽप्येतादृशः। उपायान्तरनिष्ठा भगवन्तमवश्यं कामयन्ते। भगवन्निष्ठास्तु (प्रपन्ना) उपायान्तरेषु सर्वथा निरपेक्षाः। (९) जलाधारभूतेषु भाजनेषु तारतम्यसद्भावेऽपि जलं तावत् लघुनि वा गुरुणि वा पात्रे स्वयं परिपूर्णं भवति। एवम् भगवता प्रयोजनान्तराणि प्रेप्सन्तो जना लघवश्च गुरवश्च भवन्तु कामम्, सर्वत्र परिपूर्णफलप्रद एव भगवान्। अलम् अलम् इति यथा सर्वेऽपि कथयेयुस्तथा हि वितरति भगवान्। (१०) सलिलं पञ्चप्रकारकं प्रेक्षामहे। भूगतजलम्, आवरणसलिलम्, क्षाराब्धिपयः, प्रवाहतोयम्, वापीकूपादिगतमुदकमिति। भूमौ सर्वत्राप्यन्तरवतिष्ठते सलिलम्, अथापि पिपासितस्य सद्यः पिपासाप्रशमनार्हं तन्न भवति। एवम् तर्यामी भगवान् सर्वत्र स्थितोऽपि सद्योदर्शनसमुत्कण्ठितानां परमभक्तानामुपयोगार्हो न भवति। अण्डाद्बहिः प्रवहदावरणजलम् श्रीवैकुण्ठमधिवसता भगवता तुल्यम्। पिपासितानामावरण-

सञ्जिदन्निर सुवोदिदृक्षूणां मुमुक्षूणामनुपकारको हि भवति वैकुण्ठपति । क्षीराब्धिरण्डान्तर्गतोऽपि सन्, यथा पिपासितानां नोपकारक तथा व्यूहाधिपतिर्भगवानपि सद्यो दिदृक्षूणामस्मादृशामनुपकारक । नेदिष्ठं सदपि प्रवाहसलिलम्, तत्तीरवर्तिव्यतिरिक्तानाम् जनानां यथा नोपकारकम्, तथा रामकृष्णाद्यवतारमूर्तिविशेषोऽपि पाश्चात्यानामस्मादृशामनुपकारक । अत्रतो वापीकूपतटाकादिसलिलमेव यथा इदानीन्तनानामपि सर्वेषां सद्य पिपासाप्रशमनविचक्षणम्, तथा अर्चामूर्तिरेव भगवान् सद्यो दर्शनलालसानां मुमुक्षूणामशेषाणां सुष्ठु सदस्यो भवति । (११) सलिलं पवित्रमपि पात्र आश्रयवशादेव त्याज्यतामुपादेयतां च विन्दति । अपरिशुद्धाधिकरणवर्ति तत् अनुपादेयम्, सुपरिशुद्धाधिकरणवर्ति तत् उपादेयं च भवतीति प्रसिद्धम् । एवं भगवानपि देवतान्तरेष्वन्तर्यामी सन् आश्रयवशादेव त्याज्यो भवति, रथाङ्गशङ्खासिगदाधनुर्वरादिदिव्यायुधदिव्यभूषणविभूषितदिव्यमङ्गलविग्रहाश्रितो भगवानुपादेयो विराजते । (१२) आर्द्रासु सिकतासु पुनः पुनः खनने सति सलिलमाविर्भवत्यनारतम् । एवं भगवानपि आर्द्रहृदयैस्सुमनोभिरनारतमुपन्यस्यमानोऽपि तदातनतदातनशीमत्स्वरूपरूपगुणविभूतिचेष्टितस्सन् समुज्जृम्भते पुनः पुनः । (१३) अम्भः स्वार्थताविरहितं पारार्थ्यकतयैव वीक्ष्यते । एवं भगवानपि * न ते रूपं न चाकारो नायुधानि न चास्पदम् । तथाऽपि पुरुषाकारो भक्तानां त्वं प्रकाशसे ॥ * इति जितन्तावतरीत्या, * परिजनपरिबर्हा भूषणान्यायुधानि प्रवरगुणगणाश्च ज्ञानशक्त्यादयस्ते । परमपदमथाण्डान्यात्मदेहस्तथाऽऽत्मा वरद ! सकलमेतत् नश्रितार्थे चकर्थ ॥ * इति श्रीकूरेशमिश्रानुगृहीतरीत्या च आश्रितार्थात्मीयश्चकास्ति । (१४) जलं खलु एव प्रादुर्भवितुमर्हति, न तु कदापि परकीयनिर्बन्धतः । एवं भगवानपि * नासौ पुरुषकारेण न चाप्यन्येन हेतुना । केवलं स्वेच्छयैवाहं प्रेक्षे कश्चित्कदाचन * इति श्लोकरीत्या स्वाधीनप्रादुर्भाव । * नायमात्माश्रुतिरप्यत्रानुसन्धातुं योग्या ॥ (१५) नीरं सागरात् कालमेघद्वारा समागतं सदेव सर्वोपजीव्यं भवति । एवं भगवानपि आचार्यसार्वभौमसदाचार्यमुखद्वारैव सर्वोपजीव्यो भवति ॥ (१६) शुभ्रा महान्ति रति विभागमन्तरेण सर्वैरपि जनैस्स्नानादिष्ववगाहनार्हं भवति पयः । एवं परमपुरुषोऽपि वसिष्ठचण्डालविभागमन्तरेण नखिलेभ्यो विभ्राजते । अत्र * निषादानां नेता कपिकुलपतिः काऽपि शबरी कुचेलः कुब्जा सा व्रजयुवतयो माल्यकृदिति । अमीषां निम्नत्वं वृषगिरिपतिसन्नतिमपि प्रभूतस्रोतोभिः प्रसभमनुकम्पे ! समयसि ॥ * इति दयाशतकश्लोकक्रमेणाशतोऽनुसन्धानार्हम् । (१७) अम्बु अतिसूक्ष्मरन्ध्रमार्गेणाऽपि स्वच्छन्दमन्तः प्रवेष्टुं प्रभवति । इत्थं परमकारुणिकः परमात्माऽपि समाश्रितस्वादृशेषु यादृच्छिकप्रासङ्गिकआनुषङ्गिकाद्यल्पसुकृतरूपलघुरन्ध्रमार्गेऽपि स्वकीयकृपारसमन्तः प्रवेशयति हन्त । श्रीवचनभूषणे * त्रिपाद्विभूतिचूर्णिकायामतिविशदमेतदिति नात्र विस्तरः ॥ (१८) उदकं तीर्थविशेषेषु महीयते । गङ्गायमुनासरस्वतीकावेरीताम्रपर्ण्यादिनदीविशेषेषु खलु तीर्थप्रभावो विशिष्यते । एवं भगवानपि * श्रीरङ्गं करिशैलमञ्जनगिरिं तार्क्ष्याद्रिसिंहाचलौ श्रीकूर्मं पुरुषोत्तमं च बदरीनारायणं नैमिशम् * इत्यादितोऽभिष्टुतेषु दिव्यदेशविशेषेष्वप्रतिममहिमानमश्नुते ॥ (१९) अतिशयितपिपासा जना सलिलमुचावचै प्रकारैरुपभुञ्जते स्नानपानादिरूपैः । भगवानपि मानसिकैरनुसन्धानै वाचिकैः स्तवैः कायिकैः प्रणामाञ्जलिप्रभृतिभिरुपभुज्यते भक्तैः, स्वरुच्यनुगुणम् ॥ (२०) पिपासितेन जनेन 'अलं जलकणिकया, अलं पानीयबिन्दुना' इति कथनात् अल्पशः काङ्क्ष्यमाणं च पयसि दृश्यते । एवं भगवानपि * तत्त्वदा भगवि शेकनाशया प्राणीकृतानुत्तमभुक्तिमुक्तिभिः । महामभि * इति भगवद्यामुनार्यदिव्यसूक्त्यनुसारेण सकलकाङ्क्षणीयदर्शनो भवति ॥ (२१) पायसि लघुतरः अश्मखण्डोऽपि

निमज्जति; वृहत्तरमुडुपमपि प्लवते। अल्पवस्तुभिरवेक्षणीयान्तःप्रदेशत्वम्, महत्तरैरप्यनवेक्ष्यान्तःप्रदेशत्वं पाथसोऽस्तीत्युक्तं भवति। सैषा रीतिर्भगवति च समाना। स तावत् * समाहितैस्साधु सनन्दनादिभिस्सुदुर्लभम् भक्तभैरदुर्लभम् * इत्युक्तरीत्या अल्पानामप्यवगाह्यः अनल्पानामपि दुरवगाहश्च भवति खलु॥ (२२) उदकं तावत् अन्नमुत्पादयति; उत्पन्नस्योपयोजने च हेतुर्भवति। एवं भगवानपि नानाभोगान् सृजति; सृष्टानां भोगानामनुभवे च स्वयमन्तर्भवति। विना भगवन्तमनुभूयमाना भोगा न हि खलु स्वदन्ते रसिकानां चेतसे॥ एवमन्येऽपि नीरसाधर्म्यप्रकारा उन्नेया उत्तुङ्गमनीषैर्भक्तप्रवरैः॥ .... .... .... (११)

—* एतद्दशक सारार्थसंग्राहकः द्रमिडोपनिषत्संगति श्लोकः *—

कौटिल्यवत्सु करणत्रितयेऽपि जन्तुष्वात्मीयमेव करणत्रितयैकरूप्यम्।
संदर्श्य तानपि हरिः स्ववशीकरोतीत्याचष्ट सान्द्रकरुणो मुनिरष्टमेन॥

**(हिंदी.) नीरसमान भगवान के (आर्जवनामक) गुण को लक्ष्यकर श्रीशठकोप सूरी से अनुगृहीत यह दशक सहस्र गाथाओं के बीच में बहुत विमर्श करने योग्य है॥**

इस गाथा में आळ्वार यह स्पष्ट बता रहे हैं कि इस दशक में भगवान के आर्जवगुण का ही वर्णन किया गया है। इस दशक की अवतारिका में बताया गया कि भगवान को **नीरसमान** कहने का तात्पर्य यह कि वे आर्जवगुणसंपन्न हैं। दूसरे दशकों की भांति इस दशक में फलश्रुति नहीं है। इसका यह भाव होगा कि इस दशक के परमभोग्य अर्थों का विवेचन करना ही भक्तों के लिए महान लाभ है।

भगवान को नीरसमान कहने का यह तात्पर्य है कि उनमें पानी के अनेक धर्म रहते हैं। अब इसका, कुछ विवरण करेंगे—(१) जल स्वभावत. नीचे की ओर ही बहता है और बहुत प्रयत्न करने पर ही ऊपर चढता; भगवान भी जाति गुण वृत्त आदियों से अपने को नीच माननेवालों की ओर ही अपना कृपारस बढाते हैं; न तु अपने को उच्च माननेवालों की ओर। पाण्डवदूत बनकर हस्तिनापुर पधारनेवाले श्रीकृष्ण राजवीथी में बडे बडे राजाधिराजों को छोड, अपने को अतिनीच माननेवाले विदुरजी के घर पधारे, और "विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च" इत्युक्त प्रकार भक्ति से पवित्र बने हुए, सुमधुर अन्न का भोजन किया। यह देखकर दुर्योधन ने पूछा, "भीष्मद्रोणवतिक्रम्य मां चैव मधुसूदन। किमर्थं पुण्डरीकाक्ष! भुक्तं वृषलभोजनम्॥ अर्थात् हे कमलनयन, मधुसूदन! श्रेष्ठजन्मवाले द्रोण, ज्ञानाधिक भीष्म, और राजाधिराज मुझको लांघकर तुमने क्योंकर शूद्र का अन्न खाया?" (२) कोई भी जल की परवाह नहीं कर सकता। अर्थात्, जैसे हम चावल के बदले में गेहूं, बाजरा, दूध, फल इत्यादि दूसरी वस्तुओं का उपयोग कर सकते हैं, वैसे पानी के बदले में दूसरी किसी वस्तु को काम में नहीं ले सकते। इसी प्रकार भगवान का भी कोई प्रतिनिधि नहीं होगा। अर्थात् भगवान का काम दूसरा कोई नहीं करेगा। यह भाव है—यह अर्थ नहीं जानते हुए कि भगवत्प्राप्ति का उत्तम साधन स्वयं भगवान ही हैं, कितने लोग कर्मयोग ज्ञानयोग भक्तियोग इत्यादि दूसरे उपायों का अनुष्ठान करने लगते हैं। परन्तु उन्हें भी अपने उपाय की सिद्धि के लिए भगवान का आश्रय लेना ही पडता है। यह तत्व जाननेवाले प्रपन्न जन तो उन

उपायांतरों को छोड कर भगवान को ही पूर्णरूप से उपाय मानते हैं। यथा श्रीकूरेशस्वामीजी ने श्रीवैकुंठस्तव में अनुगृहीत किया कि, "या कर्मणामविकृति य इहोचमस्तेषु अप्येष्वनुष्ठितिरशेषमिद हि पुसाम्। त्वामन्तरेण न कथचन शक्यमाप्तुम् एव च तेषु मयि चास्ति न ते विशेष ॥" इसका यह तात्पर्य है—हे भगवन्! कर्मादि दूसरे योग करने का अधिकार पाना, उनमें उतरना और विधिवत् उनका अनुष्ठान कर समाप्त करना, ये सभी आपकी कृपा के बिना किसीको न मिलेंगे। मैं भी आपकी कृपा का ही प्रतीक्षी हूं। अत उनमें और मुझमें कौन सा अतर रहता है? इस लिए आपको मुझ पर कृपा करना ही उचित है॥ (३) सुशीतल रहना जल का स्वभाव है, और तपाये जाने पर ही वह कदाचित् गरम होगा। भगवान का स्वभाव भी करुणाशीतल रहना ही है, चेतनों के सीमातीत अपराध देखने पर वे कदाचित् रुष्ट होते हैं। पुरुषसूक्त का वह एक वाक्य है कि "चद्रमा मनसो जात," अर्थात् चद्रमा भगवान के मनसे उत्पन्न हुआ। इसका कारण यह है कि भगवान का मन भी चद्रमा की भाति—नहीं, उससे भी अधिक—शीतल होता है॥ (४) गरम पानी को ठडा करने के लिए ठडे पानी की ही आवश्यकता है, नतु दूसरी किसी वस्तु की। उक्त प्रकार चेतन के अपराध देख कर रुष्ट होनेवाले भगवान भी केवल अपनी कृपा से ही प्रसन्न होते हैं, न तु उपायांतर से। श्रीयामुनाचार्य स्वामीजी ने "निरासकस्यापि न तावदुत्सहे महेश! हातु तव पादपङ्कजम्" (मेरे निरासक होने पर भी मैं आपके श्री पादकमल नहीं छोडूंगा) कहते हुए इसी अर्थ की सूचना की। अपनी शरणगति से अप्रसन्न समुद्रराज पर रुष्ट हो कर उसे दड देने को उद्यत श्रीरामचद्रजी ने बाद में अपने आप ही उसपर प्रसन्न हुए। (समुद्रराजकी नम्रता तो व्याजमात्र था॥) (५) समर्थ लोग अपनी इच्छा के अनुसार पानी को बाँध से रोक सकते हैं और द्वार खोलकर बाहर बहा भी सकते हैं। "स्वोच्छिष्टाया स्रजि निगलित या बलात्कृत्य भुङ्क्ते" (गोदादेवी अपने धारण की गयी पुष्पमाला से भगवान को बाध कर उनका अनुभव करती हैं) इत्यादि प्रशसा के पात्र भक्त जन भगवान को बाध सकते हैं, और दूसरे भक्त उन्हें अपने दूत के रूप में बाहर भेज भी सकते हैं॥ (६) जल, दूसरी वस्तु पकाने का साधन होता है और स्वय फलतया भी पिया जाता है। एव भगवान उपाय व उपेय, दोनो बनते हैं। अर्थात् कोई लोग भगवान को उपाय मान कर उनसे किसी दूसरी वस्तु (ऐश्वर्यादि) पाना चाहते हैं, दूसरे कोई जन कर्मज्ञानादि उपायांतर से भगवान को प्राप्त करना चाहते हैं, प्रपन्न लोग तो भगवान की ही कृपा से उन्हींको प्राप्त करना चाहते हैं॥ (७) भूखा मानव अन्न की भांति रोटी, फल इत्यादि खाने से भी तृप्त हो सकता है, प्यासा तो जल के सिवा दूसरा किसी वस्तु के उपयोग से तृप्त न हो सकता। एव भगवप्राप्ति करने की इच्छा उनको प्राप्त करने पर ही शात होगी, न कि दूसरी किसी वस्तु पाने पर। साक्षात् दर्शन करने के इच्छुक भक्त जन, न केवल दूसरे किसी पदार्थ के लाभ से तृप्त न होगा, किंतु खुद भगवान के गुणो का अनुभव करने पर भी तृप्त न होगा॥ (८) अन्न खाने के समय जल की अपेक्षा रहती है, परतु जल पीने के समय दूसरे किसीकी आवश्यकता नहीं रहती। उपायांतरनिष्ठों को भगवकृपा भी पानेकी आवश्यकता रहती है, भगवन्निष्ठ (यानी प्रपन्न) को वस्त्वतर की अपेक्षा नहीं होगी॥ (९) छोटे बडे पात्रों में सवत्र जल पूर्ण ही भरेगा, एव भगवान से नाना प्रकार के फल पाना चहनेवाले जन छोटे बडे इत्यादि नाना प्रकार के यद्यपि होंगे, तथापि भगवान सब पर

मन में आया, सो कहनेवाली श्रुति का अध्ययन कर हम कैसे कोई निश्चय पा सकेंगे? हित व पुरुषार्थ के बारे मे भी इसी प्रकार, परस्पर विरुद्ध ही वेदवचन मिलते हैं। अतः मैं निश्चित रूप से क्या कहूं? किसी प्रकार का निश्चय हो सकता नहीं।" भट्टर स्वामीजी ने फिर पूछा, कि "यह बात तो ठीक है। परंतु आप विद्वान हैं और अपनी विद्वत्ता से इन श्रुतियों को समरस बनाकर एक निश्चित अर्थ निकाल सकते हैं। अतः हमें यही बतला दीजिए कि आपके अपना अभिप्राय क्या है।" विद्वान बोल डाला कि "हां; वेवे विद्वान अपने अपने अभिनिवेश के अनुगुणतया कोई कोई निश्चय कर डालते हैं; फलतः इतने मतभेद हो गये हैं। परंतु यह मार्ग मुझे पसंद नहीं।" यह सुनकर स्वामीजी ने उन्हें विदा कर दिया। उस दिन उसे रोजकी भिक्षा भी न मिली। खिन्न होकर वह निकल गया। थोडी देर में वह दूसरा महात्मा आया जिसे लोग अल्पज्ञ मानते थे। स्वामीजी ने उसका स्वागत किया, अंदर बुलाकर दिव्य आसन पर बिठाया और सविनय पूछा कि, "स्वामिन्! यद्यपि यहां पर रोज प्रवचन के नाम से कुछ चलता है। परंतु तत्वहितपुरुषार्थों के विषय में हमने कुछ निश्चय नहीं पाया। अतः आप हमें इस विषय का निर्णय सुनाने की कृपा करें।" यह सुनकर उस महात्माने अश्रुपूर्णाक्ष होकर गद्गद कंठ से प्रत्युत्तर दिया कि, "सर्वथा अज्ञ मैं दूसरी वीथियाँ छोडकर इस एक वीथी में भिक्षा ले रहा हूं; क्योंकि यहीं निष्कृष्ट शास्त्रार्थ ज्ञानवाले आप जैसे महान पुरुष विराजमान हैं। परंतु अब आप ऐसा विलक्षण प्रश्न पूछ रहे हैं। मैं क्या कहूं! आपके पिताजी की, तथा श्री रामानुजस्वामीजी की प्रवचनगोष्ठी में मैं ने खूब सुना हूं कि, भगवान श्रीमन्नारायण ही परतत्व हैं, उनके पादारविंद में की जानेवाली शरणागति ही हित है और उनकी सेवा ही परमपुरुषार्थ है। इस विषय में शंका कौन-सी है? परंतु मुझे इसी बात का आश्चर्य व खेद हो रहा है कि आप मुझसे यह पूछ रहे हैं।" और उसने बारंबार इस अंतिम वाक्य का ही रटन किया। यह सुनकर भट्टर स्वामीजी आनंदसागरनिमग्न हुए, और सनिर्बंध उसका श्रीपादतीर्थ लेकर, पीतांबर दक्षिणा आदि से खूब सत्कार कर, विदा देकर तृप्त हो गये। बाद में उन्होंने अपने शिष्यों को देखकर कहा, "तुमने स्पष्ट देख लिया न, कि इन दोनों का निश्चय कैसा है? अनेक शास्त्रों का अध्ययन करने मात्र से क्या लाभ है? और, कुछ भी नहीं पढ़ने से कौन-सी आपत्ति आयेगी? शास्त्र पढ़ना और तत्वनिश्चय पाना ये दोनों अलग अलग चीज हैं" इत्यादि। यह ऐतिह्य प्रकृत स्थल का अत्यंत अनुरूप है॥ .... (६)

(गाथा.) तोळिणै मेलुम् नन्मार्विन् मेलुम् शुडर्मुडि मेलुम् ✲
ताळिणै मेलुम् पुनैन्द तण्णन्तुळा युडैयम्मान् ✲
केळिणै योन्रु मिलादान् किळरुम् शुडरोळि मूर्ति ✲
नाळ्णै न्दोन्रु मइलान् एन्नुडै नावि नुळाने॥ ७॥

(सं.) भुजयुगले विलक्षणे वक्षसि प्रदीप्ते मकुटे चरणद्वन्द्वे च शिशिररुचिरतुलसीस्रगलङ्करणशाली अनुरूपोपमानरहितः तेजस्मामूर्जितो राशिरिवात्मामाना वियोगगन्धरहितनित्यसंश्लेषशीलश्च भगवान् मम रसनामधिवसति॥

लोके कामिनीसकाशमागच्छन् कान्तो यथा स्वात्मानं दिव्यालङ्कारालङ्कृतमाकल्प्य पुंसां दृष्टिचित्तापहारी सन्नागच्छति, तथैव मां रञ्जयितुं सर्वाङ्गीणालङ्कारसम्भृतस्समागत्य रसनामध्यतिष्ठदित्याह मुनिवरोऽत्र। प्रथमग्रन्थे तिरुविरुत्ते मुनिवरोऽसौ भूयसीषु गाथासु तुलसी तुलसीत्येव प्रलपति स्मेति स्मरन् भगवान् अस्य परिपूर्णतृप्तये दिव्यतुलसीमालिकाभिरेव स्वकीयमखिलमङ्गमलकृत्य रसनामाविवेश 'स्वामिन् शठारिमुने! अविरलतुलसीदामसंजातभूमानं मां यावद्रसनानलं सकीर्तयतु भवान्' इति कथयन्निव। जिह्वाग्रसिंहासनमभ्युपेयुषि भगवति सकीर्तनसारस्य किमु वक्तव्यम्! तुलसीस्रगलङ्कियामविहत्य एतादृशी गाथा न कुत्रापि द्रष्टुं शक्येति नातिशयोक्तिः। सत्यमेतादृशाद्वितीयगाथावतारणार्थमेव भगवानधुना शब्दसंदर्भाविर्भावभूमिं रसनामध्यास्त। तुलसीमालां प्रथमतो भुजयुगले बिभर्ति स्म—* सुगाढं परिषस्वजे * इत्याद्युक्तरीत्या गाढपरिष्वङ्गोपकरणभूतकरणालञ्चिकीर्षया। अथ तामुरसि बिभर्ति स्म स्वपुरुषकारस्स्वलमद्वितीयमप्रमेयं च फलतिस्मेति प्रमोदमाना यथा विशेषतः शोभतामिति। अथ तां मौलौ बभार मुनिवरस्यास्य वाग्विशेषैरेव खलु शिरस्त्राणलाभजनिरिति, ततस्तदलङ्करणमावश्यकमिति। अन्ततश्चरणारविन्दमलञ्चकार—शठकोपमुनिवरस्यास्य नाम्नैव हि मम चरणयोः प्रथा भवित्री, तदलङ्करणमत्यावश्यकमिति। अथवा, अदसीयोपदेशमहिम्नैव खलु प्रायस्सर्वे जना इमं चरणमाश्रयिष्यन्तीति विश्वासदृढिम्ना तत्रालङ्करणमविधानम्। रसिकाग्रगण्यानां श्रीपराशरभट्टपादानां निर्वाहस्तु—जगति महावीराः प्रथमतः स्वविजयोपकरणदिव्यहेत्यलङ्करणे समुत्सुका भवन्ति; तथाऽसौ महावीरो निजदिव्यहेतिस्थानभूतं भुजं पुरस्तादलञ्चकार। अथ रासिक्यभूम्ना महिष्यै प्रयच्छन्त्यलङ्करणम्। दशकेऽस्मिन् प्रथमगाथाचरमचरणोक्तरीत्या रसिको रमापतिश्चासौ निजदिव्यमहिषीस्थानमलञ्चकार पश्चात्। महिष्यै दत्त्वाऽथ स्वयमुपभुङ्क्ते हि; एवं स्वशिखां विभूषयन् स्वयमुपबुभुजे। अन्ततोऽवशिष्टं दासेभ्यः खलु ददति; दासभूतानां निपतनस्थानभूते चरणे विन्यास्थत्—इति।

[अनुरूपोपमानरहितः] "उपमानोपमेयत्वं यदेकस्यैव वस्तुनः। इन्दुरिन्दुरिव श्रीमानित्यादौ तदनन्वयः॥" इत्युक्तरीत्या स्वस्य स्वयमेवोपमानभूमिरिति यावत्। सर्वाङ्गीणदिव्यतुलसीस्रगलङ्करणजनितशोभाविशेषस्य सर्वथाऽपि सदृशादरिद्रता किमु वक्तव्या। आगन्तुकालङ्करणविरहेऽपि नैसर्गिकी सुषमैव हि पर्याप्तेति द्योतयन्नाह [तेजसामूर्जितो राशिरिवानभासमानः] इति। * महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः * इति स्तोत्ररत्नानुगृहीतरीत्या महात्मना क्षणमात्रविश्लेषमपि सोढुमशक्नुवन् नित्यसश्लेषसमुत्सुको भवतीत्यभिप्रायकं चरमविशेषणमतिचारु॥ .... (७)

—* सातवीं गाथा—तोळिणैमेलुम् नन्मार्पिन्मेलुम् *—

(हिंदी.) अपने दोनों भुजों, श्रेष्ठ वक्ष, उज्वल मुकुट व उभय पादों पर सुंदर व सुशीतल तुलसी का धारण करनेवाले, अपने योग्य उपमान से विरहित, जाज्वल्यमान तेजोराशि के सदृश और वियोग के विना नित्यसंश्लेष करने के स्वभाववाले भगवान मेरी जीभ में विराजमान हैं॥

प्रकृत गाथा का यह तात्पर्य है कि जैसे कामिनी से मिलना चाहनेवाला नायक अपने को दिव्यालंकारों से सजाकर, पुरुषों के भी मनोनेत्रों का अपहरण करने में समर्थ वेष से जाता है, इसी प्रकार, भगवान भी आळ्वार को प्रसन्न कराने के लिए अपना सारा विग्रह सजाकर, उनकी जिह्वापर विराजमान हो

गये। आळ्वार ने अपने पहले प्रबंध तिरुविरुत्तम् में बारंबार तुलसी का नाम लेते ही प्रलाप किया था; इसका स्मरण कर अब भगवान इनकी परिपूर्ण तृप्ति के लिए, अपने सभी अंगों को तुलसी से सजा कर मानों यों कहते हुए कि, "हे मुनिवर! अब आप अपनी जिह्वा की शक्ति के अनुसार दिव्यतुलसी से अलंकृत मेरी स्तुति कर लीजिए," उनकी जीभ पर विराजमान हो गये। जिस जिह्वातल पर साक्षात् भगवान ही विराजमान हों, उससे निकलनेवाली श्रीसूक्तियों के माधुर्य के बारे में कहना क्या! तुलसी का ऐसा मनोहर वर्णन करनेवाला वचन, सत्य ही, और कहीं नहीं मिलेगा। यह तो सर्वथा सत्य है कि ऐसी मधुर श्रीसूक्ति निकालने के लिए ही भगवान अब आळ्वार की वागिंद्रिय, जिह्वापर विराजमान हुए। अस्तु। अब भगवान के चार अवयवों पर तुलसी का अलंकार उपवर्णित किया गया है। इसका एक कारण रहता है। पहले, भुजों पर धारण करने का यह तात्पर्य है कि भक्तों का आलिंगन करने के अंग भुजों को पहला सन्मान देना आवश्यक है। बाद में श्रीवक्ष में विराजमान श्रीलक्ष्मीजी जो अपने पुरुषकार को सफल होते देखकर प्रसन्न होती हैं, उनको सजाने के लिए श्रीवक्ष पर तुलसी माला का धारण होता है। फिर आळ्वार की स्तुति पाने से सार्थक बने हुए मुकुट का अलंकार करने के लिए सिरपर तुलसी का धारण होता है। अंत में चरणारविंद सजाने का भाव साक्षात् आळ्वार को ही सजाना है; क्योंकि भगवान के श्रीपादों का नाम ही श्रीशठकोप होता है। अथवा आळ्वार के उपदेश सुननेवाले जन सुधरकर भगवान के श्रीचरणों का आश्रय लेते हैं; अतः सर्वजनशरण्य उनका अलंकार करना आवश्यक है।

रसिकचक्रवर्ती श्रीपराशरभट्टार्य स्वामीजी दूसरे प्रकार इसका तात्पर्य बताते थे। तथाहि—लोक में हम देखते हैं कि विजय पानेवाले वीर जन पहले अपनी विजय के हेतु आयुधों का अलंकार करते हैं; इसी प्रकार गवान ने भी पहले अपने बाहुओं का अलंकार करने बहाने बाहु पर विराजमान शंखचक्रों का ही अलंकार किया। फिर रसिकता से अपनी प्रेयसी को अलंकार देना आवश्यक होता है। इस दशक की पहिली गाथा के अंत में बताया गया कि भगवान बडे रसिक हैं। अतः उन्होंने आयुधों के बाद श्रीलक्ष्मीजी को सजाया (माने श्रीवक्षपर तुलसी पहना)। महिषी को देने के बाद स्वयं उपयोग करना रसिकों का संप्रदाय है; इस न्याय से भगवान ने तुलसी को श्रीवक्ष के बाद अपने सिरपर रखा। अंतमें प्रसाद तो दासों को दिया जाता है; इस प्रकार तुलसी भी इतने उपयोग होने के बाद भक्तों के स्थान (अर्थात् जहां भक्त प्रणाम करते हैं, ऐसे) चरणकमलों पर रखी गयी।

[अपने योग्य उपमान से विरहित] "एकमेवाद्वितीयम्" पुकारे जानेवाले भगवान् का भी उपमान दूसरा कौन हो सकता है? तदुपरांत आपादचूड तुलसीमाला से अलंकृत हो जाने के बाद, कहने की बात ही नहीं। वस्तुतस्तु भगवान को अपनी शोभा बढाने के लिए कोई आभूषण पहनने की आवश्यकता ही कौन-सी है, जब वे स्वयं आभूषणों के भी आभूषण हैं? (अर्थात् आभूषण के बिना भी शोभायमान हैं!) यह अर्थ कहा जाता है [जाज्वल्यमान तेजोराशि के सदृश] कहने से। अंतिम विशेषण का यह तात्पर्य है कि भगवान इतने सुकुमार हैं कि वे अपने भक्तों के एक क्षण मात्र के विरह का भी सहन नहीं कर सकते; और अत एव उनसे नित्यसंश्लिष्ट ही रहना चाहते हैं। यथा स्तोत्ररत्न में गाया गया—महात्मभिर्मामवलोक्यतां नय क्षणेऽपि ते यद्विरहोऽतिदुस्सहः॥ .... .... (७)

(गाथा.) नाविनुळ् निन्रु मलरुम् ञान क्कलैहळु केल्लाम् *
आवियु माक्कैयुम् ताने अळिप्पो डळिप्पवन् ताने *
पूवियल् नाल्तड न्तोळन् पोरुपडै यालि शङ्गेन्दुम् *
काविनन्मेनि कमल कण्णन् एन्कण्णि नुळाने ॥ ८ ॥

(सं.) (गाथाया अस्या भगवद्रामानुज दिव्याज्ञावतीर्ण षट्सहस्रिकाव्याख्यानं परमभोग्य संस्कृतवाक्यजटिलमिति प्रायस्तद्वाग्भिरेव पूर्यते प्रतिपदार्थटीका।) साङ्गसकलवेदप्रतिपाद्यः तत्स्वरूपस्थितिप्रवृत्तिहेतुभूतः निखिलजगदुदयविभवलयलीलः पुष्पहाससुकुमारश्चतुर्भुजः शङ्खचक्रगदाधर इन्दीवरदलश्यामः कमलपत्राक्षो भगवान् मम चक्षुषि प्रविष्टः ॥

गाथायामस्यां भगवतस्स्वचक्षुर्निष्ठत्वकथनेन अत्र प्रयुज्यमानैस्सर्वैरपि विशेषणैः प्रतिपन्ना अर्था मुनिवरस्यास्य स्वचक्षुर्विषयभूतास्सन्तो वाचो निस्सरन्तीति प्रतिपत्तव्यम्। जिह्वाग्रनर्तनसमुज्जृम्भमाणानां ज्ञ नसाधनभूतानां सर्वासामपि कलाना अर्थस्य शब्दस्य च निर्वाहको भगवानिति स्थितं मूलगाथायाम्; एतत्सारसंक्षेपः साङ्गसकलवेद प्रतिपाद्य इति। अयमर्थः कथमिव चक्षुषा वीक्षितुमर्हो भवति मुनिवरस्येति चेत् उच्यते। * प्रत्यक्षमेक चार्वाक इत्युक्तरीत्या प्रत्यक्षमात्रप्रामाण्यस्वीकर्तृचार्वाकमतेऽपि वेदप्रामाण्यमनपायमिति सुनिपुणमुपपादयद्भिः श्रीपराशरभट्टार्यैः श्रीरङ्गराजस्तवोत्तरशतके—* प्रत्यक्षा श्रुतिरर्थधीश्च, न तथा दोषः, तदर्थः पुनर्धर्माधर्मपरावरेश्वरमुखः प्रत्यक्षबाध्यो नच। तच्चार्वाकमतेऽपि रङ्गरमण! प्रत्यक्षवत्सा प्रमा * इति पादत्रितयेन वेदवेदार्थयोः कयाचन विधया प्रत्यक्षतामुपपाद्य, अथ चतुर्थचरणेन * योगोन्मीलितधीस्तदर्थमथवा प्रत्यक्षमीक्षेत सः * इत्यनेन योगिनामव्यवधानेन वेदार्थसाक्षात्कर्तृत्वमभ्यधायि। मुनिवरश्चासौ योगिनामग्रेसरः। अत एव त एव भट्टपादाः * ऋषिं जुषामहे कृष्णतृष्णातत्त्वमिवोदितम्। सहस्रशाखा योऽद्राक्षीद् द्राविडीं ब्रह्मसंहिताम् ॥ * इत्यमितुष्टुवुर्मुनिवरमेनम्। अत्र ऋषिरिति व्यपदेशः अद्राक्षीदिति क्रिया चावधीयेताम्। अतश्च सर्वमर्थं न केवलं मनसा, अपितु चक्षुषा च साक्षात्कृत्यैव व्याहरति मुनिवरोऽसाविरुयवारणमनगलम् ॥ सर्वप्रमाणगतानां शब्दानामर्थानां च भगवानेव निर्वाहक इत्युक्त्या फलितमिदमेव यदुत वैदिकेषु शब्देष्वर्थेषु च स एव निविष्ट इति। * वचसां वाच्यमुत्तममित्येतद् पुनरपि स्मार्यते। यद्वा, 'अस्मात्पदादयमर्थो बोद्धव्य' इतीश्वरसंकेतः खलु शक्तिः। तस्याश्शके यदस्ति तादधीन्य तदिहोच्यत इत्यप्याहुराचार्याः।

[तत्स्वरूपस्थितिप्रवृत्तिहेतुभूतः] तच्छब्दः पूर्वोक्तज्ञानसाधनीभूत सकलकलापरः। जगतां स्वरूपस्थितिप्रवृत्तीरिव शब्दराशीनां स्वरूपाण्यपि स एव निर्वहतीत्यर्थः। "मन्दमतीनां चेतनानां प्रतिपत्तिदोषैर्लेखकदोषैः पाठभेदादिभिश्च विकारेषु संभवत्सु तदुपसंहारकर्ता, अपेक्षावसरेषु पुनस्तदाविष्कर्ता" इति व्याचक्षते गुरुचरणाः ॥ अथ पुष्पहाससुकुमारतरत्वं चतुर्भुजत्वं शङ्खचक्रगदाधरत्वं इन्दीवरदलश्यामत्वं कमलपत्राक्षत्वं च स्वचक्षुषा साक्षात्कृत्यैव कथयति मुनिवरोऽसाविति तदेतद्विवरणनिरपेक्षम्। * यमेवैष वृणुते तेन लभ्यः * इत्युक्त्यनन्तरम् * तस्यैष आत्मा विवृणुते तनूं स्वाम् * इत्यपि खल्वाह नायमात्माश्रुतिः। 'स्वां तनूं तस्य विवृणुते'—स्वदिव्यावयवविशेषान् सर्वानपि स्वयमेव सुविशदं साक्षात्कारयति परमात्मा इति किल तदर्थः ॥

—※ आठवीं गाथा—नाविनुळ्निन्ऱु मलरुम् ※—

**(हिंदी.) जीभसे निकलनेवाले, ज्ञानसाधनभूत सांगवेदादि समस्त शास्त्र व तदर्थरूपी, उनके स्वरूपस्थितिप्रवृत्तिहेतु, समस्तजगत के सृष्टिस्थितिसंहारों के कर्ता, पुष्पहास सुकुमार चार भुजवाले, शंखचक्रगदाधर, नीलोत्पलश्याम विग्रहवाले और कमलनयन भगवान मेरे नेत्र में विराज रहे हैं ॥**

इस गाथा मे आळ्वार भगवान को अपने नेत्र में प्रविष्ट बता रहे हैं; इससे यह सूचित किया जाता है कि इस गाथा में प्रयुक्त सभी विशेषणों के अर्थ आळ्वार के अपने नेत्रों से साक्षात्कृत हैं; अर्थात् आळ्वार अपनी आँखों से भगवान की कतिपय विशेषताओं को साक्षात्कार कर, अब उन्हींका वर्णन कर रहे हैं। भगवान को [वेदादि समस्तशास्त्र व तदर्थरूपी] कहने का यह भाव है कि भगवान उन सबके प्रवर्तक और उनके वेद्य हैं। यहांपर यह शका हो सकती है कि आळ्वारने इस अर्थका कैसे साक्षात्कार पाया; क्योंकि यह तो आँखों से नहीं देखा जा सकता। इसका यह समाधान है कि योगिश्रेष्ठ महात्मा अतीन्द्रिय अर्थों का भी साक्षात्कार पा सकते हैं; अत एव कितने ही महर्षि मंत्र द्रष्टा, मंत्रार्थद्रष्टा इत्यादि पुकारे जाते हैं। श्रीशठकोप सूरी भी भगवत्कृपा से सिद्ध ऋषि हैं ही; सहस्रगीति भी उनसे 'दृष्ट' द्राविडी ब्रह्मसंहिता (अर्थात् द्राविडवेद) है। यथा श्री पराशर भट्टार्य स्वामीजी ने कहा—"ऋषिं जुषामहे कृष्णतृष्णातत्वमिवोदितम्। सहस्रशाखा योऽद्राक्षीत् द्राविडीं ब्रह्मसंहिताम् ॥ (अर्थात् हम श्रीशठकोप ऋषि का सेवन करेंगे जो साक्षात् श्रीकृष्णप्रेम का अपरावताररूप, और सहस्रगीतिनामक द्राविड उपनिषद के द्रष्टा हैं।" तथाच यह अर्थ निश्चित हुआ कि आळ्वार समस्त अर्थों को, अपने मनसे नहीं, किंतु नेत्रों से देखकर ही दिव्यप्रबंध गा रहे हैं। अब भगवान स्वयं वेदादि समस्त शास्त्ररूपी, उनके नियामक, उनके प्रतिपाद्य, शब्द व अर्थों के संबंध के नियामक इत्यादि प्रतिपादित किये जा रहे हैं। अर्थात् "अमुक शब्द का अमुक अर्थ है" करके लोक में (तथा वेद में) शब्दार्थों का जो नियत संबंध है वह भगवदधीन बताया गया। [उनके स्वरूपस्थिति प्रवृत्ति हेतु] कहने का यह तात्पर्य है कि भगवान ही समय पर समस्त शास्त्रों को प्रकाशित करते हैं, उनका पालन करते हैं और अंततः एक समय उनका उपसंहार भी कर देते हैं। यहां पर पूर्वाचार्यों का यह व्याख्यान है—"मंदमतियों के बुद्धिदोषों लेखकदोषों तथा पाठ भेदादियों से जब शास्त्र बहुत विकार पाते हैं, तब भगवान उनका उपसंहार, और बादमें योग्य अवसर पाकर पुनः आविष्कार करते हैं।" यह कहने की आवश्यकता नहीं रहती कि आळ्वार भगवान के दिव्य-मंगलविग्रह के साक्षात् दर्शन पाकर ही उन्हें पुष्पहास सुकुमार, चार भुजवाले, शखचक्रगदाधर, नीलोत्पल-श्याम और कमलनयन कह रहे हैं। प्रसिद्ध "नायमात्मा" श्रुति कहती है कि, "यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्।" अर्थात् भगवान जिसपर कृपा करते हैं, उसे अपने सारे दिव्य-मंगल विग्रह के सुविशद दर्शन देते हैं, जिसे वह समस्त अगोपांग, अस्त्रभूषण आदियों का पूर्ण अनुभव कर सकें ॥ .... .... .... .... .... (८)

(गाथा.) कमल कण्ण नेन्कण्णि नुळ्ळान् काण नवन्कण्णळाले *
अमलङ्गळाह विळिक्कुम् पेम्युलनु मरन्मूर्ति *
कमल चयत्ताम्नि तन्नै कण्णुदला नोडुम् तोचि *
अमल चेय्यचो डुलह माकि एन्नेचि युळाने ॥ ९ ॥

(सं.) पुण्डरीकाक्षो मम चक्षुर्विषय आसीत्; सम्यगवलोकयामि तमहम्; सोऽपि सर्वथा मामनवद्यमाकलयन्नवेक्षते। मदीयपञ्चेन्द्रियवृत्तिरपि तत्परैव। स क इति चेत्, सरसिजासन ललाटनेत्रादिदेवगणमनाथं सकलमेव जगतीतलमुत्पादितवान्। स इदानीं मम ललाटस्थानमधितिष्ठति ॥

चक्षु प्रदेशान्निटिलप्रदेशमधितस्थौ भगवान्, तदिहोच्यते। ब्रह्मादिस्थावरान्तसकलजगत्स्रष्टा कमलनयनो भगवान् यदा मम चक्षु प्रदेशमवतगाहे तदा तमहं सम्यगेव साक्षात्कृतवानस्मि। सोऽपि स्वकीयशिशिरकटाक्षवीक्षाप्रसारणेन मम सकलानि दुरितानि दूरीकुर्वन् सन् मामेवावलोकते—इति कथनेन मुनिवरोऽयं विशिष्टाधिकारित्वमावेदयते। कथमिति चेत्, * न चक्षुषा गृह्यते * न सद्दशे तिष्ठति रूपमस्य * न मांसचक्षुरभिवीक्षते तम् * इत्यादि श्रुतिप्रतिपादिता प्रक्रिया सामान्यप्राकृतजनताविषयैव केवलम् न तु श्रीशठकोपसूरिप्रभृति विलक्षणाधिकारिविषयेति प्रतिपत्तिं द्रढयति गाथेयम्। अथ च, मम दुरितानि दूरीकुर्वन् स भगवान् मामवलोकत इत्यत्र श्रमणीविदुरादयः स्मृतिपथं नेतव्याः। * श्रमणीं धर्मनिपुणामभिगच्छेति कबन्धवाचा * सोऽभ्यगच्छन्महातेजाः शबरीम् * इत्युक्तरीत्या भगवता दाशरथिना स्वयमेव समुपेत्य विपरीकृता सदाचार्यसेवानिरता श्रमणी * चक्षुषा तव सौम्येन पूताऽस्मि रघुनन्दन! * इति—भगवन्! तव दिव्यकटाक्षपातेन प्राप्तिप्रतिबन्धकसकलदुरितविमुक्ताऽहमभूवमिति कथितवती। अभिजनाद्यहङ्कार मोघवाग्वैनापि विदुर विदुर महात्मान भगवान् वासुदेवः स्वकटाक्षवीक्षाप्रसारणेन पुनीतेरमेत्यय विषयो महाभारते अत्यन्तवैलक्षण्यप्रक्रियया समसूचि, * निवासाय ययौ वेश्म विदुरस्य महात्मन * इत्युक्तरीत्या स्वयमेव तस्य भवनमुपसृत्य * विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च * इत्युक्तरीत्या तदुपहृतमन्नमाश्नात्। भगवन् कृष्णस्य कटाक्षवीक्षणेनायं परिपूतोऽभूदिति व्यासो महर्षिश्च नाकथयत्, शबरीवद्विदुरोऽपि स्ववाचा नात्रवक्ते। परतु विदुरवेश्मनि भुक्त्वा समागतोऽयमेति ज्ञात्वा तमिममधिक्षिपन् दुर्योधन * भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन!। किमर्थं पुण्डरीकाक्ष! भुक्तं वृषलभोजनम्॥ * इत्यनुयुञ्जान पुण्डरीकाक्षेति सम्बोधयामासेत्यवलोक्यते। गर्हणकाले हे जाल्म! हे मूर्खेति वक्तव्ये पुण्डरीकाक्षेति पूजोक्तिकथन मन्त्रशाद्वि समजनि, भवदीय पुण्डरीकदलामलायतेक्षणवीक्षणेन विदुरस्स पवित्रितोऽभूदिति स्वयमेव समुद्घाटयदिव। एवमेव भगवत कटाक्षवीक्षाप्रसर पापनिर्हरणनिपुण इतीतिहाससिद्धम्। अनयैव प्रक्रियया मुनिवरोऽत्र स्वस्यापि तत्कटाक्षपातपरिपूतता स्वयं प्राहेति ध्येयम्।

[मदीयपञ्चेन्द्रियवृत्तिरपि तत्परैव।] चक्षुर्व्यतिरिक्तेन्द्रियाणामन्यपरत्वे सति चक्षुष केवलं भगवत्प्रवणता न कस्मा अपि फलाय कल्पेत। न तादृशमवधमित्यमिधीयत इव। इदानीमनुभूयमानसौलभ्यप्रतिकोटिभूत परत्वगुणोऽनुभूयते सरसिजासनेत्यादिना॥ (९)

—※ नवमी गाथा–कमलक्कण्णनेन्कण्णिनुळ्ळान् ※—

**(हिंदी.) कमलनयन भगवान मेरी आँखों के विषय हुए; अतः मैं ठीक उनके दर्शन कर रहा हूं। वे भी मुझको सर्वथा दोषदूर बनाते हुए देख रहे हैं। मेरी पांचों इंद्रियों के भी वे विषय हैं। वे ये हैं कि जिन्होंने कमलासन (ब्रह्मा), ललाटलोचन (शिव) इत्यादि देववर्ग के साथ सकल जगत की सृष्टि की। ऐसे भगवान अब मेरे ललाट पर विराजमान हैं ॥**

इस गाथा में आळ्वार कह रहे हैं कि भगवान मेरे नेत्र से ऊपर चढ़कर ललाट पर विराजमान हुए; और जब ब्रह्मादि स्थावरांत जगत की सृष्टि करनेवाले कमलनयन वे मेरे नेत्र में विराजमान थे, तब मैंने उनके परिपूर्ण दर्शन किये; और उन्होंने भी मुझ पर अपना सुशीतल कटाक्ष डाल कर मेरे समस्त पापों को दूर कर दिया। इससे आळ्वार की एक असाधारण विशेषता बतायी जाती है। तथाहि—वेदादिशास्त्र बारंबार घोषणा करते हैं कि भगवान मांसचक्षु के गोचर नहीं होते; अर्थात् कोई भी मानव अपनी पाञ्चभौतिक आँखों से उनके दर्शन नहीं कर सकता। अब तो आळ्वार कह रहे हैं कि मैंने अपनी आँखों से उनके खूब दर्शन किये। इससे यह अर्थ सूचित किया जाता है कि पूर्वोक्त शास्त्र साधारण मानवों की ही बात कर रहे हैं और आळ्वार उसका अपवाद है; अर्थात् आप ऐसी एक विशिष्ट व्यक्ति हैं जो भगवान की विशेष कृपा का पात्र होकर उनके साक्षात् दर्शन ही कर सकते हैं। [**वे भी मुझको सर्वथा दोषदूर बनाते हुए देख रहे हैं।**] यह वाक्य शबरी विदुर आदियों का स्मारक है। इनके चरित्र से यह अर्थ स्पष्ट विदित होता है कि भगवान का कटाक्षपात मानव के समस्त पापों को भी दूर करनेवाला होता है। तथाहि—श्रीरामचंद्र भगवान कबंध के उपदेश से शबरी को ढूंढ़ते हुए उसके यहां पधार कर, जब उससे मिले, तब सदाचार्यसेवानिरत वह भक्ता बोल उठी कि "चक्षुषा तव सौम्येन पूतास्मि रघुनंदन," (अर्थात् हे रामचंद्र! मैं आपके सौम्य कटाक्षपात से परिशुद्ध बन गयी, माने सद्गति प्राप्त करने में विघ्न डालनेवाले समस्त पापों से मुक्त हो गयी)। एवं कुलमद धनमद इत्यादि दोषों से दूर विदुरजी पर श्रीकृष्ण भगवान ने केवल अपनी विशेष कृपा से विलक्षण अनुग्रह किया; अर्थात् संधि कराने के उद्देश्य से हस्तिनापुर पधारने के समय, अपनी प्रतीक्षा करते बैठे हुए भीष्मद्रोण दुर्योधन आदियों की उपेक्षा कर, वे अचानक विदुरजी के घर पधारे। विदुरजी की सपने में भी यह कल्पना नहीं थी कि भगवान मेरे घर पधारेंगे। वे थे सर्वथा गरीब। तथापि उन्होंने कल्पनातीत प्रेम के साथ भगवान की सेवा की; अन्न का अर्पण किया। भगवान ने भी "विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च" (माने विदुरजी से समर्पित पवित्र व रसपूर्ण अन्न खाया)।

पर प्रश्न यह है कि इस वाक्य में विदुरान्न को कैसे शुचि कहने में आया, जब विदुर नीच जाति के थे। आचार्य इसका यह समाधान देते हैं कि भगवान के कटाक्ष का लक्ष्य होकर विदुरजी का अन्न पवित्र हुआ। यह अर्थ ऐसे स्पष्ट शब्दों से महाभारत में उपवर्णित नहीं; परंतु एक विलक्षण ढंग से सूचित किया गया है। दुर्योधन भगवान की खुशामद करने के लिये धूमधाम से उनका स्वागत करना चाहता था। भगवान को उसकी यह चालबाजी पसंद न हुई; अतः वे उसे धोखा देकर विदुरजी के यहां चले गये। इससे रुष्ट दुर्योधन ने उनसे पूछा कि, "भीष्मद्रोणावतिक्रम्य मां चैव मधुसूदन। किमर्थं पुण्डरीकाक्ष! भुक्तं वृषलभोजनम्॥"

(अर्थात् भीष्म द्रोण और मुझको छोडकर, हे मधुसूदन! कमलनयन! तुमने क्योंकर शूद्र का अन्न खाया! इसमें यह विचारार्ह है कि भगवान की निंदा करनेवाला दुर्योधन, क्योंकर उन्हें 'कमलनयन' सम्बोधित कर रहा है। इसका यह तत्व है कि यह वचन दुर्योधन की स्वबुद्धि से प्रयुक्त नहीं; परंतु अन्तर्यामी की प्रेरणा से उसके मुख से निकला हुआ शब्द है। कहने का यह तात्पर्य है कि जब दुर्योधन को भगवान का तिरस्कार करने का विचार हुआ, तब उसी समय भगवान ने उसके मन में यह समाधान बनाया कि मैंने अपने कमल-सदृश नेत्र के कटाक्षों से विदुर को परिशुद्ध बना कर बाद में उसका अन्न खाया। अतः दुर्योधन के मुँह से अचानक यह वाणी निकली, 'पुंडरीकाक्ष'। तथाच इन दोनों इतिहासों से यह अर्थ सिद्ध किया जाता है कि भगवान का कटाक्ष पापविनाशक होता है। अतः हालमें आळ्वार कहते हैं कि ऐसे भगवान के कटाक्ष से मेरे पाप भी नष्ट हुए। [**मेरी पांचों इंद्रियों के भी वे विषय हैं**] कहने का यह भाव है कि यदि दूसरी इंद्रिय दूसरी वस्तु के अनुभव करें और केवल नेत्र भगवान के दर्शन करें, तो उसमें कोई रस नहीं मिलेगा; अतः आळ्वार कह रहे हैं, कि मुझे ऐसा दोष नहीं हुआ, मेरी सभी इंद्रिय एक मात्र भगवान पर लगा हैं और मैं उनका परिपूर्ण अनुभव कर रहा हूं। [**कमलासन**] इत्यादि गाथा के अवशिष्ट भाग से भगवान के प्रसक्त सौलभ्य के प्रतिद्वंद्वि परत्व का वर्णन किया गया है॥ ...(९)

(गाथा.) नेत्तियुळ्ळ् निन्रै याळुम् निरैमलर् प्पादङ्गळ् शूडि *
कत्तुळाय् मुडिकोलक् (मु) कण्ण पिरानै चोल्वार् *
ऒत्तिप्पिरै यणिन्दानुम् नान्मुहनु मिन्दिरनुम् *
मत्ते यमररु मेल्लाम् वन्दु एनदुचि युळाने॥ १०॥

(सं.) मदीयललाटस्थले निविश्य मच्छेषभावं सुप्रतिष्ठितमादधानं चरणारविन्दद्वन्द्वमवतंसपदे निधाय दिव्यतुलसीस्रगलंकृतमूर्धानं परमपुरुषं प्रणमन्तो महानुभावाः चन्द्रशेखर श्चतुर्मुखश्शचीपतिरन्ये च सर्वेऽमराः; एतादृशप्रभावशाली स एव भगवान् मम मूर्धानमधिरुरोह॥

ब्रह्मादयो महाभागा यमुपसृत्य सदा तच्चरणारविन्दद्वन्द्वमस्तत्प्रतीक्षास्सन्ति, तत्तादृशवैभवशोभिर्महापुरुषो मम मूर्धानमधिरोढुमुत्कण्ठितो भूत्वा सात्म्यभोगप्रदित्सया क्रमेण मम मूर्धानमधिरुरोहेत्यमन्दानन्दसंदोहवनमुच्यते गाथयाऽनया। चन्द्रशेखर चतुर्मुख शचीपतिप्रभृतयो देवा भगवत्पादारविन्दद्वन्द्वमवतंसयन्तीति भगवत्प्रभावप्रख्यापनार्थमेतावदिह विवक्षितम्। तस्य चरणारविन्दद्वन्द्वस्य यद्विशेषणं दत्तमुपक्रमे तदत्यन्तमवधेयम्। "मदीयललाटस्थले निविश्य मच्छेषभाव सुप्रतिष्ठितमादधानम्" इति यदस्ति भगवच्चरणद्वन्द्वविशेषणम् तत् मुनिवरस्यास्य परमवैष्णवता प्रकाशयति। हरिपदद्वन्द्वाकारमूर्ध्वपुण्ड्रं धारयित्वा स्वयं स्वशेषत्वप्रतिष्ठां प्रतिपेद इति स्पष्टं हि प्रकाशितं भवति। स्वललाटे भगवदवस्थानं मस्तन गाथाया मभिहितम्। अत्र तु चरणारविन्दद्वन्द्वावस्थानमभिधीयते। एतच्चावस्थानमूर्ध्वपुण्ड्राकारत्वेनेति ध्येयम्।

विशेषतोऽवधेयम् । गाथायामस्या वाक्यभेदो वर्तते । चन्द्रशेखरामरप्रणतपादारविन्दद्वन्द्व इति वाक्य सन्निवेशमनाकर्ण्य "परमपुरुष प्रणमन्तो महानुभावाश्चन्द्रशेखरादयोऽमरा" इति पृथग्वाक्यविन्यसन हि वर्ततेऽत्र । एवंविधवाक्यसन्निवेशेन कमपि रस्यतममर्थविशेषमभ्यूहन्त्याचार्यचरणा —महाप्रभुषु अवरोधे एकस्मादङ्गणादङ्गणान्तर प्रविशत्सु यथा ह्यन्तरङ्गभूतास्तत्रोपसृ य स्वामिनमितः फलविशेष लब्ध्वा कृतकृत्या भवन्ति, तथा सर्वेश्वरे मुनिवरस्य ललाटतलान्मूर्धानमवगाहमाने ब्रह्मादयो मध्ये मुख प्रदर्श्य स्वकार्यसाधनप्रवणा भवन्तीति । वाक्यभेदमन्तरा विशेषणतया प्रयोगे कृते सोऽयमर्थविशेष उपन्यसितुमशक्यो भवेदिति सारस्वतसारज्ञा विजानीयु ॥ (१०)

—※ दसवी गाथा—नेत्तियुळ् निन्रेनैयाळुम् ※—

**(हिंदी) मेरे ललाटपर विराजकर मेरे शेषत्व को सुदृढ बनानेवाले भगवानके उभय पादारविंदों को चंद्रशेखर, चतुर्मुख, शचीपति इत्यादि देवगण, अपने सिर पर धारण कर दिव्यतुलसीमाला से अलंकृत मकुटवाले उनका प्रणाम कर रहे है। ऐसे प्रभाववाले भगवान अब मेरे सिरपर विराजमान हो गये॥**

इस गाथा में आळ्वार सानंद यह उद्गार कर रहे हैं कि ब्रह्मादि बड़े बड़े देवता जिनकी सेवा कर धन्य बनने के योग्य अवसर की प्रतीक्षा कर रहे है, ऐसे महामहिम भगवान मेरे सिर पर चढने को उत्कंठित होकर, तथापि मुझे सात्म्यभोग का प्रदान करने की इच्छा से धीरे धीरे ऊपर चढते हुए अतत अब सिर पहुच कर वहा पर सुदृढ प्रतिष्ठित हो गये। भगवान का वैभव बताने के लिए चंद्रशेखर आदियों की बात की गयी ह। भगवान के चरणारविंदो का जो विशेषण दिया गया है कि, [**मेरे ललाट पर विराजकर मेरे शेषत्व को सुदृढ बनानेवाले**] यह आळ्वार की परमवैष्णवता का प्रतिपादक है। इसका यह अर्थ है कि आळ्वार ने भगवच्चरणारविंदों के सदृश ऊर्ध्वपुंड्र को धारण कर सुदृढ भगवच्छेषत्व पाया। पिछली गाथा में आळ्वार ने खुद भगवान को ही अपने ललाट पर विराजमान बनाया, अब तो उनके चरणारविंदो को ऐसे बता रहे हैं। इसका यही अर्थ समझना चाहिए कि भगवान के उभयपादारविंद आळ्वार के भाल पर, अपने समान आकारवाले ऊर्ध्वपुंड्र तिलक के रूप में विराजमान हैं।

इस गाथा में और एक वाक्य ध्यान देने योग्य है। प्रकृत गाथार्थ को, "चंद्रशेखरादि देवों से संसेवित, और मेरे भाल पर विराजमान उभय पादारविंदवाले" इत्यादि एक वाक्य में कहना सरल था। परतु यहा दो वाक्य बनाये गये हैं। इनमें से एक वाक्य यह है कि, "चंद्रशेखरादि देवता भगवसेवा करने के लिए योग्य अवसर की प्रतीक्षा कर रहे हैं।" इस वाक्यसन्निवेश से हमारे पूर्व आचार्य एक अद्भुत अर्थ निकालते हैं—जैसे कोई एक महाप्रभु विशाल व सुमनोहर अपने प्रासाद म एक कमरे से दूसरे कमरे जाता है, और वह अवसर पाकर अतरंग भक्त जन उससे मिलकर, योग्य सेवा कर उससे अपने इष्ट पुरुषार्थ पाते हैं, अर्थात् कमरे के अदर रहने पर प्रभु से मिलना कठिन होगा, और प्रभुके अतःपुर छोड कर बाहर आस्थान मंटप आने में बहुत देर लगेगी तब तक ये लोग उनकी राह देखते नहीं

बैठ रह सकते, अत दूसरे कमरे में जाने के लिए उसके बाहर आने ही ये लोग उससे मिलने को उत्कंठित होते हैं, इसी प्रकार जब भगवान आल्वार के एक अवयव का अनुभव करने के बाद, दूसरे अवयव पर चढ़ने का प्रयत्न करते हैं, ठीक यह अवसर पाकर चद्रशेखरादि देवता भगवान की सेवा कर उनसे अपने अपेक्षित पुरुषार्थ माँग लेते हैं ॥ (१०)

(गाथा) उच्चियुळ्ळे निर्कुम् देवदेवर्कु कण्ण पिरार्कु *
इच्चियुळ् शेल्ल वुणर्चि वण्कुरुहूर् शठकोपन् *
इच्चोन्न चायिरत्तुळ् इवैयुमोर् पत्तेम्बिरार्कु *
निच्चलुम् विण्णप्पम् शेय्य नीळ्कळल् शेन्नि पोरुमे ॥ ११ ॥

(स) मूर्धन्येवावतिष्ठमानस्य देवाधिदेवस्य श्रीकृष्णपरमात्मनः स्वस्मिन् संजातमभिनिवेशं सम्यगवबोध्य श्रीकुरुकापुराधिनाथ श्रीशठकोपमुनीन्द्रेण कीर्तिते सहस्रे अद्वितीयमेतद्दशकं भगवदग्रे विज्ञापयतां वैष्णवानां भगवत्पादारविन्दमवतंसपदं स्यादिति फलकीर्तनेन समापित-मिदं दशकम् ॥

मुनिवरोऽस्य क्रमशो यदलभत फलमुत्तुङ्ग तत् एतद्दिव्यसूक्तिविज्ञापनप्रवणानां सतामनायासलभ्य स्यादिति कथ्यते । एकैकमवयवविशेष विहाय क्रमशः उपर्युपर्यवयवान्तरेषु स्पृहातिशयेन सगतस्य भगवत इत पर गन्तव्यस्य स्पृहणीयस्य वा स्थानान्तरस्याभावेन मूर्धन्येवावस्थिति रुच्यते । * श्रुतिशिरसि विदीते ब्रह्मणी'त्युक्त-रीत्या श्रुतिशिरसि विभ्राजमानस्य भगवत परमश्रुतिमूलभूतस्य मुनिवरस्य शिरसि सप्रति विभ्राजमानता भगवतो धिया भाग्यानामुपरि परिगणनीया खलम् । [परमश्रुति —सहस्रगीत्यात्मिका द्रमिडश्रुति , ■ मूलभूत स एष शठकोपमुनिरिति ध्येयम् ॥] मूर्धन्येवावतिष्ठमानस्य देवाधिदेवस्येति समभिव्याहारबलात् मुनिवरमूर्धन्यव-स्थानत एव स्वस्य देवाधिदेवत्व मन्वविन्ददिति कथित भवतीति रसिकमणीनामाचार्याणा व्याख्या । स्वतो देवाधिदेवो भगवान् हन्त' ममूर्धन्यवस्थानाद्रा मान कृतकृत्य मन्यत इति विस्मयते मुनिवर इत्यपि सुवचम् । मुनिसार्वभौमेऽस्मिन्नेतादृशमभिनिवेश प्रदर्शयितु मुत्सुक परमपुरुषो गोपीजनवल्लभ एव भवितुमर्हतीति द्योतयन्नाह श्रीकृष्ण परमात्मन इति । दशकेऽस्मिन् स्वावयवेषु भगवान् व्यासक्तोऽभूदिति कथन स्वप्रशसार्थं न, अपितु भक्तजनेषु भगवतोऽभिनिवेश एवविध इति प्रत्यापनेन तस्यान्त करणमाह्लादयितुमिति द्योत्यते अभिनिवेशं सम्यगवबोध्येत्यनेन ॥ (११)

—* द्रमिडोपनिषत्सगति * —

आत्मार्जवानुभवकौतुकिनोऽस्य शौरि गत्मोपभोगरुचिमभ्यधिका ददानः ।
देव्यादिवद्रसयिता क्रमतोऽखिलाङ्गान्याशिश्रियच्चदवदन्नवमे शठारिः ॥

—* ग्यारहवीं गाथा—उच्चियुळ्ळे निक्कुम् देवदेवर्क्कु *—

**(हिंदी.) अपने सिर पर ही विराजनेवाले देवाधिदेव श्रीकृष्ण भगवान के अपने प्रति समुत्पन्न उत्कट अभिनिवेश को ठीक समझाते हुए, श्रीकुरुकापुरी में अवतीर्ण श्री शठकोपसूरी से अनुगृहीत इस सहस्रगीति के अंतर्गत इस दशक की भगवत्संनिधि में विनती करनेवाले भक्तों के सिर पर भगवान के पादारविंद नित्य ही विराजेंगे। [इस फलश्रुति के साथ यह दशक समाप्त किया गया॥]**

इस गाथा में यह फलश्रुति गायी गयी है कि आळ्वार ने धीरे धीरे जो फल पाया, वह महान फल भगवत्संनिधि में इस दशक की विनती करनेवाले भक्तों को अनायास, और नित्य ही मिल जायगा। आळ्वार के एकैक अवयव का अनुभव करने के बाद दूसरे अवयव में आशा करनेवाले भगवान जब उनके सिर पहुंच गये, तब उसे भी छोडकर आगे बढने की उनकी इच्छा न हुई और जगह न मिली; अतः वे उधर ही स्थिरप्रतिष्ठित हो गये। महापुरुषों के "श्रुतिशिरसि विदीप्ते ब्रह्मणि श्रीनिवासे" इत्यादि कथन के अनुसार जो भगवान श्रुतियों के सिरपर विराजते हैं; उन्हें परमश्रेष्ठ श्रुतिमूल श्रीशठकोपसूरी के सिर पर विराजना भी अत्यंत उचित है, और उनके अभिप्राय से यह उनके अहोभाग्य की बात है। [परमश्रेष्ठ श्रुति—सहस्रगीति नामक द्राविडवेद; उसका मूल—गायक श्री शठकोपसूरी हैं।) [**सिरपर ही विराजने-वाले देवाधिदेव**] कहने से यह अर्थ सूचित किया जाता है कि भगवान आळ्वार के सिरपर विराजने से देवाधिदेव बने। अथवा आळ्वार इस बात का आश्चर्य पा रहे हैं कि स्वयं देवाधिदेव भगवान मेरे सिर पर विराज कर ही अपने को कृतार्थ मान रहे है। [**श्रीकृष्ण भगवान**] का नाम लेनेवाले आळ्वार का यह भाव है कि ऐसी विलक्षण रसिकता का प्रकाशन करने में समर्थ देव, गोपीजनवल्लभ नंदनंदन श्रीकृष्णचंद्र ही हो सकते है। इस दशक मे आळ्वार ने अपने एकैक अवयव में भी भगवान से प्रदर्शित अभिनिवेश का जो वर्णन किया, यह आत्मश्लाघा करने नहीं, वरन् भगवान के आश्रितजनव्यामोह का वर्णन कर, उससे उनको प्रहृष्ट करने के लिए है, अर्थात् भगवान सीमातीत वात्सल्य के मारे भक्तों के एकैक अवयव पर भी व्यामुग्ध बनते हैं, उनके इस अभिनिवेश को ठीक समझकर इसका वर्णन करने पर वे बहुत प्रसन्न होते हैं; इस लिए आळ्वारने प्रकृत दशक में इस अर्थ का विस्तृत वर्णन किया। इस भावना के सूचक शब्द हैं—[**भगवान के समुत्पन्न उत्कट अभिनिवेश को ठीक समझाते हुए॥**] (११)

**सटीक सहस्रगीति के पहले शतक का नवां दशक समाप्त हुआ॥**

**आळ्वार तिरुवडिगळे शरणम्॥**

---

श्रीपराङ्कुशपरकालयतिवरवरमुनीन्द्रेभ्यो नमः॥

## ॥ प्रथम शतके दशमं दशकम्-पोरुमानीळ्पडै ॥

**(सं.) अवतारिका**—अनन्तरदशके मुनिसार्वभौमस्य यत्तावदनुभवस्समजनि स एव सत्यमसमा-भ्यधिकः। ततोऽधिकमनुभवं प्रदातुं सर्वशक्तेनापि सर्वेश्वरेण नैव पार्यत इति वस्तुस्थितिः। तादृशोऽनुभवस्सत्य

नैवास्ति खलु यो ह्यनुभवमिममतिशयीत। अथैवानुभवस्याविच्छेदेनानुवर्तनं तु कर्तव्यं स्यात्। तद्भगवदिच्छाधीनमिति तदास्तां नाम। अतीतानुभवजनितो हर्षप्रकर्ष इदानीमस्मिन्दशके स्वानुभवमुखेन प्रकाश्यत इति पूर्वाचार्या निर्दिशन्ति स्म। गवां रोमन्थ इह स्मर्तव्यः। गावो हि तृणपर्णादिकमाहारं चरन्तस्तदानीमेव नास्वादयन्ति; स्वीकृतमाहारं तरुमूले कपोत्मूले वाऽवस्थाप्य पश्चाद्धनीकृतच्छायायां निषद्य शनैश्शनैरन्तः प्रवेशयन्ति। एतदेव रोमन्थपदाभिलप्यं प्रथते। एवमेव मुनिवरः पूर्वदशके स्वस्य सर्वाटनमनुभवमेव केवलमुदवाटयत्। तदुपजनित आनन्दस्तु तदात्वे न सम्यग्विवृतः, तद्विवृतिस्तु दशकेऽस्मिन् समपद्यत इति प्राचामाचार्याणां निर्वाहपद्धतिः। श्रीपराशर महार्यास्तु एतेनार्थेन सह विशेषतोऽयमपि कञ्चिदर्थमायोजयन्ति स्म। स एवम्, अधस्तनदशकानुभव मुनिवरः पुनः पुनरात्मनो हृदयेऽनुसदधान 'आ! कीदृशोऽयमनुभवः! अपारकृपाकूपारस्य भगवतः कृपाप्रवाहः कीदृशो नाम! इतोऽप्यधिकं कृपाप्रवाहो भगवताऽपि कर्तुं न शक्यते, नाप्यात्मभिरपि धारयितुं शक्येत। ईदृशी कृपा कथं नु तस्य सञ्जाता! कश्चिदस्ति तस्याः किमपि मूल्यम्?' इति सुबहु विमृशन् (मुनिवरः) सर्वथा निर्हेतुकप्रसरा सेयं कृपेत्येव निर्धारणीयं भवतीति निश्चित्य तमेव निर्हेतुककृपाभूमानमनुसन्धत्ते दशकेऽस्मिन्—इति। स एष निर्वाहः श्रीकुरुकेशार्यानुगृहीतषट्सहस्रिकायां नास्ति। पेरियवाच्चान्पिळ्ळै समाख्य श्रीमत्कृष्णगुरूत्तमानुगृहीत चतुर्विंशतिसहस्रिकायां प्रप्रथममारूढः। व्याख्यायामस्यामवतारिकावसाने अनर्घा श्रीसूक्तिरेका विराजते—"निर्हेतुककृपाविषये श्रीपराशर महार्याणां मनुपमवागिवलसितप्रकाशकं खलु दशकमिदम्" इति। वेदान्तदेशिककाले षट्सहस्रिकाव्याख्याया प्रचारप्राचुर्ये सत्यपि अतिसङ्क्षिप्ता व्याख्या सेति हेतुना चतुर्विंशतिसहस्रिकाव्याख्याया एव प्रवचनप्राचुर्यमुदभूत्। वेदान्तदेशिकोऽपि इमामेव व्याख्यामधीत्य एतदनुसारेणैव स्वकीयां द्रमिडोपनिषत्तात्पर्यरत्नावलीं व्यतानीदिति भूयोभिः पद्यैरप्यसीयते। तदिदमस्मदीये प्रबन्धान्तरे सुविशदमुपपादितम्। तदास्ताम्। प्रकृतदशकसारार्थसंग्राहकतया तत्प्रणीते तात्पर्यरत्नावलीश्लोके "स्ववितरणमहौदार्यहेतोऽस्पवद्ध" इति, अथ दशकानां प्रमेयसंग्राहकत्वेन प्रणीते पद्ये "अव्याजोदारभावात्" इति च निवेशितमिहानुसन्धेयम्।

भगवत्कृपाया निर्हेतुकतामिहानुसन्दधानो मुनिवरो यद्यपि स्वविषये प्रसृतां तत्कृपामधिकृत्यैव प्राह, तथाऽपि भगवत्कृपायाः स्वरूपमेवेदृशमिति प्रतिपादयतीत्येव प्रतिपत्तव्यम्। सत्सम्प्रदायाध्वनि स एव विषयः प्रधानतमस्समिन्ध इति हेतुना, श्रीवचनभूषणे आचार्यहृदये च स्थितानि विपुलतमानि निरूपणान्यनुसृत्य सारमिह प्रपञ्चयाम। चेतनानामस्मादृशां सद्गुणान् सच्चरित विशेषान् वा निमित्तीकृत्य भगवान् दयते—इत्यभ्युपगमे सति कृपायास्सहेतुत्वं सिध्यति, स्वयमेव प्रसर्पति भगवत्कृपेत्यङ्गीकारे तस्या निर्हेतुकत्वं निष्पद्यते। ननु हेतुमन्तरेण स्वयमेव समुन्मिषति भगवतः कृपेति कथमिदं सङ्घटेत? तथा सति सर्वदा सर्वेऽपि जना भगवत्कृपालक्ष्यभूता एव हि भवेयुः। नैवमुपलभ्यते जगति। कालविशेषेषु अधिकारिविशेषेष्वेव भगवत्कृपायाः प्रसरं पश्याम। हेतुविशेषपुरस्कारेणैव एव भवतीत्यवगम्यते। तथा च तत्कृपायास्सहेतुकत्वाभ्युपगम एव साधीयान्, निर्हेतुकतावादो निरालम्बन—इति तात्पर्येण प्रत्यवस्थानम्।

अत्रोच्यते। भगवत्कृपा नाम गरिष्ठं वस्तु, असमाभ्यधिकं वस्तु। तत्प्रसरं प्रति अपराधैकनिरूपणीयेष्वस्मादृशेषु हेतुत्वेन व्यपदेशार्हं यत्किमपि लघिष्ठं कर्म लघीयान् गुणो वा स्यान्नाम। तथा नाम असाधु

सम्भवितुमर्हान् कतिपयान् कृत्यविशेषान् प्रदर्शयाम इह। क्रमश अष्टौ विषया प्रदर्श्यन्ते, (१) परहिंसैकपराणामस्माकम् वध्यमानव्यक्तिमध्ये कदाचित् भगवद्भागवतविरोधिजना अपि अन्तर्भूता भवेयु, सामान्यत प्राणिवधस्य दुष्कृतत्वेऽपि भगवद्भागवतविरोधिजनहिंसनम सुकृतमेव। परतु इद सुकृतमिति विदित्वा वा तच्चिकीर्षया वा न वयमाचराम, प्राणिहिंसनात्मकदुश्चरितैकनिष्ठया कुर्वतामस्माक कर्मणि यदृच्छया भगवद्भागवतविरोधिजनहिंसन संघटित भवति। (२) अन्यदपि पश्यत। विषयप्रावण्यभूम्ना गणिकासु चपला भवाम, ताश्च कैङ्कर्यार्थं भगवदालय गता इति विदित्वा तद्दिदृक्षया केवल वय भगवदालय प्रविशाम। एवमसकृत्तत्र गतागत भवति न। भगवन्मन्दिरसेवन सुकृतमेव यद्यपि, तथाऽपि तदार्जनकुतूहलेन न वय तत्कुर्म, वेश्यालोलुपतया बहुत्र पर्यटतामस्माकम यदृच्छया भगवन्मन्दिरपर्यटनमपि सघटितम्। (३) अपर च पश्यत, अस्मदीयकेदारे काचन धेनु प्रविश्य सस्यजग्धिमकरोत्, ता प्रहर्तुं वयमाग्रहेण धावाम, कान्दिशीका सा अर्थात् कमपि देवालय प्रविश्य प्रादक्षिण्येन प्रधावति, तत्प्रजिघृक्षासम्भ्रमेण तामनुधावतामस्माकम् यदृच्छया भगव प्रदक्षिणीकरण सघटितम्। (४) ससारिणो वयम् पुत्रान् पुत्रीश्च प्रसूय नानादेशेषु सम्बन्ध कुर्म, सम्बन्धिना वासस्थानेषु अर्थात् श्रीरङ्गम् वेङ्कटाद्रि काञ्ची यादवाद्रिरित्यादयो दिव्यदेशा अप्यन्तर्भवन्ति। सासारिककार्यनिर्वहणार्थेन केवल तत्रतत्र जिगमिषवो, गत्वा प्रतिनिवृत्ताश्च वयम् 'श्रीरङ्ग गमिष्याम वेङ्कटाद्रे प्रतिनिवृत्तास्म काञ्च्या मम दुहिता सुखिनी वर्तते मम पुत्रो यादवाद्रिमधिवसतीदानीम्' इत्येवमेव व्यवहराम। दिव्यदेशाना नामोच्चारण सुकृतमिति धिया नेव व्यवहृतमस्माभि। (५) गृहकार्यनिर्वर्तनाय काश्चन किङ्करान् वेतनविश्राणनेन वयमाद्रियामहे, तेषु नारायणनामा कश्चित्, केशवनामा अपर, गोविन्दसञ्ज्ञश्चान्य। स्वकार्यार्थं तेषामाह्वाने प्रसक्ते हे नारायण! रे केशव! अये गोविन्द! इत्याकारयाम। भगवन्नामोच्चारण सुकृतमिति धिया तु न। (६) केचन भागवता दिव्यदेशसेवाहेवाकेन निर्जने वने व्रजन्ति, तेषा सर्वस्वापहाराय केचन तस्करा अनुधावन्ति तदात्वे कोऽपि राजभटो यदृच्छया नलिकास्त्रपाणिस्तत्र सगतोऽभूत् ग्रामान्तरजिगमिषया। चोरास्तु तमवेक्ष्य 'एतेषा रक्षणार्थमागच्छत्यसौ' इति मन्यमानास्सद्य कान्दिशीका भवन्ति। दिव्यदेशसेवार्थं व्रजन्तो भागवतास्ते सुरक्षिता प्रयान्ति। वस्तुतो राजभटस्स भागवतरक्षार्थं नोपस्थित। रक्षा तु यादृच्छिकी समघटत। (७) कश्चन कृषिजीवी क्वचन कदारे पलाण्डुगृञ्जनाद्यभिवर्धने निरत, तत्र तावदुदकसौलभ्य नाघटत, ततो दविष्ठे क्वचन देशे महान्त कूप निर्माप्य पलाण्डुक्षेत्र प्रति महतीं जलधारा प्रवाहयति, सा तु महानदीनिर्विशेष प्रसर्पति पथि। केचन भागवता मरुकान्तारसधर्मणो देशादागच्छन्त कुत्रापि जलकणिकामप्यलभमानास्ताम्यन्तोऽत्र सगता धारासलिलमवेक्ष्य भृश प्रसन्ना पिपासाप्रशमनादिकमकुर्वत, गृञ्जनकृषिकर्तुस्तस्य भागवतोपचरणमनिष्टमपि यदृच्छया समघटत तत्। (८) कश्चन धनिक द्यूतक्रीडार्थं वायुसेवार्थं च स्वकीयभवनबाह्याङ्गणे महतीं वेदिका प्रच्छाया निरमापयत् स हि स तत न तत्र वसति। अर्थात् बहवो भागवता अपि तत्र विश्राम्यन्ति। भागवतविश्रान्तिसौकर्यसम्पादन महत्तर सुकृतमिति धीस्तु नासीदेवास्य। यदृच्छया तु तत् सघटते क्रियासमभिहारेण।

एवमेवमुदाहर्तुमर्हाणि सन्ति नाम भूयासि। एवंविधेषु स्थलेषु कर्तुरिच्छया सुकृतगन्धोऽपि नास्तीति सुगमम्। सहजकरुणया चेतनानङ्गीकर्तुमवकाशविशेषमन्वेषमाणो भगवान् अस्मदीयेषु दुष्कृतेष्वपि सुकृतनामधेयमारोपयितु जातुचिदवकाशमुपलभमान कृपा प्रसर्पयति। भूयसीषु जन्मपरम्परासु यादृच्छिकम् प्रासङ्गिकम्

तानुपतिकम् इति व्यपदेशोपपान् सुकृतविशेषान् स्वयमेवास्मासु कल्पयित्वा दयते—इति वस्तुस्थितिः। एतावता अस्या कृपायास्सहेतुकत्वमभिधानं नैव साम्प्रतम्। यमदण्डनार्हपातकविशेषान् खलु वयमनारत कुर्मः। आहुः श्रीवत्साङ्कमिश्राः —* यद् ब्रह्मकल्पनियतानुभवेऽप्यनाश्य तत्किल्बिषं सृजति जन्तुरिह क्षणार्धे * इति। * न निंदितं कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि * अमर्यादः क्षुद्रश्चलमतिरसूयाप्रसवभूः कृतघ्नो दुर्मानी स्मरपरवशो वञ्चनपरः। नृशंसः पापिष्ठः * इत्येवमेवमनुसन्दधतुमु कटाक्षमर्हन्तीमधिरहतामस्माकं कृत्येषु कीदृशेऽपि सुकृतलवलेशः कश्चिदस्तीति स्यानाम। अनवधौ भगवत्कृपां प्रति श्रोदिष्टस्यास्य कर्मणः फल्गुत्वो हेतुत्वे-नानुमानं न विचिकित्स्यम्॥ अत्र प्रतिपक्षिण एवं प्रत्यवतिष्ठन्ते,—अत्युत्तमाया भगवत्कृपाया अस्मासु सदृश-हेतुर्नास्तीति कथ्यतां कामम्, तावता तस्या अहेतुकत्वकथनं कथमिव युज्यताम्? इति। हन्त! लवीयानेष वादः। याचकः पण्डितो राज्ञे लिकुचफलमर्पयन् महत्तरं राज्यं प्रतिलेभे यदि, स प्रदानं तत् सहेतुकमिति को वा मतिमान् मन्येत? वयं मन्यामह एवेति चेत्, कामं मन्यध्वम्। क प्रतिरोधः।

(हिंदी) पहले शतक के दसवें दशक की अवतारिका—पिछले दशक में आळ्वार को जो भगवदनुभव मिला, वह सत्य ही बेजोड था। सर्वेशक भगवान भी उससे अधिक अनुभव देने में अशक्त है। दूसरा कोई भी अनुभव इसके सदृश अथवा इससे अधिक नहीं हो सकता, जिसे यह चेतन कभी माँग सकेगा। अत इतना ही माँगा जा सकता है कि यही अनुभव, विच्छेद के विना, नित्य बना रहे। परतु यह भगवान की मर्जी की बात है। अस्तु। पूर्वाचार्यों का अभिप्राय था कि प्रकृत दसवें दशक मे आळ्वार, पिछले दशक में अपने अनुभूत सीमातीत आनद को ही स्वानुभवद्वारा प्रकाशित कर रहे हैं। गाय की जुगाली इस विषय का सुदर दृष्टात होता है। तथाहि—गाय का यह स्वभाव है कि वह घास, पत्ता इत्यादि आहार को मानव की भाति एकदम नहीं निगल देती, परतु चरने के समय शीघ्रता के लिए, उस आहार को बराबर चबाए विना ही तालु अथवा पेट के ऊपर के आमाशय में रख लेती है और बाद में किसी पेड की छाया में लेट कर, उस आहार को फिर अपने मुंह मे लाकर, उसे धीरे धीरे, बडे आराम के साथ चबाती है। यह क्रिया रोमथ (अथवा जुगाली) कहलाती है। इसी प्रकार, आळ्वार ने पिछले दशक में भगवान का सुदर अनुभव किया तो सही, परतु उस समय अवकाशाभाव के हेतु वे परिपूर्ण आनद का आस्वादन नहीं कर सके। वह काम प्रकृत दशक में किया जा रहा है, अर्थात आप पूर्वानुभव की याद करते हुए अब पूर्ण आनद पा रहे हैं। यह हुआ पूर्वाचार्यों का निर्वाह (माने अर्थवर्णन करने का प्रकार)। श्रीपराशरभट्टार्य स्वामीजी ने इसके साथ और एक सुदर अर्थ मिला दिया। तथाहि—आळ्वार ने पिछले दशक के अनुभव की बार बार याद करते हुए अपने मनमें विचार किया कि, "ओह! मुझे यह कैसा अनुभव मिला! अपारकरुणासागर भगवान की कृपा का यह कितना विलक्षण प्रवाह है! क्या स्वय भगवान ही कभी इससे अधिक कृपा कर सकेंगे? अथवा हम उसका सहन कर सकेंगे? न, न। अस्तु। अब मुझे आपकी यह कृपा सहसा कैसे मिली? इसका क्या कारण है?" परतु बहुत सोचने पर भी इसका कोई कारण दीख नहीं पडा, अत आळ्वार ने यह निश्चय कर लिया कि यह तो भगवान की निर्हेतुक कृपा का ही काम है। अत आप इस दशक में (अपने आनद के साथ) उसी निर्हेतुक कृपा का वर्णन करने लगते

हैं। यह निर्वाह श्री कुरुकेशस्वामीजी की षट्सहस्री टीका में उपवर्णित नहीं है, किंतु पहले पहल पेरियवाच्चान्पिळ्ळै की चौबीसहजार टीका में, और बाद में छत्तीस हजार टीका में पाया जाता है। उक्त चौबीस हजार टीका में यह एक वाक्य विराजमान है कि, "प्रकृत दशक, निर्हेतुक भगवत्कृपा के विषय में श्री पराशर भट्टर स्वामीजी के अन्यादृश वाग्विलास का प्रकाशक है"। (अर्थात् भट्टर स्वामीजी इस दशक का प्रवचन करने के समय भगवान की निर्हेतुक कृपा का बडा मनोहर विवरण करते थे)। श्रीवेदांतदेशिक स्वामीजी के जमाने में सहस्रगीति की तीन टीकाएं—षट्सहस्री नवसहस्री तथा चौबीसहजार—प्रचलित थीं। इनमें से अति संक्षिप्त होने के कारण षट् सहस्री व नवसहस्री बाचने से रसिकों को पूर्ण तृप्ति नहीं होती। अतः चौबीस हजार टीका का ही उस समय विशेष आदर व प्रचार था। वेदांतदेशिक स्वामीजी ने भी इसी ग्रंथ का स्वागत व ठीक अध्ययन किया, इसमें उपदिष्ट रसमय अर्थों का ही अपने ग्रंथों में तत्र तत्र उल्लेख किया; और इसीके अनुसार द्रमिडोपनिषत्तात्पर्यरत्नावलि ग्रंथ रचा। इसका सूक्ष्मविवेचन करनेवाले सरलतया यह अर्थ समझ सकते हैं। यह अर्थ अन्यत्र (श्री काची प्र. अ. स्वामीजी के दूसरे ग्रंथों में) विशद रूप से बताया गया है। अस्तु। उक्त तात्पर्यरत्नावलि में प्रकृतदशक का सारार्थ बतानेवाले पद्य में आप लिखते हैं कि "स्ववितरणमहौदार्यतुष्टोऽभ्यधत्त" (आळ्वार ने भगवत्कृत स्वात्मदान के हेतु उनके महौदार्य से संतुष्ट होकर कहा); और आगे के पद्य में, जिस में सारे पहले शतक का ही सारार्थ बताया गया है, आप प्रकृत दशक का अर्थ लिखते हैं कि, "अव्याजोदारभावात्" (भगवान के विना कारण उदार होने से)।

यद्यपि इस दशक में आळ्वार अपने प्रति भगवान की प्रदर्शित निर्हेतुक कृपा का ही वर्णन कर रहे हैं। (अर्थात् आप इतना ही कह रहे हैं कि भगवान ने मुझपर निर्हेतुक कृपा की), दूसरों की बात नहीं की गयी। तथापि समझना चाहिए कि सामान्यतः भगवत्कृपा का ही यह स्वभाव बताया गया है। चूँकि यह निर्हेतुक भगवत्कृपा का प्रभाव मत्संप्रदायनिष्ठों का समादृत एक महान व मुख्य अर्थ है, अतः श्रीवचनभूषण और आचार्यहृदय में प्रतिपादित रीति से यहां पर इसका संक्षिप्त विवेचन करेंगे। यह विचारणीय अंश है—भगवान जो हमारे जैसे चेतनों पर कृपा करते हैं, वह क्या हमारे सद्गुण, व सच्चरित्र देख कर करते हैं, (जब कि कृपा सहेतुक सिद्ध होगी) अथवा क्या हमारे गुणदोषों की परवाह नहीं करते, स्वत एव करते हैं; (जब कि वह निर्हेतुक होगी)? दूसरों का कहना है कि, "यदि भगवान निर्हेतुक (माने विना कारण ही) किसी व्यक्ति पर कृपा करेंगे, तो उन्हें सब पर यह करनी पडती है; अर्थात् संसार में रहनेवाले सभी मानवों को उनके कृपापात्र होने चाहिए। परंतु हम प्रत्यक्षतः देख रहे हैं कि इस विशाल प्रपंच में कभी किसी एक व्यक्ति पर आपकी कृपा बहती है; दूसरे सभी कृपा के अविषय ही रह जाते हैं। अत. कहना पडता है कि चेतन की किसी प्रकार की विशेषता देख कर ही भगवान उस पर कृपा करते हैं। … एव शास्त्रों में भगवत्कृपा प्राप्त करने के अनेक उपाय बताये गये हैं। यदि वह कृपा विना कारण ही मिले, तो उसे प्राप्त करने के लिए हमें प्रयत्न करने की आवश्यकता कौन-सी है? अत उसे सहेतुक कहना ही शास्त्र व युक्ति के अनुगुण है।

अब इसका सारभूत समाधान बतावेंगे। भगवान की कृपा एक अमूल्य वस्तु है। हमारा स्वभाव तो अपराध ही करते रहना है। ऐसे हमारे पास वह श्रेष्ठ वस्तु पाने के योग्य कौन-सा गुण रह सकता है? अथवा कदाचित् ऐसी कोई वस्तु होगी जिसे किसी तरह गुण कहना शक्य हो। शास्त्रज्ञ, ऐसे भी आठ एक गुण बताते हैं। उनका अब विवरण करेंगे। (१) सर्वदा प्राणिहिंसा करने में ही निरत हमने कदाचित् दूसरे अनेक प्राणियों के साथ अचानक किसी भगवद्भागवतविरोधी का भी वध किया होगा। यह तो स्पष्ट है कि प्राणिहिंसा करना बडा पाप है, किंतु भगवद्भागवत शत्रु का वध करना पुण्य है। परंतु हमने इसे सुकृत मान कर, अथवा सुकृत का अनुष्ठान करने के संकल्प से यह काम नहीं किया। प्राणिहिंसा करने के लिए ही शस्त्र का प्रयोग करनेवाले हमने अकस्मात् दुष्ट का भी संहार कर दिया। (२) हम किसी वेश्या में अनुरक्त रहते होंगे, वह तो सदा भगवान के मंदिर में गान, नर्तन इत्यादि सेवा करती है। अतः उसे देखने के लिए हमें भी बारबार मंदिर जाना पडता है, भगवान के दर्शन भी करने पडते हैं। यह तो बात ठीक है कि मंदिर जाना और भगवान के दर्शन करना सत्कर्म है, परंतु हमने मंदिर जाना अथवा भगवान के दर्शन करने नहीं चाहे, वेश्यालोलुप होकर इधर उधर भटकनेवाले हमें अकस्मात् मंदिर जाने का भी अवसर प्राप्त हुआ। (३) हमारे खेत में कोई गाय सस्य चरती होगी, जिसे मारने के लिए हम हाथ में डंडा लेकर दौडते हैं। वह गाय भी हमें देखकर डरती हुई भागती है और पासमें विराजमान किसी भगवन्मंदिर की परिक्रमा करती है। गाय के पीछे पीछे दौडनेवाले हम भी वह परिक्रमा कर लेते हैं। हमने इसका ख्याल तक नहीं किया कि हम मंदिर की परिक्रमा कर रहे हैं, परंतु गाय खेदनेवाले हमें वह सुकृत मिल गया। (४) संसारी हम अपने पुत्रों व पुत्रियों को नाना देशों में परिणय करते हैं, जिनमें श्रीरंग, श्रीवेंकटाद्रि, श्री कांची, श्रीयादवाद्रि इत्यादि दिव्यदेश भी अंतर्गत होते हैं। पीछे हम कभी कभी अपनी संतान से अथवा संबन्धियों से मिलने के लिए उधर जाते हैं और ऐसी बातें करते हैं कि, "हम कल श्रीरंग जायेंगे, हम श्रीवेंकटाद्रि जाकर आये, हमारी पुत्री श्रीकांची में रहती है, हमारा पुत्र श्रीयादवाद्रि में निवास करता है" इत्यादि। हमें दिव्यदेशों का नामोच्चारण अथवा उनकी यात्रा करने का बिलकुल विचार नहीं रहता, तथापि लौकिक वार्तालाप अथवा कामकाजों के बीच में यह भी सुकृत करना पडता है। (५) अथवा पैसावान होने के कारण हम अपनी सेवा करने के लिए अनेक नौकर चाकर रखते हैं। उनमें किसीका नाम नारायण, दूसरेका गोविंद, और तीसरे का केशव होगा। उनको बुलाने की भावना से हम बार बार पुकारते हैं कि, 'हे केशव!' 'हे नारायण!' 'हे गोविंद!' इत्यादि। भगवन्नामोच्चरण करने की हमारी चिंता तक नहीं रही। (६) अथवा कितने ही भगवद्भक्त जन दिव्यदेशों की यात्रा करते हुए किसी निर्जन वन से निकल रहे हैं। उधर दो चार चोर मिल कर उन भक्तों को लूटने की राह देख रहे हैं। उतने में शस्त्रधारी एक राजकर्मचारी उसी रास्ते से निकलता है जिसे देख कर चोर समझते हैं कि यह तो इन यात्रियों की सुरक्षा करने के लिए आया है, और वहां से भाग जाते हैं, अर्थात् उसके निमित्त भक्तों की रक्षा हुई। उन भक्तों तथा कर्मचारी को इस रहस्य का पता भी न लगा। वे अपने अपने रास्ते चले गये। (७) कोई किसान अपने खेत में प्याज, लहसुन इत्यादि उपजाना चाहता हुआ, उधर पानी का अभाव होने से, दूरस्थित कुँए से निकलवा कर नहरों द्वारा प्रकृत

खेत तक पानी बहाता है। दिव्यदेशयात्रा करते दूर से चलकर आनेवाले थके हुए, व प्यासे कतिपय भक्त जन, इधर उधर पानी ढूढते हुए यह नहर देखकर, उसमें अपने हाथ पग मुंह धो कर पानी पीकर प्रसन्न होते हैं। प्याज रोपनेवाले किसान को इस बात का पता भी न लगा कि ये भक्तजन मेरे पानी का उपयोग कर रहे है। यदि उसे इसका पता लगता, तो शायद वह उन्हें अपना पानी छूने तक नहीं देता। तथापि अकस्मात् उससे भक्तो की यह सेवा बन गयी। (८) कोई धनिक जुआ खेलना, हवा खाना इत्यादि काम के लिए अपने घर के बाहर विशाल व सुदर ओरी बनवाकर, दिन भर और आधी रात तक अपने मित्रों के साथ उधर ही रहता है, और बाद म घर के अदर जाकर आराम करता है। उसके बाद कितने ही भक्त जन इधर उधर दिव्यदेशो की यात्रा करते हुए वह गाँव पहुच कर उस ओरी मे विश्राम कर लेत है। गृहस्वामी ने इनके लिए वह ओरी नहीं बनवायी; उसे इस बात का पता भी नहीं चला कि मेरी ओरी में यात्री लोग आराम करते है। परतु अचानक ही उन्हें बारबार उक्त प्रकार उनकी सुविधा करने का अवकाश मिला। एसे और भी अनेक दृष्टान्त दिये जा सकते हैं, जहा कर्ता की इच्छा अथवा ज्ञान के भी बिना उससे सत्कर्म अनुष्ठित किये जाते है। परतु स्वभावत, दयामय, और अत एव पापी चेतनो का अगीकार करने की राह देखते रहनेवाले भगवान, उनके उक्त कार्यों को ही, (जिनमें कितने ही स्पष्टरूप से पाप है,) पुण्य करके नाम देकर, उन पर यों कहते हुए कृपा करते हैं कि "तुमने मेरे क्षेत्रों के अथवा मेरे नामों का सकीर्तन किया, मेरे भक्तो की सेवा अथवा रक्षा की" इत्यादि। इस प्रकार हमारे एक जन्म में नहीं, किंतु अनेक जन्मपरपराओं म यादृच्छिक (अकस्मात् होनेवाले), प्रासगिक (दूसरे काम करने के प्रसग में होनेवाले), आनुषगिक (दूसरे काम क साथ किये जानेवाले) इत्यादि पुण्यों को हमारे सिर पर लाद कर, उनके निमित्त भगवान हमारा उद्धार कर देते हैं। इतने मात्र से उसकी कृपा को सहेतुक बतलाना कैसे उचित होगा?

इस पर लोग फिर पूछ उठेंगे कि, "यह तो पापियों की बात हुइ, परंतु लोक में ऐसे पुण्यवान भी बहुत होते हैं जो भगवान की कृपा पाने के लिए नानाविध सत्कर्म करते हैं। उनके बारे में कृपा सहेतुक ही ठहरेगी।" यह भी बात ठीक नहीं ह। यद्यपि हम इस बातका इनकार नहीं करेंगे कि हमारे जैसा पापी भी कदाचित् कोइ सत्कर्म करता होगा, और विशेष पुण्यवान जन भी इस ससार म कोइ कोई रहता हैं। तथापि हमारे अनत पापों के सामने यह पुण्य कौनसी गिनती म आवेगा? श्री यामुनाचार्यस्वामीजी स्तोत्ररत्न में कहते हैं कि, "न निंदित कर्म तदस्ति लोके सहस्रशो यन्न मया व्यधायि" (अर्थात् इस ससार म (अथवा धर्मशास्त्रग्रथों म) एसा कोइ भी पाप बाकी नहीं रह गया जिसे मैंने हजार बार नहीं किया हो।) श्री कूरेश स्वामीजी कहते है कि, "यद्ब्रह्मकल्पनियुतानुभवेऽप्यनाश्यं तत् किल्बिषं सृजति जतुरिह क्षणार्धे।" (अर्थात् पलभर में मानव इतना पाप करता ह, जिसका फल अनेक कल्पोंतक अनुभव करने पर भी समाप्त नहीं होगा।) जब ज्ञानियों के अग्रेसर इन आचार्यो का यह उद्गार ठहरा, तब हमारे जैसे क्षुद्रों के बारे में कहना ही क्या? सारभूत वार्ता यह है कि भगवान की कृपा ऐसी एक अनमोल वस्तु ह जिसके सदृश कोइ भी पुण्य हमसे नहीं किया जा सकता। अथवा मान भी लीजिए कि एसा कोइ भक्त ह जिसने अपने जन्मभर एक भी पाप नहीं किया, किंतु निरंतर भगवद्भजन ही

किया। तथापि उसके पिछले असंख्य जन्मों में किये हुए पापों के सामने इस एक जन्मका पुण्य गिनती मे नहीं आ सकेगा। भगवान की कृपा तो सबसे बडी वस्तु है। ऐसी अमूल्य वस्तु को अपने अल्पाल्प पुण्य के साथ तोलकर, उसका फल बताना, उस कृपा की अवहेलना है। अतः उसे निर्हेतुक बताना ही युक्तियुक्त है।

इस पर भी लोग यह प्रश्न करेंगे कि, "यह तो स्वीकार्य है कि हमारे पास भगवत्कृपा के सदृश कोई पुण्य नहीं है। इतने मात्र से उसे एकदम निर्हेतुक कह डालना कैसे उचित होगा?" यह आक्षेप बिलकुल निस्सार है। उपाय उसे कहते हैं जो फल के सदृश होगा। जो फल के अनुरूप न हो, उसे उपाय कहना लोक व शास्त्र-व्यवहार के विरुद्ध है। कोई गरीब ब्राह्मण किसी राजा के पास जाकर, एक निंबू की भेंट कर, स्तुति कर, यदि उसे विशाल जागीर पा ले, तब कौन सा विवेकी कह डालेगा, कि पंडित जी ने निंबू देकर उसके बदले में जागीर पायी? प्रशंसा तो राजा के औदार्य की होगी, न कि निंबू की। यदि कोई ऐसा आग्रह कर बैठें, कि हम निंबूको जागीर का उपाय ही मानेंगे, तो बेशक मान लीजिए; आपको कौन रोकेगा? कोई नहीं—इत्यलम् ॥ *

(गाथा.) पोरुमा नीळ्पडै आळि शङ्गोडु * तिरुमा नीळ् कळल् एळुलहुम् तोळ *
ओरुमाणि क्कुरळाहि निमिर्न्द * अक्करु माणिकम् एन्कण्णुळ दाहुमे ॥ १॥

(सं.) स्पर्धोन्मुखदिव्यायुधवरेण्य सुदर्शन पाञ्चजन्यधारी सन् सकललोकाभिवन्दित चरणारविन्दश्च सन् वामनब्रह्मचारिवर्ष्मणा विक्रान्तलोको नीलमणिनिभो भगवान् स्वदिव्यवपुस्तुपमां मम चक्षुर्गोचरतामनैषीत् ॥

दशकस्यास्य यत्प्रमेयमवधारितमवतारिकायाम् तदस्या गाथाया सारसंक्षेपरूपेण प्रतिपाद्यते। याचको महाबलिस्तावत् लक्ष्मीपतिर्भगवान् स्वकीयदिव्य सौन्दर्यलावण्यप्रकाशकस्सन् स्वस्य पुरतस्समायास्यतीति स्वप्नेऽपि न मेने। * कौपीन कटिसूत्रलीलां घटयन् मौञ्जीमभिव्यञ्जयन् कृत्तिं कृष्णमृगस्य वक्षसि वहन्नाषाढमंसेऽर्पयन्। स्वाध्यायस्वरसम्पदा परिषदां प्रीतिं समुत्पादयन् याञ्चार्थं बलियज्ञवाटनिकटं प्राप्तो वटुः पातु वः ॥ * इत्युपश्लोकितरीत्या परमविलक्षणदिव्यमूर्तिधारी यथा ह्यचिन्तितमेव तस्याग्रतो विरेजे, एवमेव न केवलमहेतुककृपया ममापि पुरतस्तिष्ठति परमशोभनदिव्यमूर्तिप्रदर्शको भवन्—इत्युक्तं भवति।

[स्पर्धोन्मुखदिव्यायुधधारी सन्] महाबलियज्ञवाटोपसर्पणसमये यद्यपि सुदर्शनपाञ्चजन्यधारणं नासीद्भगवत, तथाऽपि जगद्विक्रान्तिसमये तद्धारणमासीदिति तत्रतत्रानुसंदधते दिव्यसूरयः। दिव्यायुधयोस्तयोः स्पर्धोन्मुखत्वविशेषणं द्वेधा व्याचक्षत आचार्यवर्याः—जगद्विक्रमणकाले प्रतिरोधप्रवृत्तानां नमुचिप्रभृतीनां विषये स्पर्धा-इति सर्वसुगमोऽयमर्थः। अथ द्वितीयोऽर्थस्तु-दिव्यायुधयोरनयोर्मिथो बद्धस्पर्धत्वं मङ्गलाशासनपरताप्रयुक्तम्। श्रृङ्गिबेरपुरसन्निकर्षे रामसीतामिथुने शयाने सति महता प्रेम्णा अङ्गरक्षके सौमित्रावप्यतिशङ्का गुहस्य, तस्मिन्नप्यतिशङ्का तत्परिवारस्य इत्ययमर्थः श्रीरामायणाल्लब्धः। पश्चादागतभरतसकाशे तदिदं गुहो वक्ति स्वयमेव, * नियम्य पृष्ठे तु तलाङ्गुलित्रवान् शरैस्सुपूर्णाविषुधिं परंतपः। महद्धनुस्सज्यमुपोह्य लक्ष्मणो निशामतिष्ठत्परितोऽस्य केवलम् ॥

हालमें ऐसा प्रतीत होता है कि परत्वानुभव दो वार किया जा रहा है। इसका समाधान यह कि दोनों में परत्वानुभव के प्रकार अलग अलग हैं। तथाहि—(१) उधर (१-१में) स्वानुभव के रूप में परत्व का वर्णन हुआ; हालमें (२-२) तो परोपदेश चलता है। (२) उधर अन्वयमुखेन, और इधर अन्वय व व्यतिरेकों के द्वारा वर्णन है। अर्थात् उधर भगवान का परत्वमात्र बताया गया; न कि दूसरे किसीका परत्वाभाव; यहां पर तो भगवान के परत्व के साथ साथ, दूसरे देवों का अवरत्व (माने परत्वाभाव) भी बताया जा रहा है। (३) उधर वेदके आधार पर परत्व बताया गया; इधर तो इतिहासपुराणों के आधार पर वह बतायाजा रहा है। (४) उधर परत्वे परत्व (माने परमपदनिवासी का परत्व), और इधर अवतारे परत्व (माने रामकृष्णाद्यवतारों का परत्व) बताया जाता है। इन चार प्रकारों से दोनों दशकों का अंतर समझना चाहिए॥ .... .... .... .... .... *

(गाथा.) तिण्णन् वीडु मुदल् मुल्हुमाय् * एण्णिन्मीदियनेम्बेरुमान् *
मण्णुम् विण्णुमेल्लामुडनुण्ड * नम् कण्णन् कण्णल्लदिल्लैयोरु कण्णे ॥ १ ॥

शाश्वतमोक्षप्रभृतिसकलपुरुषार्थप्रदाता अस्मादृशां चिन्तापथदूरवर्ती जगत्प्रभुः (संवर्तसमये) पृथिव्यन्तरिक्षादिसकलवस्तुनिगरणनिपुणश्चास्मदीयः कृष्ण एव जगतां परिवृढः! तमन्तरेण नान्यः कश्चिदस्ति प्रभुः ॥

दशकस्यास्य प्रमेयभूतं परत्वं संगृह्णाति सेयं गाथा। * चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः * इत्युक्तरीत्या, * एकैकफललाभाय, सर्वलाभाय केशवः * इत्युक्तरीत्या च सकलपुमर्थप्रदत्वं भगवतः परत्वे प्रधानं लिङ्गम्। मोक्षे शाश्वतत्वं नाम आविर्भावतिरोभावजन्मनाशविकल्पाद्यविषयत्वम्। अस्मादृशां चिन्तापथदूरवर्ती— गुणानां विभूतीनां च आनन्त्येन अपरिच्छेद्यस्वभाव इति यावत्। पृथिव्यन्तरिक्षेत्यादिना आपत्सखत्वमुच्यते। * न सम्पदां समाहारे विपदां विनिवर्तने। समर्थो दृश्यते कश्चित् विना पुरुषोत्तमम्॥ * इति प्रमाणमिहानुसन्धेयम्। अन्वयमुखेन कथनादपि व्यतिरेकमुखेन कथनस्य विवक्षितार्थदृढिमसम्पादनसमर्थत्वात् "कृष्ण एव जगतां परिवृढः" इत्युक्त्यनन्तरमपि "तमन्तरेण नान्यः कश्चिदस्ति प्रभुः" रिति कथितम्॥ ... (१)

—*पहली गाथा—तिण्णन्वीडु मुदल् मुल्हुमाय् *—

(हिंदी.) शाश्वत मोक्ष इत्यादि समस्त पुरुषार्थों के प्रदाता, हमारी चिंता के भी परे रहनेवाले, जगत के प्रभु, और (प्रलयकाल में) पृथिवी आकाश इत्यादि समस्त पदार्थों को निगलनेवाले हमारे नाथ श्रीकृष्ण ही इस जगत के नायक हैं; उनके सिवा दूसरा कोई प्रभु नहीं है।

यह गाथा प्रकृत दशक के प्रमेय, (माने विषय) परत्व का संक्षिप्त वर्णन करनेवाली है। धर्म, अर्थ, काम व मोक्षरूप चारों पुरुषार्थों का प्रदान करना इस परत्व का मुख्य सूचक है। अतः प्रारंभ में यह कीर्तित हुआ। "चतुर्णां पुरुषार्थानां दाता देवश्चतुर्भुजः" (चतुर्भुज भगवान श्रीमन्नारायण चारों पुरुषार्थों के प्रदाता हैं), "सर्वलाभाय केशव." (दूसरे देव एकैक फल दे सकते हैं; भगवान केशव तो सकलफलप्रद

हैं) इत्यादि प्रमाणगण यहांपर अनुसंधेय हैं। मोक्षको शाश्वत कहने का यह तात्पर्य है कि उसके घटना, अप्रकाशित होना, नष्ट होना इत्यादि दोष नहीं होते। [हमारी चिंता के भी परे रहनेवाले] कहने का यह भाव है कि भगवान के गुणों व विभूतियों के अनंत होने के कारण आप अपरिच्छेद्यस्वभाव हैं। [समस्त पदार्थों को निगलनेवाले] कहने से भगवान का आपत्सखत्व-नामक गुण बताया जाता है। "न संपदां समाहारे" इत्यादि पौराणिक श्लोक बताता है कि भगवान पुरुषोत्तम श्रीमन्नारायण के सिवा दूसरा कोई भी देव अपने भक्तों के अपेक्षित ऐश्वर्य देने अथवा दुःख दूर करने में समर्थ नहीं होता। (श्री कृष्ण ही जगत के नायक हैं) कहने के बाद, (दूसरा कोई प्रभु नहीं है) कहना पुनरुक्ति जैसा लगेगा। परंतु इससे विवक्षित अर्थकी पुष्टि की जाती है। शास्त्रज्ञों की परिभाषा के अनुसार पहला वाक्य अन्वयमुखेन, और दूसरा वाक्य व्यतिरेकमुखेन कीर्तित है। किसी अर्थ की दृढता बताने के लिए दोनों प्रकारों से कहना शास्त्रसंमत है॥ .... .... .... .... (१)

(गाथा.) एपावम् भरमे एल्ललहुम् * ईपावम् शेय्दु अरुळालळिप्पारार् *
मापावम् विड हरर्कु प्पिचै पेय् * गोपाल कोळरि येरल्लिये ॥ २ ॥

सप्तलोकीमपहृतपापामारचय्य कृपया परिपालयिता, गुरुपातकविमोचनार्थं हराय भिक्षां प्रदत्तवन्तं गोपालसिंहवपुषं पुरुषपुंगवमन्तरेण कोऽन्यो देवोऽस्ति? हा हन्त! रत्नकरीपयोर्वैषम्यप्रतिपादनमिव किमेतद्वचः! तदिदं कृत्यं हन्त! मम हि भरो बभूव! ॥

गाथोपक्रमे प्रयुक्तं वचोद्वितयमवसादातिशयं व्यनक्ति मुनिवरस्य। तत्तु [एपावम्! भरमे!] इति। अपूर्वार्थप्रतिपादनं युज्येत कामम्; करीषापेक्षया रत्नं विलक्षणमिति कथनमिव किमिदं नाम भगवतः परत्वोपपादनमिति वैरस्यं सूच्यते एपावमिति प्रथमपदेन। गुणानुभवकुतूहलिनो मम पामरजनप्रतिबोधनं हि भर आसीदिति निर्वेदस्सूच्यते भरमे! इति द्वितीयपदेन। प्रबलप्रायश्चित्तशतसहस्रैरप्यपाकर्तुमशक्यानां, मुधानां केवलं क्षान्त्या प्रशमनकृदेव भगवानित्युक्तिरपि परत्वोक्तौ पर्यवस्यति। पापपरिहारकत्वं सामान्यतः प्रोक्तं विशेषनिष्ठं दर्शयति गुरुपातकेत्यादिना। ब्राह्मणोत्तमपितृभूतब्रह्मशिरश्छेदादधिकं पातकं न हि संभाव्यते। विदुषोऽतिक्रमे दण्डभूयस्त्वं च स्मर्यते। न च सर्वज्ञनामाऽसौ न जानाति तदिदं स्वपातकम्। रुद्रेण तेन स्वयमेवोक्तं मात्स्ये—ततः क्रोधपरीतेन संरक्तनयनेन च। वामाङ्गुष्ठनखाग्रेण छिन्नं तस्य शिरो मया॥ * इति। अथ च ब्रह्मा प्राह —* यस्मादनपराधस्य शिरश्छिन्नं त्वया मम। तस्माच्छापसमायुक्तः कपाली त्वं भविष्यसि॥* इति। अथ च रुद्रवचः—* ब्रह्महाऽऽकुलितो भूत्वा चरंस्तीर्थानि भूतले। ततोऽहं गतवान् देवि! हिमवन्तं शिलोच्चयम्। तत्र नारायणः श्रीमान् मया भिक्षां प्रयाचितः। ततस्तेन स्वकं पार्श्वं नखाग्रेण विदारितम्। महती स्रवती धारा तस्य रक्तस्य निस्सृता। विष्णुप्रसादात्सुश्रोणि! कपालं तत्सहस्रधा। स्फुटितं बहुधा यातं स्वप्नलब्धं धनं यथा॥ * इति॥ .... .... .... .... (२)

—※ दूसरी गाथा—एपावम् भरमे एळ्ळुहुम् ※—

(हिंदी.) सातों लोकों को भी निष्पाप बनाकर कृपासे उनकी रक्षा करनेवाला, बहुत बडा पाप मिटाने के लिए शिव को भिक्षाप्रदान करनेवाले गोपालसिंह पुरुषोत्तम के सिवा दूसरा कौन-सा देव होगा? हाय! रत्न व कोयले का अंतर बताने की भांति यह कैसी बात है? दौर्भाग्य से यह बोझा मेरे सिर पर पडा है॥

गाथा के आरंभ में ही आल्वार अत्यंत दुःख के साथ रो रोते हुए कहते हैं कि [ए पावम् भरमे]—*अहो विकष्टम्! यह मेरा भर बना है। किसी अपूर्व अर्थ का उपदेश करना तो आवश्यक व* उचित है। परंतु रत्न को कोयले से श्रेष्ठ कहना न केवल अनपेक्षित, किंतु अयुक्त भी है। इसी प्रकार भगवान को परात्पर बताना व्यर्थ और विरस भी होता है—इस अर्थका सूचक है (ए पावम्) शब्द। भरशब्द का अर्थ है भार, बोझा अथवा कर्तव्य। भगवान के शुभगुणों का अनुभव करने के इच्छुक मेरे सिर पर, पामरों से वार्तालाप करने का और उन्हे भगवान के परत्व का उपदेश देने का यह भार किधर से आ पडा!—यों कहते हुए आल्वार दुःख पा रहे हैं। भगवान को पापनिवारक कहना उनके परत्व का सूचक है। इस पापनिवारण का एक सुंदर दृष्टांत दिया जाता है—[बहुत बडा पाप मिटाने के लिए] इत्यादि से। मात्स्यपुराण में शिवके अपने मुख से उपवर्णित कथा यह है—एक समय शिव ने कोप से अपने पिता ब्रह्माजी का (जिन के पहले पांच सिर थे) एक सिर काट डाला। इससे क्रुद्ध ब्रह्माजी के शापसे उसे ब्रह्महत्या का पाप लगा, जिसके फलतया काटा हुआ वह सिर (ब्रह्मकपाल) उसके हाथ में लग गया। उसे छुडाने के लिए, महर्षियों के कथनानुसार शिवने भिक्षाटन किया। इस प्रकार बहुत समय बीत गया; परंतु शिव का पाप मिटा नहीं। *अतमें उसने बदरिकाश्रम जाकर श्रीनारायणमुनि से भिक्षा मागी।* भगवान ने भी अपने बगल से खून निकालकर उससे भिक्षा दी; जिसके फलतया वह कपाल शिवके हाथ से छूटकर नीचे गिरा और सैकडों चूर हो गया। इस इतिहास से यह अर्थ बताया जाता है कि भगवान अपने आश्रितों को ब्रह्महत्या जैसे प्रबल पापों से भी छुडा सकते हैं। *फिर यह कहने की आवश्यकता कौनसी है कि आप सर्वजगत के स्वामी हैं!* .... .... .... .... (२)

(गाथा.) एरनै प्पूवनै पूमहळ् तन्नै ※ वेरन्रि विण्तोळ तन्नुळ् वैत्तु ※
मेल्तन्नै मीदिड निमिर्न्दु मण्कोण्ड ※ मालतनिल् मिकुमोर् तेवुमुळदे ॥ ३ ॥

वृषभवाहनं शिवम्, कमलासनमजम्, पद्मवनालया श्रिय च वैषम्यविरहेण स्वविग्रहे विनिवेश्य अत एव देवगणस्तोत्रपात्रभूतो यः, यश्च द्यावापृथिवी विक्रम्य कृत्स्नं जगत् स्वायत्तीकर्तु भूमिभिक्षणमकार्षीत्, तस्मादस्मात्परमपुरुषादभ्यधिकं किमपि दैवतमस्ति किम्? (नैवास्ति॥)

शीलगुणेन त्रिविष्टपाक्रमणरूपातिमानुषचेष्टितेन च असावेव पर दैवमिति प्रतिपाद्यतेऽनया गाथया। यस्मिन् वक्षस्थले भगवान् स्वदिव्यमहिषीं श्रिय बिभर्ति, तस्मिन्नेव वक्षसि राजसदेवतायास्तामसदेवतायाश्च

निवेशनं परिकल्पितवानिति शीलगुणमिममनुसंधाय देववृन्दानि स्तुवन्तीति कथ्यतेऽत्र। एवं लक्ष्म्या सह तयोरप्यवकाशप्रदानं किं ननु सार्वदिकमिति चेत्, अत्र पूर्वाचार्या अनुगृह्णन्ति—आपत्कालविशेषेषु भगवांस्तयोरात्मनो वक्षसि स्थानं दिशति ; तदेतन्महान् गुणविशेष इति प्रतिपत्त्या गुणानुरागिणो दिव्यसूरयस्तदिदं सार्वदिकमिव संचक्षत इति। अथ त्रिविक्रमापदानानुसन्धानेन सर्वासामपि देवतानां शिरस्सु पादपद्मविन्यासं कृतवान् यः स एव परतत्त्वभूत इति निर्णय सुलभ इति प्रस्ताव्यते॥ .... .... .... (३)

## —※ तीसरी गाथा—एरनैप्पूवनैप्पुमह्वव् तन्नै ※—

**(हिंदी.) वृषभवाहन शिव, कमलासन ब्रह्मा एवं कमलनिवासिनी लक्ष्मीजी, इन सबको पक्षपात के विना अपने दिव्यविग्रह में रखकर, अत एव देवों से संस्तूयमान, एवं भूम्यंतरिक्षों में व्याप्त होकर सारे भूमंडल को नापकर अपने वश कर लेनेवाले एसे परमपुरुष से भी बढकर क्या दूसरा कोई श्रेष्ठ देव हो सकता है? (नहीं नहीं॥)**

इस गाथा में शीलगुण व लोकविक्रांति से भगवान का परत्व बताया जाता है। जिस श्रीवक्ष पर भगवान अपनी दिव्यमहिषी महालक्ष्मीजी का धारण कर रहे हैं, उसी पर ब्रह्मरुद्रों का भी अवकाश देना सीमातीत शीलगुण का काम है; और समस्त देवगण इस महागुण की प्रशंसा करते हैं। आचार्यों का कहना है कि यद्यपि भगवान महालक्ष्मीकी भांति सर्वदा ब्रह्मरुद्रों का धारण नहीं करते, किंतु किन्हीं आपत्कालों में ही उन्हें अपने श्रीवक्ष पर स्थान देते हैं; तथापि गुणानुरागी आळ्वार भगवान के इस महागुण से आकृष्टचित्त होकर कहा करते हैं कि भगवान के श्रीवक्ष के ब्रह्मरुद्र भी सर्वदा आश्रित हैं। त्रिविक्रमावतारवृत्तांत से यह अर्थ स्पष्टतया स्थापित किया जाता है, कि भूमि नापने के बहाने जिन्होंने समस्त देवोंके सिर पर अपना श्रीपाद धरा, वे ही परदैव हो सकते हैं॥ .... .... (३)

(गाथा.) तेवुमेप्पोरुळुम् पडैक्क ※ पूविल् नान्मुहनैप्पडैत्त ※
देवनेम्बेरुमानुक्कल्लाल् ※ पूवुम् पूजनैयुम् तहुमे ॥ ४ ॥

देववर्गान् अन्यच्च सर्वं जन्तुजातं स्रष्टुं निजनाभीकमले चतुर्मुखमुत्पादितवतोऽस्मत्स्वामिनः परमपुरुषादन्यस्य कस्यापि किं नु भोः! पुष्पार्पणमर्चनं वा युज्येत? ॥ (नैव युज्येत।)

* कश्च ध्येयः? कारणं तु ध्येयः * इत्यथर्वशिरसा जगत्कारणभूतस्यैव दैवतस्य परत्वाभानात् तादृशकारणत्वोपपत्तिपौष्कल्यशालिनो नारायणादन्यस्य कस्य वा देवस्य पुष्पालङ्करणमाराधनं चोपपद्येत? इति सुधीरमुच्यतेऽत्र। संप्रदाये गाथाया अस्याः कथन प्रभावविशेष ऐतिह्यसिद्धः। तच्चैतिह्यमित्थम्;—यादवप्रकाशेन कृत्रिमधिया कृतायां गङ्गायात्रायामन्वितो भगवद्रामानुजः तज्जननीभगिनीसूनुर्गोविन्दभट्टारकश्च [एम्बार्] इति, रामानुजार्यो मार्गमध्यात् [विन्ध्याटवीतः] प्रतिनिवृत्त इति, गोविन्दार्यस्तु सहवासदोषेण लिङ्गपूजानिरतस्सन् काळहस्तिनामकं शिवक्षेत्रमधिवसन्नासीदिति, ततः परं तदीयमातुलप्रवरेण श्रीशैलपूर्णगुरुवरेण

सदुपायतो विनीत स्सत्सम्प्रदायधुरन्धरो बभूवेति च। विदन्ति प्रायो विश्वे। तद्विनयनप्रकारश्चैवः—श्रीशैलपूर्णगुरुवराः कतिपयैरन्तेवासिभिस्सह श्रीवेङ्कटाचलात् कालहस्तिक्षेत्रमधिगत्य गोविन्दार्यो नित्यं शिवपूजार्थं कुसुमान्यपचेतुं येन पथा व्रजति तस्मिन् पथि कस्यचिदनोकहस्य च्छायायामुपविश्य कतिपयदिनानि श्रीरामायणार्थ प्रवचनं कृत्वा निराशाः प्रतिनिवृत्ताः; पुनरपि कदाचिदुपगत्य गीतार्थप्रवचनं कृत्वा तदाऽपि निराशाः प्रतिनिवृत्ताः। अथ तृतीये पर्याये समेत्य सहस्रगीतिदिव्यार्थप्रवचन कर्तुमुपाक्रमत। इदानीमिह व्याख्यायमानं द्वितीयशतकस्य द्वितीय दशकमिद मुपन्यसितुमुपक्रम्य चतुर्थीं गाथामिमां प्रमाणोपपत्तिप्रपञ्चनपुरस्सरं दपदमपि द्रवयन्तो व्याचक्षते। सकलदैवतनिदानभूतान्नारायणाद्व्यतिरिक्त दैवतं किमहो पुष्प पूजनं वा अर्हति? इत्यमुमर्थमतिविशदतया समातुलपादैः पूर्णार्यगुरुवैर्व्याख्यायमानं सावधानमाकर्णयति स्म पुष्पापचयाय पाटलमहीरुहमारुह्य स्थितो गोविन्दार्यः। आकर्ण्य भृशमनुशयानः पुष्पापचयाद्विरम्य वृक्षादवतीर्य पुष्पकाण्डोल सुदूरतो विधूय कण्ठे धृतां रुद्राक्षमालां च निष्कास्य विसृज्य सरभसमागत्य मातुलपादाना पादपद्मयुगलोपकण्ठे निपत्य,

१. स्वाभाविकानवधिकातिशयैश्वर्यशालिनि श्रीमति नारायणे विराजमाने ईशितव्येष्वन्यतममाश्रितवानहं हन्त!
२. परमसत्त्वसमाश्रये परमकारुणिके परमपुरुषे जाग्रति सति तमोमयदारुणदुर्दैवतमशिश्रियं हन्त!
३. गम्भीराम्भस्समुद्भूतसुमृष्टनाल रविकरविकसितपुण्डरीकदलामलायतेक्षणे चकासति विरूपाक्षमाश्रयं हन्त!
४. वेदापहारगुरुपातकदैत्यपीडाद्यापद्विमोचनमहिष्ठफलप्रदाने स्वसर्वरक्षणजागरूके जाग्रति रक्ष्येष्वन्यतममभज हन्त!
५. स्वपादारविन्दविनिस्सृतजाह्नवीपय.पूरपवित्रीकृतपार्वतीपतौ परे पुंसि विभ्राजमाने शापोपहतं शर्वमाशिश्रियं हन्त!
६. पद्मवनालयापयोधरपरिस्फुरदुरस्स्थले परदैवते परिस्फुरति अस्थिमालाजटिलमवरदैवतमाश्रितोऽस्मि हन्त

इत्येवमेवमपरिमितनिर्वेदभरभरितवाक्यविततीर्विज्ञाप्य "इयता कालेन दुर्दैवबलात् अनर्थाकूपारपरिपतितोऽयं जनो बत! नेतः परमपि निपातयितव्यः, परमया कृपया सपदि समुत्तारणीयः" इति कथयन् भूतलादनुत्तिष्ठन् विद्धनमूलमहीरुहसधर्माऽवर्तत। अथ पूर्णार्य श्रीनिवासभगवत्कृपया कृतार्थोऽस्मीति हर्षप्रकर्षप्रफुल्लान्तरङ्गो मृदुशीतलेन पाणितलेन तं समुत्थाप्य प्रेमार्द्रया दशाऽवलोक्य समुज्जीवयामास, निनाय च निकेतनं निजमिति ॥

## —※ चौथी गाथा—तेवुमेप्पोरुळुम्पडैक ※—

(हिंदी.) देवगण और दूसरे समस्त पदार्थों की सृष्टि करने के लिए अपने नाभी कमल से चतुर्मुखब्रह्मा की सृष्टि करने वाले हमारे स्वामी परमपुरुष के सिवा, क्या दूसरे किसीको फूल चढाना या पुजा करना उचित है? (उचित नहीं ॥)

इस गाथा में आळ्वार सर्वेष यह सवाल करते हैं कि, "कारण तु ध्येयः" इत्यादि अथर्वशिर उपनिषद के अनुसार जगत्कारणवस्तु ही परतत्व हो सकता है; और जब कि यह कारणता श्रीमन्नारायण में अतिस्पष्ट देखी जा रही है, तब ऐसे परतत्व उन्हें छोड क्या दूसरे किसी देव की पुष्पार्चना, पूजा, इत्यादि करना कभी उचित होगा। यह तो शास्त्रों में स्पष्ट बताया ही गया है कि श्रीमन्नारायण के नाभी कमल से चतुर्मुखब्रह्मा उत्पन्न हुए और उनके द्वारा सारी जगत की सृष्टि हुई। अतः श्रीमन्नारायण ही जगत के मूल कारण ठहरे। फिर, उन्हें छोड दूसरे क्षुद्र देवों की पूजा कैसे की जाय? इस गाथा का, सम्प्रदायसिद्ध एक विलक्षण ऐतिह्य इस प्रकार

। है–इस कथा से प्राय: सभी आस्तिक परिचित हैं कि यादवप्रकाश की कृत्रिम गंगायात्रागोष्ठी में श्री रामानुज ामीजी और उनकी मौसी के पुत्र एम्बार नामक श्री गोविंद स्वामी भी शामिल थे; श्रीरामानुज स्वामीजी ाच में से ही कांची लौट गये, श्री गोविंद स्वामीजी तो काशी पहुंचकर, वहां गंगाप्रवाह में एक शिवलिंग ाकर, गुरुकी आज्ञा से शिवभक्त बनकर, कालहस्ति में शिवपूजा करने में निरत रह गये; और उनके ामाजी श्रीशैलपूर्णस्वामीजीने सदुपायों से उन्हें सुधार कर सत्संप्रदायनिष्ठ बना दिया। सुधारने का प्रकार अब बताया जाता है—श्रीशैलपूर्ण स्वामीजी श्रीशैल से अपने कतिपय चेलों के साथ कालहस्ति पधार कर गोविंदस्वामी के आने जाने के रास्ते में किसी एक वृक्ष की छायामें विराजकर श्री रामायण का प्रवचन करने लगे। परंतु गोविंदस्वामी पर इसका कोई असर न पडा। निराश होकर गुरुजी स्वस्थान लौट गये। कुछ समय के बाद फिर वे कालहस्ति पधारे और पूर्ववत् गोविंदस्वामी को सुनाते हुए भगवद्गीता का प्रवचन करने लगे। परंतु यह भी प्रयत्न बेकार हुआ; गोविंदस्वामी के चित्त में इसका भी कोई असर न पडा। तथापि हताश न होकर स्वामीजी ने तीसरी बार पधारकर सहस्रगीति का प्रवचन करना शुरू किया। आप तो बडे रसिक और वाग्मी थे; आपका प्रवचन इतना मधुर और भावावेशपूर्ण था कि उसे सुनकर मानों पत्थर भी पिघल जाता। सहस्रगीति में प्रकृत दशक का प्रवचन चलता था। श्री स्वामीजी नानाविध शास्त्राधार व युक्तियां बताते हुए श्रीमन्नारायण के परत्व का बडा ही रोचक वर्णन करते थे। पास ही श्री गोविंदस्वामी एक पाटलीवृक्ष पर चढकर, शिवपूजा के लिए पुष्प तोडते हुए, यह प्रवचन सुनते थे। धीरे धीरे उनका मन पिघल गया। जब स्वामीजी ने पूछा कि, "सकलदेवों के भी मूलकारणभूत श्रीमन्नारायण के सिवा दूसरा कौन-सा देव पुष्प व पूजा पाने योग्य है?" तब गोविंदस्वामी चुप रह न सके। पेड से नीचे उतर कर उन्होंने फूलकी टोकरी दूर फेंक दी, अपने गले से रुद्राक्षमाला उतार दी, और यों प्रलाप करते हुए श्री स्वामीजी के श्रीचरण पकड लिये कि, "(१) स्वाभाविक व सीमातीत ऐश्वर्यवाले श्रीमन्नारायण के विराजते ही, उन्हें छोड, मैंने हाय! उनसे रक्षा पानेवाले देव का आश्रयण किया; (२) परमसत्वगुणमय व परमकारुणिक परमपुरुष के विराजते ही मैंने, हाय! उन्हें छोड, तमोमय व क्रूरकर्मा अल्पदेवता का आश्रय लिया; (३) ऊंडे पानी में समुत्पन्न, सुशोभन नाल पर शोभायमान व तभी फूले हुए कमल के सदृश नेत्रवाले भगवान के विराजते ही, हाय! मैंने उन्हे छोड विरूपाक्ष का आश्रयण किया; (४) वेदों का अपहरण, ब्रह्महत्यानामक महापाप, असुरों की पीडा इत्यादि बडी बडी आपदाएं मिटाकर अति श्रेष्ठ फलों के प्रदाता सर्वरक्षक भगवान के विराजते ही मैंने, हाय! उन्हें छोड, उनकी ओर से रक्षा पानेवाले देव का आश्रयण किया; (५) अपने पादारविंद से बहनेवाली गंगाजीके पवित्र प्रवाह से पार्वतीपति को भी पवित्र बनानेवाले परमपुरुष के विराजते हुए ही, हाय! मैंने उन्हे छोड, शापाक्रांत शिव का आश्रयण किया; (६) महालक्ष्मी-समालिंगित दिव्यवक्षवाले परदेवता श्रीमन्नारायण के विराजते ही, मैंने, हाय! हाय! उन्हें छोड, रुंडमाला, जटा इत्यादि धरनेवाले अवरदेवता का आश्रयण किया था। कहांतक रोऊं? इतने दिनों में अपने प्रारब्ध के प्रताप से अनर्थसागर में डूब गया था। अब उसके कहने से क्या लाभ? जो बीत गया, सो गया। परंतु आप इस पापी पर कृपा करते हुए इसका उद्धार कीजिए।" इस प्रकार बडे पश्चाताप के साथ अपने श्रीपाद में दंडवत् पडे हुए अपने भानजे को देख श्रीशैलपूर्णस्वामीजी बहुत प्रसन्न

हुए और अपना प्रयत्न सफल बनानेवाले श्री श्रीनिवास भगवान के विषय में कृतज्ञता का प्रकाशन करते हुए, गोविंदस्वामी को जमीन से उठाकर, प्रेमार्द्र कटाक्षवीक्षण से आश्वासन देकर, उन्हें अपने साथ लेकर स्वस्थान लौट गये। प्रकृत गाथा का यह विलक्षण प्रभाव है ॥ (४)

(गाथा) तहुम् शीर्चन् तनिमुदलिनुळ्ळे * मिहुम् देवुमेप्पोरुळुम् पडैक्क *
तहुम् कोलत्तामरैकण्णनेम्मान् * मिहुम् शोदि मेलरिवार् यवरे ॥ ५ ॥

स्वचिकीर्षितकार्यवर्गसर्गानुकूलज्ञानशक्त्याद्यनेकगुणसमृद्धस्य स्वस्य सङ्कल्पेन ब्रह्मादीन् देवान् अन्यच्चाशेष वस्तुजात च स्रष्टुमयमेव समर्थ इति पिशुनयता सरसिजसदृशनयनयुगलेनाभिरामात्परमपुरुषादन्यत् ज्योतिर्मय वस्तु को वा वेद ? [न कोऽपि वेद, अस्ति चेत् खलु वेदनप्रसक्ति ।]

"तस्य यथा कप्यास पुण्डरीकमेवमक्षिणी" इति श्रुतिप्रतिपन्न पुण्डरीकाक्षत्वमपि परत्वसाधकमिति ससूच्यते गाथयाऽनया। भगवद्यामुनार्या अपि स्तोत्ररत्ने भगवदेकनिष्ठ पारम्यमेति प्रख्यापनप्रकरणे "क पुण्डरीकनयन ?" "पुरुषोत्तम क ?" इतिप्रश्नयो स्साहचर्यं निवन्धु यत् तदिह ध्येयम्। अत्र पूर्वाचार्यव्याख्यानरसविशेष मनागनुभवाम। मारुतिरशोकवनिकाया वैदेहीमभिभाषमाण * यानि रामस्य चिह्नानि लक्ष्मणस्य च वानर! तानि भूयस्समाचक्ष्व न मा शोकस्समाविशेत् ॥ कीदृश तस्य सस्थान रूप रामस्य कीदृशम्। ." इति वैदेह्या परिपृष्ट: * त्रिस्थिरस्त्रिप्रलम्बश्च त्रिसमस्त्रिषु चोन्नत * इत्याद्यभिज्ञानकथनत प्राक् * राम कमलपत्राक्ष सर्वसत्वमनोहर. * इति बभाषे। सर्वसत्वमनोहरो राम इति कथमनेन विज्ञातम्? इति तावत्समालोचनीयम्। यदाऽसौ हनुमान् रामचन्द्रमद्राक्षीत् तदा वानरवर्गादन्यो न कोऽपि प्राणी तत्रावर्तत। सुग्रीवादय इव सोऽयमपि वर्षाकाल किष्किन्धायामेवात्यवाहयत्, किष्किन्धातो रामसकाशमागत्य ततस्सीतामार्गणाय प्रस्थानावधि च लक्ष्मणादन्यो न कोऽपि प्राणी तत्रावर्तिष्ट। एव च बहुसत्वमनोहर इति कथयितुमप्यवकाशे असति सर्वसत्वमनोहर इति कथमिव कथयति इति पृच्छाऽत्र अवश्य भाविनी। अत्रैव समादधते विद्वद्रसिकसार्वभौमा पूर्वाचार्या। कमलपत्राक्ष इति कथनसमनन्तर हि सर्वसत्वमनोहर इत्यभिधीयते। नित्यब्रह्मचारिणो विषयग्रामविरक्तस्य नयनसौन्दर्यासौन्दर्यज्ञानकथावैदेशिकस्य स्वस्यैव मनो यदा हरति स्म श्रीरामनयनसौन्दर्यम्, तदा तादृशसौन्दर्यविशिष्टो रामस्सर्वसत्वमनोहर इति किम्पुनर्यर्थासिद्धमिति ताव मारुतिरभिमेने इति। "तिर्यग्जातीयतया विटपाद्विटपप्लवत अविशेषज्ञस्य ममापि मन प्रसभमपजहार खलु श्रीरामनयनारविन्दसौन्दर्यम्!" इति तावदत्र [द्राविड] व्याख्यानवाक्यसदर्भ ॥ (५)

—* पाचवीं गाथा—तहुम् शीर्चन्तनिमुदलिनुळ्ळे *—

(हिंदी.) जगत्सृष्टि करने के लिए अपेक्षित ज्ञान शक्त्यादि समस्तशुभगुणपरिपूर्ण, अपने संकल्पमात्र से ब्रह्मादि देवों तथा दूसरे सभी पदार्थों की सृष्टि करने में समर्थ, और इस सामर्थ्य के सूचक कमल के सदृश उभयनेत्रों से सुशोभित, परमपुरुष के अतिरिक्त किसी दूसरी ज्योतिर्मय वस्तु को कौन जान सकता है? (कोई नहीं; चूंकि ऐसी कोई वस्तु है ही नहीं, फिर अविद्यमान वस्तु को कौन जानेगा?)

इस गाथा में भगवान के परत्व के चिह्नतया, "तस्य यथा कप्यासं पुण्डरीकमेवमक्षिणी" इत्यादि प्रसिद्ध वेदवाक्य के बताये हुए, पुंडरीकाक्षत्व का वर्णन किया जाता है। श्रीयामुनाचार्य स्वामीजी ने भी स्तोत्ररत्न में गाया, कि "कः पुण्डरीकनयनः पुरुषोत्तमः कः?" इससे स्पष्ट होता है कि पुण्डरीकनयनत्व भी परत्व का एक असाधारण लक्षण है। अत एव हनुमानजी ने सीतादेवी के सामने श्रीरामचंद्रजी के दिव्यमङ्गलविग्रह का वर्णन करते हुए, प्रारंभ में ही विनती की कि, "रामः कमलपत्राक्षः सर्वसत्त्वमनोहरः।" यह कथा है—अशोकवन में अपने पास आये हुए हनुमानजी का अविश्वास करती हुई (अर्थात् उन्हें कपटी राक्षस ही मानती हुई) सीताजी ने परीक्षार्थ उनसे पूछा कि, "अहो! वानर! यदि तुम सत्य ही रामदूत हो, तो कहो तो सही कि श्रीरामलक्ष्मणों के श्रीविग्रह कैसे होते हैं।" इसका सविस्तर प्रत्युत्तर देते हुए हनुमानजी कहने लगे—"रामः कमलपत्राक्षः" इत्यादि। यहां पर हमारे आचार्य एक बड़ा रोचक विवेचन करते हैं। तथाहि—उक्त हनुमानजी के वाक्य में 'सर्वसत्त्वमनोहर' शब्द का अर्थ है, समस्त प्राणियों के मन जीतनेवाले। अब, यह शंका अवश्य उठेगी कि हनुमानजी ने यह कैसे जाने सका कि श्रीरामचंद्रजी का सौंदर्य समस्त प्राणियों के मन चुरेगा, जब कि हनुमानजी के समक्ष उन्होंने अनेक प्राणियों को अपने दिव्यदर्शन दिये ही नहीं। अर्थात् हनुमानजी ने श्रीरामचंद्रजी को अनेक प्राणियों को दर्शन देते हुए, जब देखा ही नहीं, तब वे कैसे कह सकते हैं, सर्वसत्त्वमनोहर' हमारे आचार्यों का बताया हुआ इसका सुंदर प्रत्युत्तर यह कि, जब नित्यब्रह्मचारी, सौंदर्य के अनभिज्ञ, सर्वथा विरक्त, तदुपरान्त शाखामृगचारी वानर हनुमानजी का ही मन श्रीरामदेव के सौंदर्य से आकृष्ट हो गया, तब दूसरे जीवों के मन आकृष्ट होने के विषय में कहने की आवश्यकता ही नहीं रहती। कहने का यह भाव है—इस वाक्य में हनुमानजी श्रीरामचंद्रजी की नेत्रशोभा का वर्णन करने के बाद तुरंत कह रहे हैं 'सर्वसत्त्वमनोहरः।' यों कहनेवाले उनका यह तात्पर्य है कि जब सौंदर्य से अपरिचित जगत का जानवर मैं ही श्रीरामचंद्रजी के नयनसौंदर्य से अपहृतचित्त हुआ, फिर दूसरे प्राणियों के विषय में कहना ही क्या! यह है टीकाकार आचार्य-सार्वभौम का द्राविडी वाक्य—"जानवर होने से वृक्षों की एक शाखा से दूसरी पर छलांग मारनेवाले, अरसिक मेरे मन का भी श्रीरामचंद्रजी के नेत्रों के सौंदर्य ने अपहरण कर लिया।" .... (५)

(गाथा.) परुम् यावैयुमेल्लाप्पोरुळुम् * करविन्रि तन्नुळोडुङ्गनिन्र *
पवर्कोळ् ञानवेळ्ळच्चुडर्मूर्त्ति * अवरेम्माळि यम्पळ्ळियारे ॥ ६ ॥

चिद्वस्तूनामचिद्वस्तूना च अशेषाणामपि स्वोदरे निस्सङ्कोचावस्थित्यनुकूलस्थान-प्रदायकः विकस्वरज्ञानप्रभाप्रदीप्तमूर्तिश्च स भगवान् प्रलयार्णवशायी मम नित्या-नुभवगोचरीभूतः ॥

प्राकृतप्रलयदशायां हरविरिञ्चादिरूपेण लक्ष्यमाणश्चिदचिदात्मकः प्रपञ्चो भगवदुदरैकदेशे सूक्ष्मतया अवस्थित इति तत्त्वविदां समयः। परमभक्तो माघो महाकविरपि प्राह स्वकाव्ये—* युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकाममासत। तनौ ममुस्तत्र न कैटभद्विषस्तपोधनाभ्यागमसंभवा मुदः ॥ * इति। वसुदेव-

सद्मनि वासुदेवदिदृक्षया यदा नारदो महर्षिस्समागमत् तदा तस्य वसुदेवसूनो रात्मनि संजातस्संतोषो वाचाम· भूमिरासीदिति विवक्षुः कविवरः पौराणिकीषु भगवत्कथासु स्वस्य प्रतिपत्त्यतिशयं प्रख्यापयन् खलु कथयति स्मैवम् । युगान्तकाले यस्मिन्नुदरे कृत्स्नचराचरप्रपञ्चस्य विपुलतमं स्थलं सुलभमासीत्तस्मिन् तपोधनाभ्यागमसंभवानां मुदां परं स्थलं दुर्लभमासीदिति कथितवतोऽस्य महाकवे र्वाक्चातुर्यविशेषः प्रशंसनीयो वा शास्त्रविश्वासभूमा प्रशंसनीयो वेति न जानीमहे । स्मर्यमाणमनुपेक्षणीयमिति तदेतदिह प्रास्तावि ।

गाथायामिह मूले स्वोदरे इति पदं नास्ति । स्वस्मिन्नित्येव वर्तते । "तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः" इति प्रमाणोदाहरणपूर्वकम् 'उदरे' इति व्याचक्षते पूर्वाचार्याः । 'स्वसङ्कल्पैकदेशे' इत्यपि व्याचचक्षिरे । समनन्तरगाथायाम उदरवाचिपदं सुस्पष्टमेवावतिष्ठते । स्तोत्ररत्ने * कस्योदरे हरविरिञ्चमुखः प्रपञ्चः * इत्यत्र श्रीमद्वेङ्कटनाथीये भाष्ये—"यस्य ब्रह्म च क्षत्रं च उभे भवत ओदनः । मृत्युर्यस्योपसेचनं क इत्था वेद यत्र सः ॥ इत्यत्र ओदनोपसेचनशब्दवत्, * ग्रसेत्संहारसमये जगत् स्थावरजङ्गमम् । ... ...इत्यत्र ग्रसनशब्दवच्च अत्र उदरशब्द औपचारिकः" इत्येवं भाषणमवलोक्यते ॥ .... .... (*)

—* छठी गाथा—यवरुम् यावैयुम् एल्लाप्पोरुळुम् *—

**(हिंदी.) सभी चेतन व अचेतन पदार्थों को अपने पेट में निस्संकोच रहने का स्थान देनेवाले, विकसित ज्ञान की प्रभा से समुज्वल-मूर्ति और प्रलयसागरशायी भगवान् मेरे नित्यानुभव के विषय हैं ॥**

तत्वज्ञों का कहना है कि प्रलय के समय, बाद मे ब्रह्मरुद्रादिरूप से सृष्टि पानेवाला यह सारा प्रपंच, अतिसूक्ष्मरूप से भगवान के पेट मे रहता है। प्रसंगवशात् परमभक्त माघकवि के शिशुपालवध काव्य का एक सुदर पद्य बतावेंगे—युगान्तकालप्रतिसंहृतात्मनो जगन्ति यस्यां सविकासमासत । तनौ ममुस्तत्र न कैटभद्विषः तपोधनाभ्यागमसंभवा मुदः ॥ इस पद्य का सारार्थ इतना ही है कि, वसुदेवजी के यहां वास करनेवाले श्रीकृष्ण भगवान ने, एक दिन अपने दर्शन के लिए आते हुए नारदजी को देख कर अत्यधिक आनंद पाया । परंतु कविराज इस सरल अर्थ का ही, पुराणोक्त भगवकथाओं में अपना आदरातिशय बताते हुए, कवि के ढंग से इस प्रकार वर्णन करता है कि—प्रलय के समय जिन भगवान के पेट में चराचररूपी यह सारा प्रपंच समा गया था, ऐसे उनके पेट में (अर्थात् अन्तःस्थान मे) अब महर्षि के दर्शन से समुत्पन्न आनंद समा नहीं सका । ओह ! कवि की वाणी का चातुर्य और उसका शास्त्रविश्वास कितने मनोहर हैं ! अस्तु । यहा पर मूल गाथा में [**अपने पेट में**] शब्द नहीं देखा जाता; किंतु इतना ही है कि [*अपने में*] । *आगे की गाथा में 'उदर' शब्द स्पष्टतया प्रयुक्त है । पुराण का भी वचन है,* "तदपश्यमहं सर्वं तस्य कुक्षौ महात्मनः ।" इन सभी विषयों का विवेचन कर हमारे आचार्य प्रकृत गाथा में यह अर्थ करते हैं कि 'अपने पेट में ।' वे ही यह दूसरा भी अर्थ बताते हैं कि, "अपने संकल्प के एक अश म ।" श्री यामुनाचार्य स्वामीजी ने अपने स्तोत्ररत्न में गाथा के, "कस्योदरे हरविरिञ्चमुखः प्रपञ्चः ।" यहा पर स्तोत्रभाष्य के कर्ता श्रीवेदान्तदेशिक स्वामीजी लिखते हैं कि यहापर 'उदर' शब्द

लाक्षणिक है; जैसे "यस्य ब्रह्म च क्षत्र च उभे भवत ओदनः। मृत्युर्यस्योपसेचन क इत्था वेद यत्र स ॥" इत्यादि कठवल्ली-मन्त्र के, "ओदन" व "उपसेचन" शब्द, और "प्रसेनन्द्वारसमये जगत्" इत्यादि वाक्य का "प्रसेत्" शब्द (लाक्षणिक है)॥ .... .... .... (६)

(गाथा.) पव्विळपालिलै येळुलहुम् कोळ्ळुम् * वळ्ळल् वलयिवु प्पेरुमान् * उव्ळुळारिरियार् अनन्तन् * कळ्ळमाय मनकरुत्ते ॥ ७ ॥

वटदल शयनीयतया स्वीकृत्य सप्तलोकीभरणानुकूलविशङ्कटजठरपरिग्रहकारिण. श्रीमन्नारायणस्य दुरवगम विलक्षणविचित्रमन्तरङ्ग के नाम मनसा ध्यातुमीशते?

अघटितघटनासामर्थ्यतोऽपि श्रीमन्नारायण एव परात्पर इत्यभिधीयते। पूर्वगाथाविवरणरूपिणी सेय गाथा। वटदलशयनवृत्तान्तस्तावदैतिहासिकैरनुसन्धीयते-भगवानशेषमपि चराचर निश्शेष निगीर्य सद्योजाते लघीयसि वटदलविशेषे शयितस्सुष्वापेति। अत्र तु शङ्कनीय भवति 'वटदल तत् कुत्रावतस्थे' कथमवतस्थे' सर्वमपि भगवता निगीर्णं यदि वटदलाधारभूत वस्तु किं तत्?' इति। अघटितघटनापटीयसि परमात्मनि एवविधशङ्का अनवकाशपराहतेति सूचयितुमेवात्र "तस्य दुरवगमं विलक्षणविचित्रमन्तरङ्गं के नाम मनसा ध्यातुमीशते?" इति। शारीरकमीमांसायां * कृत्स्नप्रसक्त्यधिकरण पूर्वपक्षसिद्धान्ताविह वेदितव्यौ॥ ...(७)

—* सातवी गाथा—पव्विळपालिल एळुलहुम् कोळ्ळुम् *—

(हिंदी) वटपत्र को अपना शयन बनाकर, सातों लोकों का धारण करने में समर्थ पेट का धारण करनेवाले श्रीमन्नारायण के, किसी की समझ मे नहीं आ सकनेवाले विलक्षण व विचित्र हृदय को कौन जान सकता है?

यह गाथा बताती है कि भगवान के अघटितघटनासमर्थ होने से भी उनका परात्परत्व जाना जा सकता है। पिछली गाथा के विवरणरूपतया ही यह अर्थ बताया जा रहा है। इतिहासपुराणों में यह वृत्तान्त बताया गया है कि भगवान प्रलय के समय चेतनाचेतनात्मक समस्त जगत को निश्शेषतया निगलकर, तभी उत्पन्न एक छोटे से वटपत्र पर शयन करते हैं। इस पर अगर पूछा जाय कि वह वटपत्र किधर रहा? किधर से, कैसे आया? उसका क्या आधार था? समस्त पदार्थों को निगल डालनेवाले भगवान ने उसे कैसे छोड दिया? इत्यादि, तब इन प्रश्नों का एकमात्र प्रत्युत्तर यही होगा कि ये सब अघटितघटनासमर्थ भगवान की बनायी हुई घटना है। इस अर्थ का सूचक है [किसी की समझ मे नहीं आ सकने वाले] इत्यादि वाक्य। अर्थात् भगवान अपनी विचित्र शक्ति से ऐसे अद्भुत काम करते हैं जिनकी कल्पना तक मन्दबुद्धिवाले हम मानव ही नहीं, बल्कि अत्यद्भुतप्रज्ञ बडे बडे योगी भी नहीं कर सकते। श्रीभाष्य के कृत्स्नप्रसक्त्यधिकरण में इसकी लंबी चौडी विवेचना की गयी है॥ ... (७)

(गाथा) करुचिल देवुम् एल्लाप्पोरुळुम् * वरुचिच मायप्पिरानै यन्नि * आरे तिरुचि त्तिप्पिलै मूवुलहुम् * तम्मुळ्ळिरुचि काकुमियल्विनरे ॥ ८ ॥

स्वसङ्कल्पमात्रतो देवान् अन्यदन्यच्च पदार्थजातमभिवर्धितवन्तमाश्चर्यशक्तियुक्त महाप्रभुमन्तरेण अन्यः को वा पुमान् त्रैलोक्यमपि स्वकीयान्तरङ्गे सुप्रतिष्ठित निधाय रक्षितु प्रभवति ? ॥

लोके घटपटादिसृष्टिकर्तार इति कुलालकुविन्दादयो ननु दृश्यन्ते । एते खलु उपादानसहकारिकारण कलापसमवधानमन्तरा तत्तद्वस्तुजातमुत्पादयितु नैव प्रभवन्तीति प्रत्यक्षमीक्षामहे । सकल्पतस्समुत्पादनकथा त्वभीमामतिदूरे । अथच घटनिर्मातुः पटनिर्माण दुश्शकम्; पटनिर्मातुर्घटनिर्माण दुश्शकम् । निर्मितानां रक्षणे शक्तिस्तु नैकस्यापि । सर्वेश्वर एक एव सङ्कल्पमात्रेण सर्वनिर्माता सर्वरक्षकश्चेति परमार्थं जानन्तो जना अतीव विरला इति मुनिवरस्य खेद एव प्रकृतगाथात्मना परिणत इति सुस्पष्टम् ॥ .... .... (८)

—* आठवी गाथा—करुत्तिल् तेवुम् एल्लाप्पोरुलुम् *—

(हिंदी.) अपने संकल्पमात्र से देवों तथा दूसरे समस्त पदार्थोंको बढानेवाले (उत्पादक) आश्चर्यशक्तियुत हमारे प्रभु भगवान के सिवा, दूसरा कौन तीनों लोकों को अपने संकल्प के वश रखने, उन्हें सुदृढ स्थापित करने तथा उनकी सुरक्षा करने के स्वभाववाला होगा ?

लोकमें कुम्हार, जुलाहा इत्यादि घटपटादि के कर्ता देखे जाते हैं । परतु उन्हें अपने काम करनें के लिए मिट्टी, सूत इत्यादि मूल वस्तुओं और दड चक्र इत्यादि उपकरणों की आवश्यकता होती हैं, अर्थात् इन वस्तुओं के अभाव में वे काम नहीं कर सकते । और अपने शरीर से परिश्रम करके ही वे ये वस्तु बना सकते हैं, न कि इच्छामात्र से । एव उनमे से एकैक, एकैक पदार्थ ही बना सकता है, अर्थात् कुम्हार घडा ही बना सकता है नतु वस्त्र बुन सकता । जुलाहा तो घडा नहीं बना सकता । अपने निर्मित पदार्थों की रक्षा करने की शक्ति तो इनम से किसीमें नहीं । परतु एकमात्र भगवान अपने सकल्पमात्र से ही समस्त पदार्थों की सृष्टि तथा रक्षा कर सकते हैं । अब आळ्वार अत्यत खेद के साथ कहते हैं कि इस ससार में इस तत्वके ज्ञाता मिलना बहुत कठिन है ॥ ... ... .. (८)

(गाथा.) काक्कुमियल्विनन् कण्णपेरुमान् * शेर्कैशेय्दु तन्नुन्दियुळ्ळे *
वाय्त्त तिशैमुहन् इन्दिरन् वानवर् * आक्किनान् दैवुलहुकळे ॥ ९ ॥

रक्षणैकव्रती श्रीकृष्णपरमात्मा सहारसमये सर्वमपि वस्तुजात स्वस्मिन्नेव विलीन विधाय, अथ सद्वारकमद्वारक च चतुर चतुरानन देवान् तत्तदर्हदिव्यलोकाश्च समुदपादयत् ।

* यतो वा इमानि भूतानि जायन्त इत्याद्युपनिषदाम्नातकृत्यत्रयविशिष्टोऽपि सन् भगवान् रक्षणकृत्यैर स्वस्य असाधारण भव इति शास्त्रार्थं विवृणोति रक्षणैकव्रतीति पदम् । मातापित्रादिषु प्रजापतिप्रभृतिषु दैवतान्तरेषु च दृश्यमान रक्षकत्वमप्येतदनुप्रवेशकृतमिति हि शास्त्राण्युद्घोषयन्ति । "रक्षणैकव्रती

श्रीकृष्णपरमात्मे" अनेन किं रामचन्द्रो व्यावर्त्यत इति न भ्रमितव्यम्; * परित्राणाय साधूनामिति प्रोक्तवान्, विरोधिनिरसनपूर्वकं रक्षणं मतिमान् कृतवांश्च भगवान् श्रीकृष्णमूर्तिरिति मुनिवरस्य मनसि ध्यानमिव। युधिष्ठिरराजसूये * कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्यय इत्यादिना भीष्मप्रख्यापितपरत्वशाली च कृष्ण एव हि। प्रकृतदशक प्रथमगाथायामपि कृष्ण एव हि प्रस्तुत. ॥ .... .... (९)

—* नवमी गाथा—काक्कुमियल्बिनन् कण्णपेरुमान् *—

(हिंदी.) रक्षा करना ही जिनका स्वभाव है, ऐसे श्रीकृष्णपरमात्मा ने संहार के समय समस्त पदार्थों को अपने में विलीन बनाकर, फिर अपने नाभीकमल से जगत् की सृष्टि करने में समर्थ चतुर्मुखब्रह्मा की, एवं (उसके द्वारा) इंद्रादिदेवताओं तथा उनके निवासस्थान अनेक लोकों की सृष्टि की ॥

[रक्षा करना ही जिनका स्वभाव है] कहने का यह तात्पर्य है कि यद्यपि शास्त्रों में जगत् के सृष्टिस्थितिसंहार-नामक तीनों कार्य भगवत्कृत बताये गये हैं, तथापि इनमें, रक्षा करना ही उनका असाधारण स्वभाव है। माँबाप, राजा, देवतान्तर इत्यादि जो कभी किसी की रक्षा करते हैं, वह भी भगवान के अनुप्रवेश के बलसे ही बनता है। [रक्षा करने के स्वभाववाले श्रीकृष्णपरमात्मा] कोई पूछ उठेगा कि क्या श्रीरामचंद्रभगवान रक्षा नहीं करेंगे। कृष्णतृष्णातत्त्वरूपी आळ्वार का यह अभिप्राय होगा कि श्रीकृष्ण भगवान के श्रीमुख से ही "परित्राणाय साधूनाम्" इत्यादि दिव्यवाणी निकली; उन्होंने ही बहुधा दुष्टशिक्षणपूर्वक शिष्टरक्षण भी किया, और "कृष्ण एव हि लोकानामुत्पत्तिरपि चाप्यय" (श्रीकृष्ण ही लोकों की सृष्टि व प्रलय करते हैं) इत्यादि वचन उनके विषय में ही अवतीर्ण हुए हैं। प्रकृत दशक की पहली गाथा में भी श्रीकृष्ण का ही नाम लिया गया था। अत. यहा पर भी वही दिव्यनाम कीर्तित हुआ है ॥

(गाथा.) कळ्ना एम्मेयुमेळुदुम् * निनुळ्ळे तोत्रिय इरैव वेन्नु *
वेळ्ळेरन् नान्मुहनिन्दिरन् वानवर् * पुळ्ळूर्दि कळल् पणिन्देत्तुवरे ॥ १० ॥

वृषभवाहनश्चतुर्मुखो वासव अन्येऽपि च देवा गरुडध्वजभगवत्पादयो. पतित्वा इत्थं हि स्तुवन्ति—'हे चोर! अस्मान् त्रिलोकीं च स्वात्मनि समुत्पादितवान् स्वामी खलु भवान्' इति ।

शार्वपिनामहादैरपि प्रख्यापित हि भगवत परत्वमिति निरूप्यतेऽत्र। भगवतो नारायणाद्विविधान् वरान् वृतवानुमापति विलक्षणमेकं वरं वव्रे 'यथा मा देवास्त्वत्तोऽप्युत्कृष्टं भावयेयुस्तथा नाम भगवन्! त्वं मत्तः कमपि वरं वृणीष्व' इति। भगवानार्जवभरितेन हृदा तथेत्युररीकृत्य, * उमया सार्धमीशानमागमिष्यन्तं प्रतीक्ष्य स्थितं तत्सविधमुपेयिवान् "पुत्रीयया किं वरं वव्रे वृषाङ्कात्" इत्यभिमानुयस्तवोक्तरीत्या रुक्मिण्याः पुत्रोत्पत्तिमवृणोत। यद्यपि वरप्रार्थना सेयं उमापतिना स्वयं काङ्क्षितैव, तथाऽपि स्वेच्छानुरोधेन तत्कृता वरप्रार्थनामवेक्ष्य, वास्तविकं स्वनिकर्षं तदुत्कर्षं चानुसन्धाय व्रीडितो भूत्वा पार्वतीपति तेन सह स्थितश्चतुराननसहस्रा-

क्षादि देवगणाश्च "हा कितव! भगवन्! सृज्यानामस्माकं स्रष्टा खलु तत्र भवान्; एतादृशस्त्वमेवं नाम नाट्यमारचयसि; विलक्षणं खल्वेतत् कैतवम्!" इति कथयन्तो गरुडध्वजस्य भगवतस्तस्य पादयोः पतित्वा प्रशशसुः इति कथाया गाथायामस्यामनुसन्धानमुखेन परत्वप्रतिपादनमुपसंहृतम्॥ हे चोर! इति तैः कृतं संबोधनं नवनीतचौर्यादिनिबन्धनं न; स्वामिलाषानुरूपं स्वस्वरूपाच्छादनं यत्कृतं कृष्णेन, तत्प्रयुक्तं मन्तव्यम्॥

—* दसवीं गाथा—कळ्वावेम्मैयुम् एळुलहुम् *—

**(हिंदी.) वृषभवाहन, चतुर्मुखब्रह्मा, महेंद्र, और दूसरे सभी देव मिलकर, गरुडध्वज भगवान के श्रीपादों में प्रणत होकर यों स्तुति करते हैं कि, "हे चोर! आप तो हमें तथा सातों लोकों को अपनेमें से समुत्पन्न कराने वाले स्वामी हैं॥"**

इस गाथा मे यह अर्थ बताया जाता है कि ब्रह्मरुद्रेन्द्रादि समस्त देव भगवान के परत्व का प्रख्यापन करते है; और इस विषय मे एक सुंदर कथा का सूचन-पूर्वक प्रसक्त परत्व का उपसंहार किया जाता है। भगवान श्रीमन्नारायण से नानाविध वर माँगनेवाले शिवाजी ने एक समय एक विलक्षण वर माँगा कि, "प्रभो! मेरी यह आशा है कि सभी लोग मुझे देवाधिदेव माने। यह तो तभी बनेगा जब कि स्वयं आप मेरा मान बढावेंगे। अतः कृपया आप मेरी स्तुति, पूजा इत्यादि करके मुझसे वर माँग लीजिए।" भगवान ने सीधापान से इसका अंगीकार कर दिया। श्रीकृष्णावतार के समय आपने यह वरदान सफल करना चाहते हुए कैलास पधारकर बडी तपस्या से शिवजी को प्रसन्न कराकर, उनसे रुक्मिणी देवी में पुत्रसंतान का वार माँगा। शिवजी ने समझ लिया कि मेरी प्रार्थना के अनुगुणतया ही भगवान यह विलक्षण खेल खेल रहे हैं; तथापि उन्हे बहुत लज्जा हुई। तब उन्होंने अपने साथी दूसरे देवो के साथ भगवान की यह स्तुति की, कि "हे मायाविन्! चोर! भगवन्! हम सब सृष्टि पानेवाले, और आप हमारी सृष्टि करनेवाले प्रभु हैं! ऐसे आप अब (मेरे से वरदान माँगने का) यह कपटनाटक खेल रहे हैं। ओह! आपकी लीला बडी विलक्षण है॥" यों स्तुति करते हुए इन सभी देवों ने भगवान के पादारविंदों का प्रणाम किया। भगवान को चोर पुकारने का यह तात्पर्य नहीं कि उन्होने मक्खन आदि की चोरी की; किंतु शिवजी की प्रार्थना के अनुसार, अपने को नीच बनाकर, उनसे जो वर माँगा, यह विलक्षणलीला है॥

(गाथा.) एत्त वेल्लुलहुम् कोण्ड कोलक्कूत्तनै * कुरुहूर्च्चठकोपन् शोल्*
वाय्न्त वायिरत्तुळ् इवै पत्तुडन् * एत्त वल्लार्क्किल्लै योरुनमे॥ ११॥

स्तोत्रपात्रतां प्राप्य सप्तलोकीमाक्रान्तवन्तम् अद्भुतनटनचतुरं भगवन्तमुद्दिश्य श्रीकुरुकापुरीशश्रीशठकोपमुनीन्द्रकीर्तिते भक्तजनानामलभ्यलाभरूपे गाथासहस्रे दशक मिदमुपादाय भगवन्तं स्तुवन्तो भागवतास्सकलविधन्यूनताविरहिता भवितार इति फलकीर्तनेन समापितमिदं दशकम्॥

सकलजनस्तोत्रपात्रता मत्तलोकीसमाक्रमणात्पूर्वं जातेति वा, पश्चाज्जातेति वा ग्रहीतुं योग्यम्। मूलगाथा सन्निवेशो द्वेधाऽपि घटते। अद्भुतनटनचतुरत्वम् जगदाक्रमणान्न पृथग्भूतम्; तदेवाक्रमणं नटनत्वेनाभात्स्यतेति भावः॥ ... ... . .... ... (११)

—* द्रमिडोपनिषत्संगतिः *—

(श्लो.) संश्लिष्य दुःखगमनान्मुदितः प्रगल्भाचन्मूलमञ्जनयनस्य महेश्वरत्वम्।
आहान्ययादितरतोऽपि मनुष्यभावे पौराणिकोक्तनयतश्शठजिद्द्वितीये॥

—* ग्यारहवीं गाथा—एचवेल्लुलहुङ्गोण्ड *—

(गाथा.) सबकी स्तुति पाकर सातों लोकों को नाप लेनेवाले अद्भुत नटन करने में चतुर भगवान को लक्ष्यकर श्रीकुरुकापुरी के नाथ श्री शठकोपसूरि के गाये हुए भक्तजन-भाग्यरूपी सहस्रगीति के अन्तर्गत इस दशक को अर्थ के साथ सीखकर भगवान की स्तुति करनेवाले भक्तजन सकलविध न्यूनताओं से मुक्त होंगे। (इस फलश्रुति के साथ यह दशक समाप्त किया गया॥)

यह चर्चा चलाने की आवश्यकता नहीं रहती कि क्या भगवान ने पहले सबकी स्तुति पायी, अथवा सातों लोक निगल दिये, क्योंकि यह दोनों प्रकार हो सकता है। प्रकृत गाथा के शब्दों का सन्निवेश दोनों अर्थ दे सकता है। [अद्भुतनटन] शब्दका अर्थ भी यही नापना है। अर्थात् जब भगवान ने लोक-विक्रमण किया तब वही भक्तों को नटन जैसा दीख पड़ा॥ (११)

दूसरे शतक का दूसरा दशक (सटीक) समाप्त हुआ॥
आळ्वार तिरुवडिगळे शरणम्

---

श्रीमते रामानुजाय नमः। श्रीमद्वरवरमुनये नमः।

## ॥ सहस्रगीत्याम् द्वितीयशतके-तृतीयं दशकम्—ऊनिल्वाळुयिरे॥

(सं) अवतारिका—अधस्तात् प्रथमदशके मुनिवरस्य वाचामगोचरमार्त्यतिशयं पिशुनयदवतीर्णम्। तत्र दशम्यां गाथायां भगवानभिमुखो भूत्वा तच्छ्लेषसुखमनुगृह्य निर्वेदमशीशमदित्यभ्यधायि। ततश्च स्वकीयानन्दातिशयप्रकाशनं प्राप्तम्। तत्प्रकाशनपटीयसा दशकेनानेन पुरस्तादेव भवितव्यमवतीर्णेन। भगवतः परत्वानुभवपरीवाहरूपं द्वितीयं दशकं मध्ये प्रासङ्गिकमवतीर्णम्। यच्च क्रमवर्तित्वादिदानीमानन्दातिशयप्रकाशकं दशकमिदमवतरति, येन पुरस्तादेवावतरितव्यम्। लोके दुःखानुभवकाले आनन्दानुभवकाले च बहूनां सहयोग आवश्यको भवति, एकाकिनाऽनुभूयमानं दुःखं न शान्तिमधिगन्तुं प्रभवति। तदा बहुभिस्सह योगे जाते तैस्तैरुच्यमानैरुपचारवचोभिः कथञ्चित् सहनं संपद्यते। अत एवोक्तं कविवरेण "दुःखं हि नाम बहुषु सविभक्तं सह्यवेदनं

भवति" इति । अत एव चाधस्तात्प्रथमदशके अचेतनानि अचेतनकल्पानि च वस्तून्याम न्त्र्य किमपि किमपि कथयित्वा स्वकीय दुःख सोढुं प्रशमयितुं च प्रबभूव मुनिवर । एवमानन्दानुभवकालेऽपि बहूना सहयोग आवश्यको भवति सात्म्यत्वाय । अतिदुःखमिव अत्यानन्दोऽपि ह्यात्मनाशाय कल्पते । अनर्थात्वाय प्रियजनसमवाय काङ्क्षणीयो भवति । मुनिवर प्रेक्षत समारमण्डलेऽस्मिन्नधुनाऽस्माकं सहयोगिनो भवितुं के नामार्हन्तीति । अशनाच्छादन लाभा लाभजमोदखेदैकनिरता ससारिण के वाऽस्य सहयोगमादधीरन् ? तादृशो न कोऽप्युपलेभे । अपयन्तु नाम ससारिणोऽमी, दिव्ये धाम्नि कैङ्कर्यनित्यनिरता भगवदेकभोगा अनुक्षणनवीनरसार्द्रभावास्सूरयस्सन्ति खलु, तैर्महानुभावैस्सह सयुज्य महान्तमिममानन्दमनुभुञ्जीयेति मनोरथानामनटान् प्रवाहानभिव्यञ्जयन्निद दशकमाविर्भावयति ॥

**(हिंदी) दूसरे शतक के तीसरे दशक की अवतारिका**—पिछले पहले दशक में आळ्वार ने अपनी सीमातीत विरहव्यथा का वर्णन किया, परतु उसकी दसवीं गाथा में आपने यह भी कहा कि भगवान ने मेरे पास पधार कर, और मुझसे मिलकर मेरा सताप मिटा दिया, अर्थात् उस दशक के अत में सश्लेप का प्रस्ताव किया गया । उसके बाद आपको सश्लेपजनित परमानद का वर्णन करना था, माने ऐसे आनद का प्रकाशक प्रकृत दशक गाना था । परतु उतने में प्रसगात् स्मरण मे आये हुए भगवान के परत्व का वर्णन किया गया । उसके समाप्त हो जाने पर, अब प्रकृत दशक म क्रम-प्राप्त आनद का वर्णन किया जा रहा है । यह तो लोक का स्वभाव है कि विशेष दुःख अथवा सुख का अनुभव करने के समय उसे दूसरो के सहयोग की अपेक्षा होती है । अकेला रहकर दुःख भोगने पर, वह दुःख कभी शात न होगा । उस समय कोई दूसरा जन अपनी समवेदना प्रकाशित करें तो उस आश्वासन से दुःख हलका प्रतीत होता है । अत एव किसी महाकवि ने कहा कि "दुःख हि नाम बहुषु सविभक्त सह्यवेदन भवति" अर्थात् चार व्यक्तियों मे बट जानेपर (माने चार व्यक्तियों से मिलकर भोगने पर) दुःख कम होता है । आळ्वार भी पिछले पहले दशक में स्वय विरहव्यथा भोगते हुए अपने सहयोगी होने की भावना से अनेक चराचर वस्तुओं से वार्ता करने के बाद कुछ शातचित्त हुए । एव आनदानुभव के समय भी दूसरों के सहयोग की आवश्यकता है । अन्यथा वह आनद भी हृदय में समा नहीं सकता, और परिपूर्ण भी नहीं हो सकता । अतिदुःख की भाति अत्यानद भी कदाचित् आत्मनाश का कारण बनेगा । इसलिए कि यह आपत्ति उत्पन्न न हो, दूसरो का सहयोग माँगा जाता है । तथाच हालमे आळ्वार को भी सीमातीत आनद भोगते भोगते दूसरों का सहयोग पाने की इच्छा हुई । परतु केवल अन्नवस्त्रादि क्षुद्रपदार्थों की खोज में ही अपना सारा समय वितानेवाले, और उनके लाभालाभ से ही सुखदुःखों का अनुभव करनेवाले ससारियों में कौन आळ्वार का सहयोगी हो सकता है ? कोई नहीं । तब आळ्वार की दृष्टि परमपद की ओर फिरी, जहा पर सर्वदा कैंकर्य करने मे ही निरत, भगवदनुभवजनित नये नये रस का ही अनुभव करनेवाले अनत, नित्य व मुक्त विराजमान हैं । उनके मानसिक दर्शन करते ही आळ्वार को यों लगा, कि "बहुत अच्छा हो यदि इस समय इनके दर्शन मिले, क्योंकि इनके साथ मिलकर मैं इस महान भगवदनुभव का आनद भोगूगा, ये ही मेरे लायक सहयोगी हैं।" तथाच आनदानुभव-पूर्वक नित्यसूरियो से मिलने की अपनी विलक्षण उत्कठा भी प्रकाशित करते हुए, अब आळ्वार यह दशक गाने लगते हैं ॥ .. *

(गाथा.) ऊनिल् वाळुयिरे! नल्लै पो उन्नोडु *
वानुळार् पेरुमान् मधुसूदनेन्नम्मान् *
तानुम् यानुमेल्लाम् तन्नुळ्ळे कलन्दोळिन्दोम् *
तेनुम्पालुम् नेय्युम् कन्नलुममुदुमोत्ते ॥ १ ॥

मांसले देहे विराजमान भो हृदय! त्वमतितरां कृतज्ञतानुसन्धानपात्रमसि हन्त!। तव सहयोगवशेनैव हि नित्यसूरिनाथो मधुसूदनो भगवान् अहं च मधु-दुग्धघृतपायसपीयूषाणां मिथस्समवायवत् समवेतौ स्व ॥

भगवान् सर्वेश्वरो हि प्रशंसनीयो मुनिवरस्य, विहाय तत्प्रशंसामधुना स्वहृदयं प्रशंसति मुनिः। * मन एव मनुष्याणां कारणं बन्धमोक्षयो * इत्युक्तरीत्या इयता कालेन बन्धहेतुभूतमासीद्यन्मनः, तदेव हि सम्प्रति बन्धविमोक्षहेतुरासीदित्यनुसन्धानम् एव प्रशंसने प्रेरकमभूदिति बोध्यम्। **मांसले देहे विराजमान भो हृदयेति** सन्तो मनस्य सन्ति नाम नेत्रोऽस्मिन् यत्, देहादतिरिक्तं किमप्यविज्ञाय स्थित भो हृदय! अनर्घ्यमुपकारस्त्वया कृतः। हेये कलेवरे स्थित्वाऽपि भगवद्गुणैकधारकभावेन विराजसे त्वम्, तव भाग्यं किं कथ-यामि? इति द्वादशमिप्रायो मुनिसत्तमो। एवं मनसः प्रशंसने निदानमुपपादयति गाथाशेषः। अनादिर्भगवान् चिरादेव चिरन्तनः, तद्वदनादयो वयमपि चिरादेव वर्तामहे, तेन सह सम्बन्धोऽप्यस्माकं चिरन्तनः, तस्य भगवतोऽस्मदुज्जिजीवयिषाऽपि नेदानीन्तनी। एवं सत्यपि भो हृदय! त्वदाभिमुख्यविरहादेव हि एतावता कालेन प्रच्युतिरभूत्, अद्य त्वदाभिमुख्यभूम्नैव हि अलभ्यलाभमहत्त्वना समजनि! इति तावदभिधीयते।

[मधुदुग्धघृतपायसपीयूषाणां मिथस्समवायवत्] इत्यत्र द्वेधा निर्वाहः—मधुनो मधुना सह संयोगे, दुग्धस्य दुग्धेन सह सम्मेलने, घृतस्य घृतेन सह समेदे, पायसस्य पायसेन सह समवाये, पीयूषस्य पीयूषेण सह संश्लेषे च या भवित्री भोग्यता, सा समभवत् भगवतो मम च संश्लेषे—इति प्राथमिको निर्वाहः। एकजातीयरसवत्पदार्थानां मिथस्समवायवदित्युक्तं भवति। अथ द्वैतीयीकस्तु निर्वाहः—मधुदुग्धादि रसवत्पदार्थ-पञ्चकग्रहणम् अशेषरसवत्पदार्थोपलक्षणं भूत्वा, भगवतो मुनिवरस्य च संश्लेषे सर्वरसोपलम्भो बभूवेति बोधयतीति। भगवान् हि * सर्वगन्धः सर्वरस इति श्रुत्यन्तेषु प्रतीतः। तेन सह संश्लेषे क्रियमाणेऽनुभवे न केवलं मधुररस-मात्रोपलम्भः, अपि तु षण्णामपि रसानामित्युक्तं भवति। षड्रसमिश्रान्नभोजनेन हि वयं तृप्यामः ॥ (१)

—* पहली गाथा—ऊनिल् वाळुयिरे नल्लै *—

(हिंदी) मांसमय शरीर में विराजमान हे मन! वाह, वाह! तुम्हारे सहयोग के कारण ही, नित्यसूरियों के नाथ व मधु के हंता भगवान और मैं मधु, दूध, घृत, पायस व अमृत की भांति ठीक ठीक मिल गये हैं॥

संश्लेष का आनंद भोगते हुए उसके दाता भगवान की प्रशंसा करना चाहनेवाले आळ्वार, अब अपने मन की प्रशंसा करते हुए यह दशक शुरू कर रहे हैं। "मन एव मनुष्याणां कारणं बन्धमोक्षयो"

अधस्तनगाथाया स्वात्मनो हृदयस्य श्लाघनमकारि । अथ किञ्चिद्विमृश्य मनसोऽपि प्रेरक परमपुरुष एव प्राधान्येन प्रशसनाय इत्याकलय्य त प्रशसति गाथयाऽनया मुनिवर । प्रकृतगाथाव्याख्यानक्रमे (एम्बारानामक) श्रीगोविन्दभट्टारक प्रवचनगोष्ठया प्रवृत्ता काचन चर्चा मुदाहरन्त्याचार्या । तस्य गुरुवरस्य गोष्ठयाम् अस्यात्मन प्रथमगुरु क इति विचारस्समभूत्, नानासदुपदेशै कृतशिक्षण आचार्य एव खल्विति केचिदूचु । अन्ये प्राहु —भागवतोत्तमसगमहेतुना खलु सदाचार्यपादपद्मसश्रयणलाभस्सजायते, अतश्च भागवता एव हि प्रथमगुरवो भवितुमर्हन्तीति । अन्ततस्सिद्धान्त एवमवतीर्ण —* धियो यो न प्रचोदयात् * इत्याम्नातरीत्या सर्वथा धीप्रचोदने भगवानेक एव हि प्रगल्भ , स यदि न प्रचोदयति धियम्, तर्हि भागवतोत्तमैरितरैर्वा किमङ्ग कर्तुं शक्य स्यात्? अत स्सर्वेश्वर एव प्रथमगुरुपद मधिष्ठातुमर्ह इति । एवविधनिर्णयस्य सैषा गाथा निदानमिति आचार्याणा हृदयम् । **निस्समाभ्यधिके**त्यनेन सम्बोधनेन * न तत्समश्चाभ्यधिकश्च दृश्यते * इति श्रुत्यर्थोऽनुसहितो भवति । निस्समाभ्यधिकमहोपकारवर्गकरणेनैव श्रुतिभिस्त्वमसमाभ्यधिकमाम्नातोसीदित्युक्त भवति । **अत्यद्भुतगुणसमृद्धे**ति सम्बोधनेन, त्वदीयानामाश्चर्यगुणाना मनुभवे मा मूर्धाभिषिक्त यदकार्षी तदेतदपि त्वत्कृतेपूपकारेष्वन्यतममित्युक्त भवति । **इतरसजातीयतयाऽवतीर्णे**ति सबोधनम्, मत्स्यकूर्मवराहनृसिंहराम-कृष्णादिरूपेण तत्तत्सजातीयतयाऽवतीर्य अपि अदिव्याद्भुतचेष्टितदर्शनमहत्त्व करणमपि मदुपकारार्थमेवेति कथ-नाभिप्रायकम् । तत्तादृशामवताराणामकरणे मम चास्मादृशा च ह न्त ! किमस्त्यनुभाव्यम्? मदनुभवार्थमेव हि त्व नानायोनिष्ववतार इत्युक्त भवति । **सकलपदार्थधारके**त्यनेन * अन्त प्रविष्ट शास्ता जनाना सर्वात्मा * इति श्रुत्यर्थोऽनुसहितो भवति । [**जननीवत्** इत्यादि ।] हे मातरित्याह्वाने कृते स्त्रीवाचा स्वयमेव दिशत्युत्तर भगवान्, 'अयि तात !' इत्याह्वाने कृते पुत्रवाचा स एव प्रत्युत्तरयतीति तत्त्वम् । प्रियप्रवर्तनेषु मातरमनुसरति, हितप्रवर्तनेषु पितरमनुसरतीति च । [अज्ञातार्थज्ञापनेनेत्यादि ।] * शरीरमेव मातापितरौ जनयत , स हि विद्यातस्त जनयति तत् श्रेष्ठ जन्म * गरीयान् ब्रह्मद पिता * इत्याद्युक्तरीत्या आध्यात्मिकज्ञानप्रदानाय आचार्यतयाऽवतरण कुर्वाणोऽपि भगवन् भवानेव । इत्थमुच्चावचमहोपकारकर्तरि त्वयि कथमह कृतज्ञताप्रकाशको भवितास्मीति न जाने । कृतज्ञताप्रकाशनपद्धतिष्वियमप्यन्यतमेति बोध्यम् । वस्तुत एव कथनादन्य प्रत्युपकार-प्रकारो नास्त्येव खलु भगवद्विषये॥ (२)

—* दूसरी गाथा—ओचामिकार्रै विलैयाय मामाया *—

**(हिंदी) हे समाधिकरहित ! अत्याश्चर्यमयदिव्यगुणयुत ! दूसरो के सजातीय होकर अवतार करनेवाले ! समस्त पदार्थों के धारक ! माता की भाति प्रिय करनेवाले ! पिता की भाति हित करनेवाले ! आचार्य की भाति अज्ञात अर्थों का उपदेश करनेवाले ! हे स्वामिन् ! म आपके किये हुए उपकारो को ठीक ठीक नाप कर नहीं जान सकता ॥**

पिछली गाथा मे अपने मनकी प्रशसा करने के बाद आल्वार को यों लगा कि मनकी भी योग्य प्रेरणा देनेवाले भगवान ही वास्तव में प्रशसा पाने योग्य हैं, अत वे अब उनकी प्रशसा करते हैं। इस गाथा की व्याख्या के आरभ में हमारे आचार्य 'एम्बार" शुभनाम से प्रसिद्ध श्रीगोविंदस्वामीजी के समय का एक ऐतिह्य लिखते हैं, जो इस प्रकार है—उनकी प्रवचनगोष्ठी में एक दिन यह प्रश्न उठा कि इस चेतन का

(माने, मानव के संसार अथवा मोक्ष पाने का कारण उसका मन ही है) इत्यादि शास्त्रोक्त प्रकार, क्षुद्रविषयों में व्यासक्त होकर, अभी तक संसार का हेतु रहा हुआ आळ्वार का मन, अब भगवान की ओर झुक कर संसार-मोक्ष का हेतु बन गया, न? इस कारण से उसकी प्रशंसा करना आवश्यक प्रतीत हुआ। **[ मांसमय शरीर में विराजमान हे मन ! ]** कहने के तात्पर्य अनेकविध हैं। ये दो तात्पर्य प्रधान हैं—(१) हे हृदय! तुम अभी तक देह के अतिरिक्त कोई तत्व नहीं जानता था; अभी तुमने भगवान को जान कर मुझ पर बहुत कृपा की। (२) हे मन! अतिहेय इस प्राकृत शरीर में रहते हुए ही तुम भगवद्गुणों को ही अपने धारक बन बैठे हो। ओह! तुम्हारा कैसा भाग्य है! गाथा के अवशिष्ट भाग में इस प्रशंसा का कारण बताया जाता है। भगवान अनादि, माने सर्वदा विराजमान हैं; एवं हम (माने चेतन) भी अनादि हैं। भगवान से हमारा संबंध भी अनादि है और अनादिकाल से ही वे भगवान हमारा उद्धार करने की राह देख रहे हैं। इतना होने पर अभीतक हमें सद्गति नहीं मिली। इसका कारण क्या है? यही कि हमारा मन भगवान का सम्मुख नहीं हुआ। अब उसके ठीक होने के कारण हमें यह भगवत्संश्लेषरूप अलभ्यलाभ मिल गया। अतः मन की प्रशंसा करनी पडी। **[ मधु, दूध, घृत, पायस व अमृत की भांति ]** कहने का अभिप्राय दो प्रकारका हो सकता है। (१) भगवान से मेरे मिलने से ऐसा विलक्षण रस उत्पन्न हुआ, जो कि मधु के मधु से, दूध के दूध से, घृत के घृत से, अर्थात् किसी भोग्यवस्तु के अपने समान दूसरे भोग्य पदार्थ से मिलने से होगा। यह भाव है—संसार में मधु, दूध, घृत इत्यादि भोग्य वस्तु अनेक हैं। इनमें एकके दूसरे से मिलने से यद्यपि साधारणतः भोग्यता बढेगी; तथापि कदाचित् रस बिगड जाने का भय भी रहता है। एक ही जाति के द्रव्य तो एक रस होकर ठीक ठीक मिल जाते हैं। इसी प्रकार भगवान और आळ्वार एकरस होकर मिल गये। (२) मधु, दूध इत्यादि पांचेक वस्तुओं के नाम लेना रसवान समस्त पदार्थों का संकेत है। तथाच, जैसे इन सब वस्तुओं को एक साथ मिलाने पर उस मिलाप में सभी प्रकार के रस उपलब्ध होते हैं, इसी प्रकार, आळ्वार के भगवान से मिलने से, सभी प्रकार के रस मिल गये, न केवल मधुर रसमात्र। यह तो सर्वथा उचित ही है; क्योंकि उपनिषदों में भगवान सर्वगंध व सर्वरस बतलाये गये हैं; अतः उनके मिलन से सभी रस अवश्य ही मिलेंगे। केवल एक रसके अनुभव से हम तृप्त नहीं होते, किंतु षड्रसपूर्ण भोजन से ही। अतः भगवान से मिलने पर भी समस्त रसों का अनुभव होना आवश्यक है॥ .... .... ... . (१)

(गाथा.) ओत्तार्मिकारै यिलैयाय मामाया *
ओत्तायेप्पोल्ट्कुयिराय् * एन्नैप्पेत्त
अत्तायाय् तन्दैयाय् अरीयादन अरिविच *
अत्ता! नी शेय्दन अडियेनरियेने ॥ २॥

निरसमाभ्यधिक! अत्यद्भुतगुणसमृद्ध भगवन्! इतरसजातीयतयाऽवतीर्ण! सकलपदार्थधारक! जननीवत् प्रियपर! जनकवत् हितपर! अज्ञातार्थज्ञापनेन आचार्य स्थानीय! स्वामिन्! भवता कृतानुपकारान् नाहं विशिष्य कथयितुं क्षमोऽस्मि॥

अधस्तनगाथाया स्वमनो हृदयस्य स्थापनमकारि । अथ किंचिद्विमृश्य मनसोऽपि प्रेरक परमपुरुष एव प्राधान्येन प्रशंसनाय इत्याकूतय्य त प्रशंसति गाथयाऽनया मुनिवर । प्रकृतगाथाव्याख्योपक्रमे (एम्बार्नामक) श्रीगोविन्दभट्टारक प्रवचनगोष्ठ्या प्रवृत्ता काचन चर्चा मुदाहरन्त्याचार्या । तस्य गुरुवरस्य गोष्ठ्याम् अस्यात्मन प्रथमगुरु क इति विचारस्समभूत्, नानामन्त्रोपदेशे कृतशिक्षण आचार्य एव भविता इति केचिदूचु । अन्ये प्राहु —भागवतोत्तमनयनप्रेक्षा यस्तु सदाचार्यपादपद्मनश्रयण शुभसंजायते, अतश्च भागवता एव हि प्रथमगुरवो भवितुमर्हन्तीति । अन्ततस्सिद्धान्त एवमवतीर्ण —* धियो यो न प्रचोदयात् * इत्याम्नातरीत्या सर्वेषा धीप्रचोदने भगवानेक एव हि प्रगल्भ , स यदि न प्रचोदयते धियम्, तर्हि भागवतोत्तमैरितरैर्वा किमङ्ग कर्तुं शक्य स्यात्' अत सर्वेश्वर एव प्रथमगुरुपद मधिष्ठातुमर्हं इति । एवविधनिर्णयस्य सैषा गाथा निदानमिति आचार्याणा हृदयम् । **निस्समाभ्यधिके**त्यनेन मनोधनेन * न तत्समश्चाभ्यधिकश्च दृश्यते * इति श्रुत्यर्थो-ऽनुमहितो भवति । निस्समाभ्यधिकमहोपकारवशीकरणेनैव श्रुतिभिरन्तमनमाभ्यधिकमाम्नातासीदित्युक्त भवति । **अत्यद्भुतगुणसम्पन्ने**ति मनोधनेन, नवीनानामाश्चर्यगुणाना मनुभवे मा मूर्खामिषिक्त यदकार्षी तदेतदपि त्वत्कृतेषूपकारेष्वन्यतममित्युक्त भवति । **इतरसजातीयतयाऽवतीर्णे**ति मनोधनम्, मत्स्यकूर्मवराहनृसिंहराम-कृष्णादेरूपेण तत्तत्सजातीयतयाऽवतीर्य अपि यदिव्यादद्भुतचेष्टितशतसहस्रकरणमपि मदुपकारार्थमेवेति कथ-नाभिप्रायकम् । तत्तादृशामवताराणामकरणे मम चास्मादृशा च हृत ! किमस्त्यनुभाव्य ?' मदनुभवार्थमेव हि त्व नानायोनिष्ववातर इत्युक्त भवति । **सकलपदार्थधारके**त्यनेन * अन्त प्रविष्ट शास्ता जनानां सर्वात्मा * इति श्रुत्यर्थोऽनुमहितो भवति । [**जननीवत्** इत्यादि ।] हे मातरित्याह्वाने कृते श्रीवाचा स्वयमेव दिशत्युत्तरं भगवान्, 'अयि तात !' इत्याह्वाने कृते पुत्रवाचा स एव प्रत्युत्तरयतीति तत्वम् । प्रियप्रवर्तनेषु मातरमनुसरति, हितप्रवर्तनेषु पितरमनुसरतीति च । [अज्ञानार्थज्ञापनेनेत्यादि ।] * शरीरमेव मातापितरौ जनयत , स हि विद्यातस्त जनयति तत् श्रेष्ठ जन्म * गरीयान् ब्रह्मद पिता * इत्याद्युक्तरीत्या आध्यात्मिकज्ञानप्रदानाय आचार्यतयाऽवतरण कुर्वाणोऽपि भगवन् भवानेव । इत्थमुच्चावचमहोपकारकर्तरि त्वयि कथमह कृतज्ञताप्रकाशको भवितास्मीति न जाने । कृतज्ञताप्रकाशनपद्धतिविषयमप्यन्यतमेति बोध्यम । वस्तुत एव कथनादन्य प्रत्युपकार-प्रकारो नास्त्येव खलु भगवद्विषये ॥

(२)

## —* दूसरी गाथा—ओत्तार्मिक्कारै पिलैयाय मामाया *—

(हिंदी) हे समाधिकरहित ! अत्याश्चर्यमयदिव्यगुणयुत ! दूसरो के सजातीय होकर अवतार करनेवाले ! समस्त पदार्थों के धारक ! माता की भाति प्रिय करनेवाले ! पिता की भाति हित करनेवाले ! आचार्य की भाति अज्ञात अर्थों का उपदेश करनेवाले ! हे स्वामिन् ! म आपके किये हुए उपकारो को ठीक ठीक नाप कर नहीं जान सकता ॥

पिछली गाथा में अपने मनकी प्रशसा करने के बाद आळ्वार को यो लगा कि मनकी भी योग्य प्रेरणा देनेवाले भगवान ही वास्तव में प्रशसा पाने योग्य हैं, अत वे अब उनकी प्रशसा करते हैं। इस गाथा की व्याख्या के आरभ में हमारे आचार्य "एम्बार" शुभनाम से प्रसिद्ध श्रीगोविंदस्वामीजी के समय का एक ऐतिह्य लिखते है, जो इस प्रकार है—उनकी प्रवचनगोष्ठी में एक दिन यह प्रश्न उठा कि इस चेतन का

प्रथमगुरु कौन है। किन्हींका मत हुआ कि हमारे प्रसिद्ध गुरुजी, जो सदुपदेश देकर हमें सुधारते, वे ही प्रथमगुरु हैं। दूसरों का अभिमत यह रहा कि उक्त गुरुजी के श्रीपादों से हमे मिला देनेवाले भागवत-जन ही गुरुजी के भी पहले उपकार करनेवाले प्रथमगुरु हो सकते हैं। कुछ समयतक ऐसी चर्चा चली, बाद में यह सिद्धांत किया गया कि, शास्त्र बताता है कि स्वयं भगवान ही समस्त जनों को सन्मार्ग में चलने की प्रेरणा करनेवाले हैं, जिस प्रेरणा के अभाव में हम न तो भागवतों की सुनेंगे, न वा गुरुजि के पादारविंद में अपने मस्तक झुकावेंगे, अतः भगवान ही प्रथमोपकारक तथा प्रथमगुरु हो सकते हैं। समझना चाहिए कि इस निर्णय का मुख्य आधार प्रकृत गाथा है। भगवान को [समाधिकरहित] कहने का यह तात्पर्य है—स्वयं वेदपुरुष उनके बारे में कहता हैं कि "न तत्समश्चाभ्यधिकश्च दृश्यते" (भगवान का सदृश अथवा उनसे अधिक कोई नहीं), इसका यह भाव आळ्वार का अभिमत है कि भगवान के बराबर अथवा उनसे अधिक उपकार, दूसरा कोई नहीं कर सकता। [अत्याश्चर्यमयदिव्यगुणयुत] कहने का यह भाव है कि, हे भगवन्! आपने मुझको अपने आश्चर्यमय कल्यणगुणों के अनुभव में जो मूर्धाभिषिक्त किया, यह आपके किये हुए अनंत उपकारों में अन्यतम है। [दूसरों के सजातीय होकर अवतार करनेवाले] कहने का यह भाव है कि मत्स्यकूर्मादिरूप में अवतार करते हुए आपने मुझ पर बहुत ही उपकार किया। अर्थात् ऐसे अवतार लेकर उनके एकैक में भी यदि आप अद्भुत अनेक लीलाएँ नहीं दिखाते, तो हमारे जसे भक्तजन दूसरे किसका अनुभव कर सकते? अतः हमारे अनुभव के लिए ही आपने अवतार किये। [समस्त पदार्थों के धारक] कहने से "अन्तः प्रविष्टश्शास्ता जनानां सर्वात्मा" इत्यादि श्रुति का अर्थविवरण किया जाता है। श्रुतिका यह अर्थ है कि भगवान सबके अतर्यामी होकर उनका शासन करते हैं। [माता की भांति] इत्यादि। यदि कोई चेतन 'हे माँ' पुकारता, तो भगवान ही स्त्रीवाणी से 'हाँ' कहते हैं, और यदि दूसरा कोई, 'हे बाप!' पुकारता, तो वे ही पुरुष की वाणी से 'हाँ' करते हैं। एवं भगवान माता की तरह प्रिय करते हुए ही पिता की तरह हित भी करते हैं। [आचार्य की भांति] इत्यादि। "शरीरमेव मातापितरौ जनयतः, स हि विद्यातस्तं जनयति तत् श्रेष्ठं जन्म" (अर्थात् मावाप केवल भौतिक शरीर का जन्म देते हैं, किंतु आचार्य विद्या से उसका (शिष्यका) श्रेष्ठ ज्ञानजन्म देता है।) "गरीयान् ब्रह्मदः पिता" (शरीर देनेवाले पिता की अपेक्षा ब्रह्मज्ञान के दाता आचार्य अधिक श्रेष्ठ हैं।) इत्याद्युक्तप्रकार भगवद्विषयक ज्ञान का उपदेश देने के लिए स्वयं भगवान ही इस धरातल पर आचार्यरूप में अवतार करते हैं। इस प्रकार नानाविध बड़े बड़े उपकार करनेवाले आपके (भगवान के) विषय में मैं कैसे अपनी कृतज्ञता का प्रकाशन करूं? मैं नहीं जान सकता। समझना चाहिए कि कृतज्ञताप्रकाशन का ही यह भी एक विलक्षण प्रकार है। वस्तुतस्तु भगवान के बारे में अपनी कृतज्ञता का हम यों कहते हुए ही प्रकाशित कर सकते हैं, कि प्रभो! आपके किये हुए अनंत उपकारों का मैं कैसे ख्याल तक कर सकूंगा॥ (२)

(गाथा) अरियाकालत्तुळ्ळे अडिमैक्कण्णुरुयेय्वित्तु *
अरिया मामायत्तडियेनै वैत्तायाल् *
अरियामैक्कुरळाय् निल मावलि मूवडियेन्नु *
अरियामै वञ्जिचाय् एनदावियुळ्निन्दे ॥ ३ ॥

कृत्रिमवर्ष्मणा वामनमूर्तिमुपादाय महाबलिसकाशमुपेत्य त्रिपदपरिमिता भूमिरपेक्षितेत्यभिधाय इतरदुरवगमप्रक्रियया विरचितविप्रलम्भ भगवन्! मदीयहृदयान्तः प्रविश्य, ज्ञानविप्लवहेतुभूतप्रकृतिमण्डलस्थं मां चैतन्यप्रसरतः प्रागेव त्वद्दास्यरुचिशालिनमकार्षीरहह ॥

अथास्तनगाथायां भगवत्कृतामुपकारपरम्परां मत्प्रतिमामनुसंहितवन्तं मुनिवरमुद्दिश्य 'भगो, मुनिमार्त्तण्ड! मया बहव उपकाराः कृता इति भवान् व्याहरति, अस्तु, तेष्वन्यतमं मुदाहर्तुं प्रभूयते वा?' इति पृष्टवति भगवति, स्वधिया अत्युत्तमत्वेनाभिमतं कश्चिदुपकारविशेषो गाथयाऽनया प्रस्तूयते। मदीयस्य पूर्वतनस्य वर्तमानपरिस्थितेश्च विवेचने किं नु भवान् न प्रभवति? अनन्तक्लेशभाजने घोरे संसारसागरे हि सुचिरान्निमग्न आसमहम्, ...न्तमपि नाज्ञासिषम्, भवद्दास्यरसज्ञानप्रसक्तिस्तु सुतरां नासीत्, विवेकक्षयनिदानभूते प्रकृतिमण्डले हि चिरादहमवस्थापितोऽभूवम्; एतादृशदुर्वचस्थितिभागी सोऽहमिदानीं कीदृशो वर्ते? किं त्वं न जानीषे? यथा हि सौमित्रिः * बाल्यात्प्रभृति सुस्निग्धः ... तथा खलु ममापि प्रथमजीजन। यथा च तस्य * भवांस्तु सह वैदेह्या गिरिसानुषु रंस्यते। अहं सर्वं करिष्यामि जाग्रतः स्वपतश्च ते ॥ * इति कैङ्कर्ये अप्रतिमरुचिं विरराम, तथैव खलु मम पि निरतिशयं कैङ्कर्यरुचिमुत्पादयथाः, पुरा महाबलिनामकं दैत्य यथाहि वञ्चयित्वा भूमण्डलमशेषमापक्रमिरे, तथैव खलु मामपि वञ्चयेतैव त्वदीयपादयुगलनिपतितमकार्षीः। किमस्ति भो इतोऽप्यतिशयित कश्चिदुपकारः? इति विज्ञापयति गाथयाऽनया।

अत्रेदमैतिह्यमनुसन्धेयम्। भगवद्यामुनाचार्याणां मन्त्रासिष्य यतमस्य * तिरुमालैयाण्डान्नाम्ना प्रथितस्य श्रीमाधवर नामिनस्सविधे भगवद्रामानुजार्यस्य सहस्रगीत्यर्थश्रवणमघटत। श्रवणावसरे कचित्क वेदरामानुजार्या 'अत्रैवमर्थो युज्यते' इति स्वस्यमर्थविशेषमभिदधीरन्। तदाकर्ण्य ते गुरुवरा कचित्प्रसीदेयु, कदाचन विकृतमनसोऽपि भवेयुः। यद्यपि रामानुजार्याणां भगवद्यामुनार्यैस्सह सम्भाषणमात्रमपि नाघटत, तथाऽपि "यत्पदाम्भोरुहध्यानविध्वस्ताशेषकल्मषः। वस्तुतामुपयातोऽहं यामुनेयं नमामि तम् ॥" इति स्वानुसंहितस्तुतिपद्यहार्दभावरीत्या श्रीयामुनार्यहृदयान्तर्गता एवार्था प्रस्फुरेयुः श्रीरामानुजार्यहृदि। * यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः ॥ * इत्यस्मिन्प्रमाणवचने (उत्तरार्धे) कथिता इति पदविभागवत् अकथिता इत्यपि पदविभाग आचार्यैराद्रियते। प्रक्रिया सेयं भगवद्रामानुजार्ये समन्विततेति च तदात्वे प्रथा समभवत्। अस्तु तत्। प्रकृतगाथायामाळवन्दार्यनिर्वाहस्तावदन्यथा। प्रायस्सर्वत्रापि स्थूलदृष्टिस्सूक्ष्मदृष्टिरिति दृष्टिद्वयमस्त खलु। आपातप्रतीतोऽर्थः स्थूलदृष्टिप्रतिपन्नोऽर्थ इति च पर्यायः। द्राविडमूलगाथासन्निवेशेऽत्रत्ये एव नाम स्थूलदृष्ट्याऽर्थः प्रतीयते, यथा—'अविकल्पतादशायामेव मम दास्यरुचिमुत्पाद्य हन्त! मा प्रकृतिगर्ते न्यपातय' इति। अयमर्थो भगवति अवद्यारोपणरूपो भवति। पूर्वोत्तरगाथासन्दर्भेषु प्रीतिप्रचुरेषु सत्सु मध्ये गाथाया अस्या एवमप्रीतिप्रकाशकस्यार्थस्य प्रतिपादने औचित्यं नास्तीति निरूपयन्तः श्रीरामानुजार्या अर्थमिमं नासहन्त। यमर्थं ते प्राहुस्स एवार्थोऽत्र विवृत इत्यलम् ॥

(३)

—* तीसरी गाथा—अरियाकालत्तुळ्ळे अडिमैक्कणन्नु शेय्विन्नु *—

(हिंदी.) कपट वामन वेष धर कर महाबलि के पास पधारकर, उससे तीन पग भूमि माँग कर, विलक्षण ढंग से उसे धोखा देनेवाले हे प्रभो! अत्याश्चर्य की बात है कि आपने मेरे हृदय के अदर प्रविष्ट हो कर, अज्ञान प्रद इस ससार में रहनेवाले मुझको, चैतन्य का प्रसार होने के पहले ही, अपने दास्य मे रुचिमान बना दिया॥

पिछली गाथा मे भगवान के किये हुए अनत उपकारों की परपरा का अनुसधान करनेवाले आळ्वार से भगवान ने कहा कि, "हे मुनिवर! आप कह रहे हैं कि मैने आपको बहुत उपकार किये, ठीक है, परतु ऐसे उपकारों मे से चुन कर किसी एकका कुछ विवरण कर दीजिएगा।" इसके प्रत्युत्तर में अब आळ्वार प्रकृत गाथा में भगवत्कृत उपकारों में श्रेष्ठ व विलक्षण एक महोपकार का वर्णन करते है— प्रभो! आप जरा-सा विचार कर देखिए कि मेरी प्राचीन अवस्था कैसी थी, और अबकी कैसी है। पहले तो मैं अनतक्लेशभाजन, घोर ससारसागर में मग्न रहा, जब कि मुझे नतो आपके विषयका किंचित भी ज्ञान था, नवा आपकी सेवा करने का रस जानने की शक्ति थी। इस प्रकार मै विवेकनाश के हेतु ससारमडल मे अनादि काल से रखा गया था। एसी दुरवस्थापन्न मै अब कैसा हो गया! क्या आप नहीं जानते? लक्ष्मणजी की भांति अब मैं "बाल्यात् प्रभृति सुस्निग्ध" माने शैशवावस्था से ही आपका स्नेही बन गया। और "भवास्तु सह वैदेह्या गिरिसानुषु रस्यते। अहं सर्वं करिष्यामि जाग्रत स्वपतश्च ते॥" आप सीतादेवी के साथ पर्वतप्रातो में विहार करें और मै आपकी शयनजागरादि सभी अवस्थाओं मे सर्वविध सेवा करू।) इत्यादियुक्त प्रकार नित्य सेवा माँगनेवाले उन्हीकी भाँति मैं भी निरतिशयनित्यकैंकर्य का इच्छुक बना। आपने जैसे महाबलि को धोखा देकर उससे तीनों लोक ले लिये, ठीक इसी प्रकार, मुझे भी धोखा देकर, कपट से अपने जाल म फँसा दिया न? क्या इससे भी बढकर महान दूसरा कोई उपकार हो सकता है? यह है इस गाथा में की जानेवाली आळ्वार की विनती।

इस गाथा के विषय मे यह ऐतिह्य समझने योग्य है। श्रीरामानुज स्वामीजी ने भगवद्यामुनाचार्य स्वामीजी के शिष्य, श्रीमालाधरस्वामीजी के मुखारविन्द से सहस्रगीति का अर्थ सुना। प्रवचन के समय श्रीरामानुज स्वामीजी तत्र तत्र किसी गाथा, अथवा गाथाखंड का दूसरा अर्थ बताकर विनती करते कि, "गुरुजी! यहा पर यह अर्थ ठीक लगता और रसवान भी होता है, मै मान रहा हू कि श्री यामुनाचार्य स्वामीजी का अभिमत भी यही अर्थ है।" यह सुन कर गुरुजी कभी प्रसन्न होते, कभी रुष्ट होते और कभी चुप रहते थे। मुख्यत इसमे यह विचारणीय था कि, जब कि श्री रामानुजस्वामीजी ने श्री यामुनाचार्य स्वामीजी से वार्तालाप तक नहीं किया, तब आप कैसे कह सकते कि अमुक अर्थ ही गुरुजी का अभिमत रहा। इसका समाधान इतना ही निकला कि निस्सीम गुरुभक्ति के प्रताप से श्री रामानुजस्वामीजी के मनमे श्रीयामुनाचार्य स्वामीजी के हृद्गत सभी अर्थ प्रकट होते थे, जिस विषय मे आपका रचा हुआ यह एक पद्य पर्याप्त प्रमाण है—"यत्पदाम्भोरुहध्यान विध्वस्ताशेषकल्मष। वस्तुतामुपयातोऽहं यामुनेय नमामि तम्॥"

(जिनके श्री चरणकमल के ध्यान से मैं अपने समस्तपापों से छूट कर एक वस्तु कहलाने योग्य बना, उन श्री यामुनाचार्यस्वामीजी को नमता हूं।) इसमें श्री स्वामीजी स्पष्ट बताते हैं कि गुरुजी के पादध्यान से ही अपने को सभी प्रकार के श्रेय मिल गये। महाभारत के एकलव्य की कथा इस विषय का सुंदर दृष्टांत होता है। उपनिषद् का भी वचन है—"यस्य देवे परा भक्तिः यथा देवे तथा गुरौ। तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः॥" (जिसकी, भगवान में और उसी प्रकार अपने गुरुजी में परिपूर्ण भक्ति हो, ऐसे शिष्य को उपदिष्ट सभी अर्थ स्पष्ट प्रकाशते हैं।) इस पद्यके उत्तरार्ध मे कथिता, अकथिताः इन दोनों प्रकार से पदविभाग किया जा सकता है। पहले प्रकार का अर्थ ऊपर बताया गया। दूसरे का यह अर्थ है कि आचार्य-भक्त को (गुरु के मन में रहनेवाले, परंतु) उनके द्वारा स्पष्टतया अनुपदिष्ट अर्थ भी प्रकाशते है। यह भाव है—कोई भी गुरु शिष्य को अपने हृद्गत समस्त अर्थों का नहीं, परंतु मार्गदर्शन के रूप मे कतिपय अर्थों का ही उपदेश कर सकते हैं। परंतु सच्चा गुरुभक्त, स्पष्टतया उपदिष्ट अर्थों के साथ अनुपदिष्ट अर्थों को भी समझ सकता है। आचार्यों का अभिप्राय है कि यह वार्ता श्री रामानुजस्वामीजी के विषय में अक्षरशः सत्य बनी। अर्थात् श्री स्वामीजी ने श्रीयामुनाचार्यस्वामीजी के द्वारा स्पष्ट उपदेश पाये बिना ही, अपनी गुरुभक्ति के प्रताप से उनके हृद्गत समस्त सदर्थों का ज्ञान प्राप्त किया। अस्तु। अब प्रकृत गाथा का विचार करेंगे। अनेकत्र किसी वाक्य को ऊपर से देखने पर एक अर्थ प्रतीत होगा, और उसीका सूक्ष्मविवेचन करने पर उससे भिन्न, रसभरित दूसरा ही कोई अर्थ निकलेगा। श्री मालाधर स्वामीजीने तो प्रकृत गाथा का यह स्थूल (माने ऊपरका) अर्थ बताया कि, "हे भगवन्! बहुत प्राचीन काल में जब कि मैं अचेतन वस्तु की भांति ज्ञानशून्य रहा, आपने मुझमें दास्यरुचि पैदा कर, परंतु हाय! मुझे संसारगर्त मे ही रख दिया।" ऊपर से देखने पर प्रकृत गाथा का यही अर्थ शब्दलभ्य प्रतीत होता है। इसका तात्पर्य तो भगवान पर दोषारोपण हुआ, कि "आपने मुझे दास्यरुचि दी तो सही; परंतु इससे क्या लाभ? मेरा उद्धार नहीं किया।" परंतु इस दशक की सभी गाथाएँ अत्यंत आनंद के साथ भगवान के विषय में कृतज्ञता आदि का प्रकाशन कर रही हैं, इनके बीच में उन पर दोष लगानेवाली गाथा कैसे लग सकती? यह तो प्रकरणविरुद्ध होगा। अतः सूक्ष्मविवेचनचतुर श्री रामानुज स्वामीजी ने इस गाथाका दूसरे प्रकार से अन्वय बता कर प्रकरणोचित सरस अर्थ बताया, जिसीको हमने लिखा है॥ .... (३)

(गाथा.) एनदावि युक्कलन्द् पेरुनल्लुदवि कैम्मारु *
एनदावि तन्दोळिन्देन् इनि मीळ्वदेन्वदुण्डे *
एनदावियाविदुम् नी पोळिलेल्लुमुण्डवेन्दाय् *
एनदावियार्यानार् तन्द नी कोण्डाकिनैये ॥ ४ ॥

सवर्तसमये सप्तलोकीनिगरणसमर्थ भो भगवन्! मदात्मान्तस्सश्लेषरूपो यः खलु महोपकारस्त्वया कृतः तत्प्रत्युपकारतया मदात्मा तुभ्यं समर्पितः; नैवात्र वैतथ्यगन्धोऽपि। (इति प्रथमतो विज्ञाप्य अथ विमृश्य अनुशयानो वदति मुनिवरः)

भगवन्! ममात्मनोऽप्यात्माऽसि, मदात्मा क? अहं च क? त्वया प्रत्तं वस्तु त्वमेव स्वीकृतवानसि ॥

अस्तनगाथात्रितये मुनिवरेण भगवत्कृता महोपकारा अन्वनुसहिता। उपकारं प्राप्तवता प्रत्युपचिकीर्षा ह्यवर्जनीया भवति। मातापित्रोस्सकाशादुपकारान् प्राप्तवत पुत्रस्य यथा हि प्रत्युपचिकीर्षा नोदेति, तथैव भगवत-स्सकाशादुपकारान् प्राप्तवतामपि प्रत्युपचिकीर्षोदयस्य नास्त्यवकाश, मातापितृसहस्रेभ्योऽप्यभ्यधिको हि भगवान्, सर्वस्वामिने तस्मै किमस्ति प्रत्युपकर्तव्यम्। सोऽपि प्रत्युपकारनिरपेक्ष सर्वथा पूर्णत्वात्, चेतनवर्गोऽपि प्रत्युपकर्तुमक्षम सर्वथा दरिद्रत्वात्। एतत्सर्वं सम्यगेवावगच्छन्नपि मुनिवरस्तत्र तच्चित्तस्सन् कमपि प्रत्युपकारमकृत्वा स्थातुमशक्त आत्मसमर्पणेन कथञ्चित्प्रत्युपकृतवन्तमात्मान मन्यते, सच एव वस्तुगत्या तदीयस्यैव वस्तुनस्तस्मै समर्पण नाम किमेतत्! इत्यवधानेन स्वात्मनोऽनुशय प्रकाशयन् वस्तुस्थितिं च विज्ञापयति। इमामेका गाथा भगवान् यामुनार्य स्वकीये स्तोत्ररत्ने श्लोकद्वितयेन विवर्णयामास—श्लो 'वपुरादिषु योऽपि कोऽपि वा गुणतोऽसानि यथातथाविध। तदयं तव पादपद्मयोरहमद्यैव मया समर्पित ॥ मम नाथ! यदस्ति योऽस्म्यहं सकलं तद्धि तवैव माधव! नियतस्वमिति प्रबुद्धधीरथवा किं नु समर्पयामि ते ॥" इति। एतयो पद्ययोरर्थे यथायथमवगते सेयमपि गाथा अवगतार्था भवतीत्यलम्। विषयेऽस्मिन् पूर्वाचार्यैर्निर्धारित शास्त्रार्थस्त्वियान्, वस्तुस्थित्या भगवदेकस्वामिकस्य स्वात्मनस्तस्मै समर्पणमित्येतदर्थशून्यमेव, ब्रह्मोद्देशेऽपि पित्रे पुत्रेण सत्कार कर्तव्य इति शास्त्रपद्धति, तदानीं पुत्रस्य किमस्ति स्वकीय वस्तु? नैव किमपि। तथाऽपि पित्र्य वस्त्वेव किमपि तस्मै समर्प्यते। तद्वत् भगवतो वस्त्वेव भगवते समर्पणीय भवति, समर्पणसमनन्तरम् अनुशयोऽपि प्रकाशनीयो भवति। तथाच समर्पणमनुशयश्चेत्युभयमपि शास्त्रार्थ एवेति। उपात्तभगवद्यामुनार्यदिव्यसूक्तौ "प्रबुद्धधीरथवा किं नु समर्पयामि ते" इति तावदस्ति, समर्पणावसरे अप्रबुद्ध आसीदिति न तदर्थ, एव कथनप्रक्रिया अवर्जनीयेति विभाव्यम् ॥ (४)

—* चौथी गाथा—एनदावियुळ्कलन्द् पेरुनल्लुदविक्कैमारु *—

**(हिंदी) (प्रलय के समय) सातों लोक निगलनेवाले हे भगवन्! आपने मेरी आत्मा के साथ मिलकर मेरा जो उपकार किया, इसके बदले में मैं आपको उस आत्मा का अर्पण कर दिया; यह बात पलटने की नहीं। (यह विनती करने के बाद थोड़ा सोच कर आळ्वार फिर कहते हैं कि) हे प्रभो! आप तो मेरी आत्मा के भी अंतरात्मा ठहरे। फिर मेरी आत्मा कौन है? मैं कौन हूं? अपनी दी हुई वस्तु आपने ही ले ली ॥**

पिछली तीन गाथाओं में आळ्वार ने अपने प्रति भगवत्कृत अनंत उपकारों का स्मरण किया। किसीसे उपकार पाने पर प्रत्युपकार करने की इच्छा होना स्वाभाविक है, अतः आळ्वार को भी ऐसी इच्छा हुई। यद्यपि साधारणतया भगवान से उपकार पानेवालों को उसका प्रत्युपकार करने की इच्छा नहीं होती, जैसे कि मांबापों से उपकार पानेवाले पुत्र को प्रत्युपकार करने की इच्छा नहीं होती। भगवान तो मांबापों से भी हजारगुण अधिक वत्सल होते हैं। और सर्वस्वामी, व सर्वथा परिपूर्ण उनके विषय में क्या कोई भी कभी कोई प्रत्युपकार कर सकेगा? नहीं। वस्तुतः ने हमारे प्रत्युपकार का ख्याल किये बिना ही हम पर कृपा करनेवाले

हैं। सर्वथा दरिद्र हम भी उन्हें कुछ देकर प्रत्युपकार नहीं कर सकते। आळ्वार तो ज्ञानी होने से ठीक ठीक ये सभी विचार जानते हैं। तथापि वे अब अत्यन्त नम्रता-युत और कुछ-न कुछ प्रत्युपकार किये बिना रहने में अशक्त होकर, अपने पास दूसरी किसी वस्तु के अभाव से, अपनी आत्मा को ही भगवदर्पण कर कथंचित् कृतार्थ होना चाहते हैं, और उसके बाद यों विचार कर कि, "यह आत्मवस्तु भी वस्तुत. भगवान की ही संपत्ति है; फिर मैं इसे कैसे उनको अर्पण करूं?" उक्त आत्मसमर्पण के लिए पछताते हैं। श्रीयामुनाचार्य स्वामीजी ने अपने स्तोत्ररत्न में इन दो पद्यों से प्रस्तुत गाथा का अनुवाद किया—(१) वपुरादिषु योऽपि कोऽपि वा, और (२) मम नाथ यदस्ति योऽस्म्यहम्, इत्यादि। इन पद्यों का यह भाव है—(१) हे प्रभो! मेरी आत्मा (यह जीव), शरीर, इंद्रिय, बुद्धि आदियों में से चाहे जो हो, एवं इसका गुण भी नित्यत्व, अनित्यत्व ज्ञानत्व इत्यादि चाहे जो हो, अर्थात् आत्मा के स्वरूप स्वभावादियों के विषय में तत्तन्मतवाले जो नाना प्रकार के वादविवाद करते हैं, उनमें मैं अब फसना नहीं चाहता। यह विचार, जैसा भी हो। परंतु यह एक ही बात मुख्य है कि मैं अभी इसको आपके चरणकमलों में अर्पण कर देता हूं॥ (२) हे मेरे नाथ! मैंने बड़ी भूल की। अभी मैंने इस बात का ख्याल किया कि मैं और मेरी जो कुछ हो, ये सभी वास्तव में आपकी ही संपत्ति है। यह जानने पर, अब मैं आपको किसका अर्पण करूं? प्रकृत गाथा, तथा इन पद्यों में सत्संप्रदायसिद्ध एक महान शास्त्रार्थ का वर्णन किया गया है, जो साधारण लोगों के गले में नहीं उतर सकता। वदिकगोष्ठी में आत्मसमर्पणशब्द कभी कभी सुना जाता है, जिसका अर्थ है भगवत्सन्निधि में इस जीव का आत्मार्पण करना। परंतु भगवान स्वतः समस्त चेतनाचेतनों के मालिक हैं और ये सभी वस्तुएं उनकी स्वाभाविक संपत्ति ही ठहरी। फिर इसमें समर्पण कैसे किया जाय? तथापि समर्पण करना आवश्यक भी होता है। क्योंकि अनादि काल से अज्ञान में पड़ा हुआ यह संसारी चेतन अभी तक अपने को स्वतंत्र अथवा देवतान्तरशेष मान बैठा था, अब, जब कि इसे अपने स्वरूप का ख्याल हुआ, इसे अपने आत्मापहाररूप पाप का प्रायश्चित्त होने की भावना से आत्मसमर्पण करना पड़ता है। फिर इस क्रिया में इसको कुछ गर्व करने का प्रसंग होगा कि, "ओह! मैंने अपने को ही अर्पण करते हुए कैसा बड़ा काम किया!" इस गर्व के निरासार्थ आचार्य बताते हैं कि भगवान की संपत्ति इस आत्मा का 'अर्पण' करने की भावना रखना ही अपराध है, फिर अर्पण क्रिया के बारे में क्या कहूं? अतः इस अपराध के लिए पछताना और क्षमा मांगना आवश्यक है। अर्थात्, जैसे ब्रह्मोपदेश के समय शिष्य अपने पिता को कुछ दक्षिणा देता है, परंतु उस समय सात एक वर्षवाले उस बालक के पास कुछ भी धन आदि नहीं रहता, अतः वह पिता की ही कुछ लेकर उसीको 'गुरुदक्षिणा' बनाता है, इसी प्रकार हमें भी ज्ञानोदय होने के बाद भगवान की ही संपत्ति इस आत्मवस्तु का उन्हीं के श्री चरणों में अर्पण कर देना, और फिर इसमें किसी प्रकार के गर्व का अवकाश न देते हुए, उलटे पश्चात्तापपूर्वक यह विनती करनी चाहिए कि, "प्रभो! यह तो आपकी ही संपत्ति है, जो मेरी हुई हो उसका अर्पण हो सकती है। जो आपकी ही है उसका मैं कैसे अर्पण करूं? अतः मेरी इस धृष्टता की क्षमा कीजिए।" अत एव श्री यामुनाचार्य स्वामीजी ने उक्त दूसरे पद्य में कहा कि "प्रबुद्धधी"—माने यह विवेक पाकर। इसका यह तात्पर्य नहीं कि पूर्व में आप अप्रबुद्ध माने अविवेकी थे, परंतु एक अभिप्राय से पहले आत्मसमर्पण किया

गया, अब दूसरे प्रकार देखने में वही अपराध दीख रहा है। अत दोनो अवश्य कर्तव्य हैं, एक भी छोडा नहीं जा सकता ॥ .... . .... (४)

(गाथा.) इनियार् ज्ञानङ्गळाल् एडुक्कलेळादवेन्दाय्! *
कनियार्नीङ्गिन्चमे! एनुकडल्पडा वमुदे! *
तनियेन् वाव्मुदले! पोळ्ळिलेळुमेनमोन्नाय् *
नुनियार् कोट्टिल्वैचाय् उनपादम् शेर्न्देने ॥ ५ ॥

विलक्षणप्रज्ञानिधीनामपि प्रज्ञाविलसितैः परिच्छेत्तुमशक्य! प्रभो! परिपक्वहृदयानां सताम् मोक्षानन्दपर्यायभूत! लवणार्णवोद्भवामृतव्यावृत्तमदीयदिव्यामृत! अद्वितीयभक्तस्य मम मूलसुकृतभूत! दिव्यवराहमूर्त्याऽवतीर्य स्वदंष्ट्राग्रे सप्तलोकीमपि समुद्धृत्य निवेशितवन्! भगवन्! तव पादद्वन्द्वेऽहं व्यासक्तोऽस्मि ॥

प्रलयार्णवमग्ना पृथिवीं यथा भगवन्! समुद्धृतवानसि, तथैव ससारार्णवमग्नं मामपि स्वकीयनिर्हेतुककरुणया समुद्धृतवतस्तव पादयोरहमविनाभूतोऽस्मि इति सानन्दमभिदधाति गाथयाऽनया मुनिवर। यद्यप्यत्र स्वस्य ससारपारावारात्समुद्धरणं कण्ठतो नोक्तम्, तथाऽपि पृथिव्या प्रलयाकूपारात्समुद्धरणकथनमिदमेव प्रत्याययतीति प्रतिपत्तव्यम्। दृष्टान्तकथनं दार्ष्टान्तिके विश्राम्यतीति यावत्। **विलक्षणप्रज्ञानिधीनामपि परिच्छेत्तुमशक्य!** इत्येतत्संबोधनम् श्रीकूरनाथगुरुवरा * योगिनामपि सुदूरगा धिय * इत्यन्वशादिषु। भगवान् इदमित्थत्वेन परिच्छेद तदनुगृहीतदिव्यचक्षुष्मतामेव सुशक, न तु स्वयत्नपराणामिति भाव। "भक्त्या त्वनन्यया शक्य अहमेवंविधोऽर्जुन!" इति गीतावचनमत्रानुसन्धेयम्। सा च भक्तिस्तत्प्रसादेनैवोपबृंहिता भवितुमर्हति न तु स्वयत्नत ॥ **[परिपक्वहृदयानां सतां मोक्षानन्दपर्यायभूत!]** एतन्मूलभूता द्राविडी सूक्ति त्रेधाऽर्थनिर्वाहं सहते, ये तावत् प्रेमार्द्रहृदया. परमभक्ता तेषां मोक्षसुखानतिरिक्तो भवति भगवानिति प्रथमो निर्वाह। नन्दगोपादीनां वल्लवानां गृहेष्विव तेषां गृहेष्वपि प्रादुर्भूय विहृत्य तान् आनन्दयितुं क्षम इति द्वितीयो निर्वाह। तेषां गृहेषु अर्चाविग्रहमधिष्ठाय तान् अनारतमानन्दयितुं समर्थ इति तृतीयो निर्वाह।

[लवणार्णवेत्यादि] तत्रतत्र भगवानमृतत्वेन प्रोच्यते। लवणार्णवादुद्भूतं यदस्त्यमृतं प्रसिद्धम्, तत्तुल्यभोग्यता नास्मिन्नमृते, तदमृतं लवणरस एव खलु, तस्य भोक्तार अमरास्सुर्नाम, तदमृतं दिव्यसूरीणां धिया विषमेव। कालनियमं मधिकारिनियमं वा वर्जयित्वा रसिकानां परमभक्तानां सदा सेव्यममृतं भगवानेक एव। तदेतदनेन संबोधनेन प्रकाश्यते। **[अद्वितीयभक्तस्य मम मूलसुकृतभूत!]** पुरुषार्थविशेषाणां लाभस्तावदनुष्ठितसुकृतविशेषाणामेव भवितुमर्हति नेतरेषाम्। भगवल्लाभं प्रति तु नैकमपि सुकृतं साधनं भवति, * न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशु * नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन। यमेवैष वृणुते तेन लभ्य * इत्याद्याम्नातरीत्या तेनैव भगवता स प्राप्यो भवति। ततश्च स एव मूलसुकृतमिति व्यपदिश्यते। अत एवोक्तं वेदान्ताचार्यै रहस्यत्रयसारे—"उपाय स्वप्राप्तेरुपनिषदधीतस्स भगवान् प्रसत्यै तस्योक्ते प्रपदननिदिध्यासनगती। तदारोह. पुसा सुकृतपरिपाकेन महता निदानं तत्रापि स्वयमखिलनिर्माणनिपुण ॥" (५)

—※ पांचवी गाथा—इनियार् ज्ञानङ्गळाल् ※—

**(हिंदी.) कैसे भी समर्थ ज्ञानियों के नापकर समझने में अशक्य रहनेवाले हे मेरे प्रभो! हे परिपक्व भक्तिवालों के लिए मोक्षानंदस्वरूपिन्! हे लवणसागर से निकले हुए अमृत से विलक्षण मेरे अमृत-स्वरूपिन्! हे मुझ अद्वितीय भक्त के सुकृतस्वरूपिन्! हे अपनी दंष्ट्रा से सातों लोकों को उठानेवाले दिव्यवराहस्वरूपिन्! हे भगवन्! मैं अबसे आपके पादारविंदों को प्राप्त हो गया॥**

इस गाथा में आळ्वार विशेष आनंद के साथ कहते हैं कि "हे प्रभो! आपने जैसे प्रलयसागर में मग्न पृथिवी का उद्धार किया, इसी प्रकार संसारसागर-मग्न मेरा भी उद्धार किया; अब मैं आपके श्रीपादों का तन्मय हो गया।" यद्यपि मूलगाथा में आळ्वार का उद्धार करने की स्पष्ट बात नहीं मिलती; तथापि भूमि के उद्धारण की प्रशंसा करनेवाले आळ्वार, व्यंग्यमर्यादा से अपने उद्धार की ही ओर संकेत करते हैं। क्वचित् दृष्टांतमात्र का स्पष्ट शब्द कहकर, उससे दार्ष्टांतिक की सूचना करना कविसमयसिद्ध है। [**कैसे भी समर्थ ज्ञानियों के नापकर समझने में अशक्य**] इस वाक्य का अनुवाद श्रीकूरेशस्वामीजी से किया गया—" योगिनामपि सुदूरग धियः" (वरदराजस्तव-३)। इसका यह अर्थ है कि भगवान योगियों की बुद्धि के भी अगोचर हैं; माने बड़े बड़े योगि भी भगवान को "ऐसे हैं; इतने हैं" इत्यादि रूप से नाप तोलकर समझ नहीं सकते; अर्थात् भगवान अप्रमेय है। परंतु ऐसे आपको उनके विशेष अनुग्रह से दिव्यचक्षु पानेवाले परम भक्त ठीक ठीक जान सकते है। बात इतनी ही है कि केवल स्वप्रयत्न पर भरोसा रखनेवाले इस काम में विफल होते हैं। अत एव स्वयं भगवान ने गीताजी में गाया, "नाहं वेदैर्न तपसा ...भक्त्या त्वनन्यया शक्यः" इत्यादि। यह भक्ति भी भगवान की ही देन होगी, न तु भक्त की कमायी हुई। [**परिपक्वभक्तिवालों के लिए मोक्षानंदस्वरूपिन्!**] मूलगाथा के इस खंड के तीन प्रकार के अर्थ हो सकते हैं। तत्रत्य 'वीट्टिन्बम्' में दो शब्द है—वीडु व इन्बम्। वीडु का अर्थ है गृह अथवा परमपद, और इन्बम् का, आनंद। इन दोनों शब्दों के मिलाने से ये अर्थ निकल सकते हैं— (१) परिपक्वभक्तिवाले महात्माओं के लिए भगवान परमपद माने मोक्षानंद-स्वरूप होते हैं; अर्थात् भगवान ही मोक्षानद हैं। यह तो सर्वथा ठीक ही है। (२) नंदगोपादियों की भांति दूसरे परमभक्तों के भी गृह में भगवान अवतीर्ण होकर उन्हे आनंद का प्रदान करते हैं। (३) वीट्टिन्बम् शब्द अर्चावतार का संकेत है; तथाच यह तात्पर्य हुआ कि भगवान अर्चारूपी होकर अपने परम भक्तों को आनंदित करते हैं। [**लवणसागर**] इत्यादि। भक्तजन भगवान को तत्रतत्र अमृत कहते हैं। इसका यह अर्थ नहीं कि भगवान सागर से उत्पन्न अमृत के सदृश परमभोग्य हैं। दिव्यसूरियों के अभिप्राय से देवभोग्य वह वस्तु क्षार-रस मात्र होने से कथंचिदपि भगवान के सदृश न हो सकती; उलटी विष ही है। काल व अधिकारिनियम के बिना विलक्षण रसिक परमभक्तों के अनुभव करने योग्य अमृत तो साक्षात् भगवान ही हैं। इस अर्थ का सूचक है यह संबोधन। [**हे मुझ अद्वितीय भक्त के सुकृतस्वरूपिन्!**] यह भाव है—शास्त्रोक्त यज्ञदान उपासन इत्यादि सत्कर्मों के अनुष्ठान से मिलनेवाला पुण्य सुकृत कहा जाता है, जो ही धर्मार्थकाममोक्षरूप पुरुषार्थों का कारण बनता है; अर्थात् सुकृत के अभाव में किसीको पुरुषार्थ

प्रभुणिना स्थिता, उपाधिक्षेपेण उद्भूता बभूवेत्येनादरो मा भूत् । एवं * अपराध्यमस्य हि मम त्वरप्रभक तद्योर-पत्रयमहं कितव चरत प्राक् * इति श्रीकूरनाथगुरुकरोत्या नैमित्तिकदास्यप्रभावशाली * मणिवर इव शौरेः * इत्युक्तदिशा भगवतः कौस्तुभनिर्विशेषोऽयं जीवात्मा नाम मणिः संसारकर्दमे निमज्जिततनो चिरतनम्सरतो देवाद्वीत-कर्दमसंगो भवति चेत् स्वाभाविकयैव खलु तेजःप्रभया विद्योतते । न खलु सा आगन्तुकी मन्तव्या । चिरं विस्मृत-निजदास्येन मना जीवात्मना यदा तत्संस्मृतिः क्रियते, तदा किं वक्तव्यं भवति ? 'चिरादेवाहं त्वत्पादपद्मदासः' इति खलु वक्तव्यं भवति । तदेवात्रोच्यते [भवन्तमहं नेदानीमेव प्रपन्नः, अपि तु सुचिरादेव] इति ।

इदमत्र विशिष्य वेदितव्यम्; अचित्संबन्धः अयनसंबन्धः इति संबन्धद्वितयमस्ति तावदस्माकम् । अचित्संबन्धो नाम प्रकृतिसंबन्धः; अयनसंबन्धो नाम नारायणसंबन्धः । इमावुभावप्यनादी कथ्येते । वस्तुतः अयन-संबन्ध एक एव अनादिरनन्तश्च । अचित्संबन्धस्तु सादिः सान्तश्च । तथाऽपि प्रकृतिसंबन्धोऽयमस्माकं कदा घटित इति उपक्रमकालस्य दुरवबोधत्वात् अयमपि भगवत्संबन्धवदनादि रभिधीयते । काऽविशेषे * तदा विद्वान् पुण्य-पापे विधूय निरञ्जनः परमं साम्यमुपैति * इत्याम्नानात् सान्त एवायमिति निर्विवादम् । तथा च "भवन्तमहं सुचिरादेव प्रपन्न" इति यदुक्तम्, तत्सर्वथा स्थाने, अनेन भगवत्संबन्ध अनादिरिति ज्ञापितं भवतीत्यलम् ॥

अत्र भक्तानां दृढाध्यवसाय प्रदातारमित्यत्र कश्चिदितिहासमुदाहरन्त्याचार्याः —विष्णुभक्ताग्रेसरोऽम्ब-रीषश्चक्रवर्ती घोरं तपस्तेपे; तदानीं विष्णुरिन्द्रवेषधारी सन् ऐरावतमारुह्य तत्सन्निहितो भूत्वा 'अभिमतं वरं वृणीष्व महात्मन्!' इत्यभिदधे; तदा चक्रवर्ती * नाहमाराधयामि त्वां तव बद्धोऽयमञ्जलि. इत्याचक्षाणो निज दृढीयांसमध्यवसायमाविश्चकार । एवंविधाध्यवसायप्रदाता स एव भगवानित्युक्तं भवति । शूर्पणखाया अङ्गभङ्गप्रणेता यद्यपि सौमित्रिरेव, तथाऽपि तस्य भगवत्कृतत्वेन व्यपदेशो दिव्यप्रबन्धेषु तत्र तत्र दृश्यमान. प्रयोजककर्तृत्वाभि-प्रायकः । प्रयोज्यकर्ता खलु सौमित्रिः ॥ ... .... (६)

## —* छठी गाथा—शेन्दार् तीविनैहट्टु अरुनञ्जै *—

(हिंदी.) भक्तों के अतिक्रूर पाप मिटाने वाले विषस्वरूपी, उन्हें सुदृढ अध्यवसाय देनेवाले, अनन्यार्हशेषभूत परमैकान्तियों के क्षणमात्र के विरह का भी सहन नहीं करते हुए सर्वदा उनके हृदय में ही विराजमान, उनके प्राणभूत (माने धारक), उन्हें क्षुद्र सांसारिक विषयों से विमुख बनानेवाले ज्योतिस्वरूप, और शूर्पणखा का नाक काट डालने वाले आपको मैं ने (आज नहीं, किंतु) अनादिकाल से ही प्राप्त किया ॥

इस गाथा मे आळ्वार यह दावा कर रहे हैं कि अपना भगवत्पादारविंदसंग, आज का नहीं, परंतु अनादिकाल से ही बना हुआ है । यह बात कुछ विचित्र-सी मालूम पडेगी; क्योंकि अन्यत्र आळ्वार ही वार वार कहते हैं कि अनंत पापाक्रांत होकर अनादि काल से ही संसारसागर मे डूबे हुए मैंने अभी भगवत्कृपा से उनके पादारविंद प्राप्त किये । इस विषय का गाढ विवेचन कर हमारे आचार्यों ने बडा सुंदर सिद्धांत किया है। तथाहि—मान लीजिए कि एक हीरा बहुत काल में कीचड में पडा था । परंतु भाग्यवशात् वह एक दिन किसीकी नजर में पडा । पंकमग्न होने से मिट्टी की ही भांति पडे रहे हुए उसे उस भाग्यवान ने

पहचान लिया, और पानी से ठीक धुलवा दिया। तब वह रत्न विलक्षण प्रभा से बहुत चमकने लगा। अब यह विचार करने का है कि रत्न की यह प्रभा किधर से आयी। बुद्धिमानों का सिद्धांत है कि प्रभा तो सदा रत्न की ही संपत्ति है। परन्तु रत्न के पंकमग्न होने पर वह बंद रही, जैसे मेघ से ढाके जाने पर सूर्य की प्रभा बंद रहेगी। पंक निकालने के बाद रत्न की स्वाभाविक प्रभा फिर प्रकट होने लगी। आत्माके बारे में भी यही दृष्टांत लगाने का है। आत्मा ही रत्न है, उसका धर्म भगवद्दास्य उसकी प्रभा है और संसार कीचड है। शास्त्र पुकारता है कि यह चेतन कौस्तुभरत्न के सदृश भगवान की अनमोल संपत्ति है। अतः इसे रत्न मानना बड़ा उचित ही है। श्रीकूरेशस्वामीजी के "त्वद्दास्यमस्य हि मम स्वरसप्रसक्तम्" (प्रभो! आपका दास रहना यह मेरा जन्मसिद्ध स्वभाव है) इत्यादि वचन के अनुसार, भगवद्दास्य इसका स्वाभाविक धर्म है। संसारपंकमग्न होने के कारण यह चेतन अपना यह प्रकाश खोकर, माने भगवद्दास्य से निवृत्त होकर स्वतंत्र अथवा दूसरों का दास रह गया। संसारमल के मिट जाने पर यह पुनः अपना स्वाभाविक भगवद्दास्य पाता है। तथा च बहुत समय के बाद मिलने पर भी यह भगवद्दास्य स्वाभाविक कहा जाने योग्य है, नतु आगंतुक। ऐसा चेतन भगवत्सन्निधि में कौनसी विनती करेगा? यही कि, "प्रभो! मैं पहले से ही श्रीचरणों का दास हूं।" तथाच आळ्वार ने यह ठीक ही कहा।

यहां पर यह दूसरा एक संप्रदायार्थ समझने योग्य है—तत्त्वत्रयों के बीच में चेतन का, एक ओर अचेतन से और दूसरी ओर ईश्वर से (माने भगवान से) संबंध रहता है, संप्रदाय में इन्हें अचित्संबंध और अयनसंबंध कहते हैं। अयन माने नारायण। ये दोनों अनादि माने जाते हैं। परन्तु दोनों में इतना अंतर है कि एक समय अचित्संबंध मिट जायगा, (जब यह चेतन मोक्ष पायगा), किंतु अयनसंबंध कभी छूटेगा नहीं। सूक्ष्म विचार करनेवाले हमारे आचार्य बताते हैं कि अयनसंबंध ही, नित्य होने के कारण, अनादि है, अचित्संबंध तो आगंतुक ही है। परन्तु हम यह नहीं बता सकते कि यह (अचित्संबंध) कैसे, कब उत्पन्न हुआ, अर्थात् इसके आदिका पता नहीं लगता। अतः इसे भी शास्त्र अनादि ही कह डालते हैं। कैसे भी हो। यह बात तो निश्चित हुई कि अचित्संबंध के पहले से ही अयनसंबंध रहा करता है। अतः प्रकृत गाथा में आळ्वार ने ठीक कहा कि "मैं आपके श्रीचरणों का अनादि दास हूं।" [सुदृढ अध्यवसाय देनेवाले] भगवान के प्रति किसीका दृढाध्यवसाय करना भी उनका ही कृपाधीन है। अध्यवसाय की दृढता के दृष्टांततया श्रीविष्णुधर्मोक्त यह उपाख्यान बताया गया है। अंबरीष महाराजा भगवान को लक्ष्य कर तपस्या करता था। उसके परीक्षणार्थ स्वयं भगवान ही ऐरावतवाहन महेंद्र के वेष से उसके सामने प्रकट होकर बोले कि, 'हे राजन्! तुम्हारी तपस्या से प्रसन्न होकर तुम्हें वर देने को आया हूं, अपना इष्ट मांग लो।" अंबरीष ने कहा कि, "हे देव! आपको धन्यवाद पुरस्सर नमस्कार हो। आपसे मेरा कोई काम नहीं है, मैंने आपका ध्यान नहीं किया। अतः शीघ्र यहां से स्वस्थान लौटने की कृपा कीजिए।" फिर देव ने धमकी देते हुए कहा कि, "राजन्! तुम्हारी बात सत्य है, परंतु मैं भी त्रिलोकवंद्य श्रेष्ठ देव हूं, और तुम जो मांगोगे सो दे भी सकता हूं। मेरेसे अपना अभीष्ट मांगने से तुम्हें क्या बिगडेगा? तुम अपने देव से जो मांगना चाह रहे हो, उसे मुझसे ही ले लो। मैं अपनी इच्छा से तुम्हें जो दूंगा, उसका स्वीकार करने से तुम्हें दोष नहीं लग सकता। और यह भी समझ लो कि इतने समझाने पर भी यदि तुम मेरा तिरस्कार ही करोगे, तो फिर तुम्हें मेरे

वज्रायुध का स्वाद लेना पडेगा।" परन्तु आश्चर्य की बात है कि इससे भी अम्बरीष चक्रवर्ती का मन अस्थिर न हुआ; शांतिपूर्वक उसने उत्तर दिया, "प्रभो! वज्रसे मारना अथवा दूसरा कुछ करना, यह आपकी मरजी की बात है, जिसमें मेरा कुछ कहने का नहीं। परन्तु यह एक विचार सुदृढ समझ लीजिए कि मैं अपने उपास्य देव के सिवा दूसरे किसीका अनुग्रह पाना नहीं चाहता।" फिर भगवान ने बडी प्रसन्नता से अपने निजस्वरूप के दर्शन दिये इत्यादि आगेकी कथा है। प्रकृतोचित बात यह है कि भक्त को अम्बरीष-जैसा निष्ठावान होना आवश्यक है और यह निष्ठा भगवत्कृपा के प्रताप से ही मिल सकती है, अन्यथा नहीं। [शूर्पणखा का नाक काटनेवाले] यद्यपि लक्ष्मण ने ही यह काम किया, न कि श्रीरामचंद्र ने। तथापि श्रीरामचंद्रजी की आज्ञा से यह किया गया, अतः व्याकरणशास्त्र के अनुसार श्रीरामचंद्रजी 'प्रयोजककर्ता' होते हैं, और उन्हें नाक काटनेवाले कहना ठीक है। अर्थात् नाक कटानेवाले को भी शास्त्रकार कभी कभी काटनेवाले ही कहते हैं॥ .... .... (६)

(गाथा.) मुन्नल् याळ्पयिल् नूल् नरम्बिन्मुदिर्शुवैये *
पन्नलार् पयिलुम् परने पवित्तिरने! *
कन्नले यमुदे! कार्मुहिले! एन्कण्णा! *
निन्नला लिलेन्काण् एन्नैनीकुरिकोळ्ळे ॥ ७ ॥

वीणाविषयकविलक्षणशास्त्रभूतसंगीतशास्त्रोक्तप्रक्रियया समुत्थाप्यमानतन्त्रीनिनद-वत्परमभोग्यभूत भगवन्! अपरिमितानां विलक्षणानां सतां नित्यानुभवपात्रभूत परमपुरुष! परमपावन! इक्षुरसवदतिमधुर! दिव्यामृत! नीलमेघनिभ! मदीय-नित्यानुभवयोग्य श्रीकृष्णमूर्ते! त्वद्विरहे सति न जीवेय क्षणमपि, सेयं मम प्रकृतिरवधेया भवता ॥

भगवतो हि भोग्यता सत्यमप्रमेया अनुभवरसिकैकवेद्या च। तामनुमदधानो मुनिवर 'एतादृशं परम-भोग्यं वस्तु हा हन्त! मम अविच्छेदं भोग्यं भविष्यति वा! वस्तुस्वाभाव्यात् मध्ये विच्छेदो भविता वा!' इत्यतिशङ्कमानः "न च सीता त्वया हीना न चाहमपि राघव!। मुहूर्तमपि जीवावो जलान्मत्स्याविवोद्धृतौ॥" इति यथा सौमित्रिणोक्तं विश्लेषप्रसङ्गे सति, तथैव कथयति मुनिवरोऽत्र॥ एतादृगतिशङ्कानिदानं भगवतः परमभोग्यत्वमेवेति प्रत्याययन् कतिपयानि संबोधनानि निबध्नाति–[वीणाविषयकेत्यादितः] * पशुर्वेत्ति शिशुर्वेत्ति वेत्ति गानरसं फणी * इत्युक्तरीत्या अचेतनकल्पानामपि परमभोग्यं प्रसिद्धो गानरसः, तद्वद्भोग्यो भगवानित्यभिधीयते। वाचिकगानापेक्षया वीणागानं परमभोग्यम्। तच्च गानं यदि यथाशास्त्रविधानं सम्पाद्येत, ततोऽपि परमभोग्यं नान्य-त्किमपि। अयमर्थो बृहत्सूक्तेऽपि सप्तमे शतके तृतीये दशके सप्तम्यां गाथायां श्रीपरकालमुनीन्द्रेणापि प्राकाश्यत। सहस्रगीतिदिव्यप्रबन्धस्यास्य तन्नियन्ध्येषु पद्यसु चरमे पद्ये वीणागानवत्परमभोग्यता प्रबन्धस्यास्य प्रोक्ता वर्तते। उपरि पञ्चमशतक-अष्टमदशकीयचरमगाथायाम् वेणुगानतोऽप्यतिभोग्यत्वं सहस्रगीत्या अस्या मुनिवरेण स्वयमेवोक्तम्, एतदादिविमर्शे सति "मदीयसहस्रगीतिवत्परमभोग्यभूत भो भगवन्!" इति विवक्षाऽपि स्यान्मुनिवरस्येति प्रतीयते।

अपरिमितानां विलक्षणानां सता मित्यनेन नित्यसूरयो मुक्तात्मानो मुमुक्षवश्च विवक्षिता भवितुमर्हन्ति । चन्द्रिका परमभोग्यैव, सा यदि कानने भवति, हन्त विगेया भवति, न तथा भगवान्, सर्वत्रापि तदनुभोक्तारस्सन्त्यपरिमिता इति प्रहर्षमयी सेयमुक्तिः । वीणागानरस श्रवणेन्द्रियभोग्य, इक्षुरससुधारसौ रसनेन्द्रियभोग्यौ, नीलमेघ चक्षुरिन्द्रियभोग्य । एतेषा कथनमितरयोरुपलक्षण मन्तव्यम् । सर्वेन्द्रियभोग्यो हि भगवान् । एतादृशस्य तव क्षणमात्रविश्लेषोऽपि मम सत्ताहानिकर । ईदृश मा निजान्तर्ङ्गे निधेहि, अथवा, एतादृशप्रकृतिकोऽय शठकोप इति चित्ते कलय ॥ (७)

## —* सातवीं गाथा—मुन्नल् याऴ् पयिलनूल् *—

(हिंदी) वीणाविषयक विलक्षण संगीतशास्त्र के अनुसार बजाये हुए तार से निकलनेवाले प्रौढ स्वर के सदृश परमभोग्य हे भगवन्! हे परमविलक्षण अनत महानुभावो के नित्यानुभव के विषयभूत, परमपुरुष! हे परमपावन! हे इक्षुरसके समान परममधुरमूर्ते! हे दिव्यामृतस्वरूपिन्! हे नीलमेघश्याम! हे मेरे नित्यानुभव के योग्य श्री कृष्ण! आपके एक क्षण मात्र के विरह-प्रसंग मे भी मै जीवित नहीं रह सकूंगा ॥ आप मेरी इस दशा का ख्याल रखिए ।

भगवान की भोग्यता परमविलक्षण, वर्णनातीत एव कल्पनातीत है, केवल अनुभव से ही किसीको उसका परिचय मिल सकता है । इसका ख्याल करने पर आऴ्वार के मन म यह शका उत्पन्न हुई कि, "क्या यह परमभोग्य भगवदनुभव मुझे कायम मिलता रहेगा, अथवा बीच में ही कहीं टूट जायगा? यदि इसका विच्छेद हो जाय, तो फिर मैं कैसे जीवित रह सकू?" अत इस गाथा में आप भगवान से ही अपने इस स्वभाव की विनती करते हैं । परमभक्तो का यह स्वभाव है कि वे एक क्षणमात्र के लिए भी भगवद्विश्लेष का सहन नहीं कर सकते । यथा लक्ष्मणजी ने कहा "न च सीता त्वया हीना" इत्यादि (अर्थात् हे प्रभो! आपसे विरहित होने पर सीताजी और मैं कभी एक मुहूर्त से अधिक जीवित न रह सकेंगे) । अब आऴ्वार भी यही कह रहे है । विश्लेष होने की यह शका भी, भगवान की वर्णनातीत भोग्यता के चिंतन से ही बनी है, अर्थात् भोग्यताका चिंतन करने से यह शका होती है कि क्या ऐसी परमभोग्य वस्तु मुझ पापी को कायम मिलती रहेगी । भोग्यता के दो तीन दृष्टात दिये जाते है । पहला दृष्टात है वीणानाद का । यह तो लोकप्रसिद्ध है कि वीणानाद इतना भोग्य होता है कि, पशु शिशु नाग इत्यादि अचेतनप्राय प्राणि भी उसके परवश बनते हैं । परतु एक बात की आवश्यकता है कि वीणा के शास्त्रोक्त क्रम से बजाये जाने की । बृहत्सूक्त में (७ ३ ७) श्री परकाल सूरी भी यह अर्थ कहते है । प्रकृत सहस्रगीति के तनियन् पद्योंमे से एक पद्य में (छठे में) सहस्रगीति को वीणागान के सदृश भोग्य बताने म आया है। स्वय आऴ्वार ही, आगे (५-८-११) अपने ग्रंथ इस सहस्रगीति को वीणागान से भी अधिक भोग्य बतायेंगे । इन सभी बातों पर ध्यान देनेसे हमें ऐसा लगता है कि शायद आऴ्वार भगवान को, "हे मेरी सहस्रगीति के सदृश भोग्यभूत!" पुकारना चाह रहे हैं । [अनंत महानुभावों के नित्यानुभव के विषय] इत्यादि कहने का यह भाव है कि

परमपदनिवासी असंख्य नित्य व मुक्त जन और इस संसार के मुमुक्षु जन, ये सभी भगवान के नित्यानुभव करते हुए कभी उससे तृप्त नहीं होते। इस संबोधन से आळ्वार अत्यानंद के साथ इस अर्थ की सूचना कर रहे हैं कि जैसे अनुभव करनेवालों के अभाव से अरण्य में चमकनेवाली चांदनी व्यर्थ और अत एव दूषित होती है, ऐसा व्यर्थता-रूप दोष भगवान को नहीं लगता, क्योंकि असंख्य भक्त जन उनका नित्यानुभव कर रहे हैं। भोग्यता के विषय में भगवान के दृष्टांततया वीणानाद के साथ, इक्षुरस और नीलमेघ भी बताये गये हैं। इनमें से वीणानाद श्रोत्रेंद्रिय का, इक्षुरस जिह्वा का और नीलमेघ नेत्र का भोग्य है। तथा च इन तीनों के नाम लेने का तात्पर्य यह है कि भगवान सभी इंद्रियों के भोग्य होते हैं। ऐसे परमभोग्य होने के कारण ही भगवान के एक क्षणमात्र का विश्लेष भी असह्य होता है। अतः यह विनती है कि, "ऐसे मुझको आप सदा अपने शुभचित्तम रखिए, अथवा, इस बातका आप ख्याल रखिए कि यह आळ्वार क्षणमात्र के विश्लेष का भी सहन नहीं कर सकेगा" ॥ (७)

(गाथा) कुरिकोन्द्र ज्ञानङ्गळाल् एनैयूळि शेय्तवमुम् *
किरिकोण्डिप्पिरप्पे शिलनाळिलेय्दिनन् यान् *
उरिकोण्डवेण्णेय् पाल् ओळिचुण्णुमम्मान्पिन् *
नेरिकोण्ड नेञ्जनाय् पिरविचुय कैडिन्दे ॥ ८ ॥

शिक्यसंभृतनवनीतदुग्धादिकं निगूढतया आस्वादितवतो दामोदरस्य पन्थानमनुसृतवता हृदयेन सनाथोऽहं सांसारिकव्यसनानि विधूय, यमनियमादिनिष्ठागरिम्णा सुचिरसाध्यं भक्तियोगमपि इहजन्मन्यल्पीयसा कालेन सञ्चितवानस्मि तदीयनिर्हेतुककृपाख्ययन्त्रविशेषेण ॥

"जन्मान्तरसहस्रेषु तपोज्ञानसमाधिभिः। नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते ॥" इति तावत्प्रमाणगतिः। तादृशी भक्तिरनेन मुनिवरेण भगवतः कृपया अनायासतस्साधिताऽभूदिति निगद्यते गाथयाऽनया। उदाहृतप्रमाणेन भक्तियोगस्य यदभिहितं दुस्सम्पादत्वम्, तदेवानूद्यते **यमनियमादी**त्यादिना। तादृशं भक्तियोगं **यन्त्रविशेषेण सञ्चितवानहं** मित्येतावदेव मूलगाथया कथितम्, निर्हेतुकभगवत्कृपैव स यन्त्रविशेष इति मर्मविदामाचार्याणां व्याख्यानम्। **शिक्यसंभृत नवनीतेत्यादे**र्व्याख्यानं भाषमाणा आचार्यवर्या अन्ततो रस्यमेकमर्थमनुगृह्णन्ति, कृष्णो भगवान् यदा नवनीतदुग्धादिगव्यस्तेयार्थं व्रजे कस्याश्चन गोप्या भवनं प्रविवेश, तदा (शठकोपसूरिनामा) अहमपि तत्पृष्ठतः शनैरगच्छम्, तदावे भगवान् स्वकीयस्य स्तेयस्य अप्रकाशनं प्रार्थ्य भक्तियोगं मह्यमदात्—इति। अथ भावः—कृष्णकृतनवनीतमोषणानुसन्धानमात्रेण मया भक्तियोग उपार्जित इति। गीताचार्यो हि स्वयं गायति चतुर्थाध्याये * जन्म कर्म च मे दिव्यमेवं यो वेत्ति तत्त्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन ॥ * इति। भगवज्जन्मचेष्टितयोः रनुसन्धानं भक्तिं प्रजनय्य मुक्तिं दिशतीति हि तदभिप्रायः ॥ .... ... (८)

—* आठवी गाथा—कुरिकोळ् ज्ञानङ्गळाल् *—

**(हिंदी) छीके में सुरक्षित रखे हुए मक्खन और दुग्ध को रहस्य में खानेवाले हमारे प्रभुके पीछे पीछे ही चलनेवाले मन से युत मैंने समस्त सांसारिक दुःखों को दूर कर, बहुत समय तक यमनियमादि निष्ठाओं के साथ अभ्यास करने पर ही मिलने योग्य भक्तियोग नामक तपस्या को भगवत्कृपारूप यंत्र के सहारे, इसी जन्म में अत्यल्प समय में प्राप्त किया।**

शास्त्र पुकारता है कि हजारों जन्मों में तपस्या, उपासना इत्यादि साधनानुष्ठान करने पर ही कोई मानव समस्तपापों से मुक्त होकर भगवद्भक्ति पा सकता है, अन्यथा नहीं। परंतु प्रकृत गाथा में आळ्वार कहते हैं कि इस दुर्लभ भक्ति को मैंने केवल भगवत्कृपा से, विना क्लेश, इसी जन्म में प्राप्त किया। यद्यपि मूल गाथा में इतना ही कहा गया है कि मैंने किसी यंत्र के सहारे भक्ति पायी, अर्थात् स्पष्टतया उस यंत्र का परिचय नहीं दिया गया है। तथापि मर्मज्ञ आचार्य बताते हैं कि यह यंत्र भगवान की असीम व अहेतुक कृपा ही है, जो सर्वसमर्थ है। [**छीके में सुरक्षित**] इत्यादि वाक्यखंड के अनेक अर्थ बताने वाले व्याख्याकार आचार्य, अतः यह रसमय अर्थ बताते हैं कि जब श्री कृष्ण भगवान अपने घर से निकलकर मक्खन चोरी के लिए किसी गोपी के घर पधारे, तब मैं (आळ्वार) भी धीरे धीरे उनके पीछे पड़ा। कुछ समय के बाद भगवान मुझे देख कर चिंतित हो उठे कि "शायद ये आळ्वार मेरी चोरी को प्रकाशित कर डालेंगे।" अतः उन्होंने मुझसे कहा कि, "हे शठकोपमुने! तुम्हे कुछ पारितोषक दूगा, लो यह अमूल्य वस्तु 'भक्ति' है। इसे लेकर तुम कृपया मेरी चौरी का प्रकाशन किया मत करो।" कहने का यह तात्पर्य है कि भगवान की नवनीतचौर्यलीला का अनुसंधान करने मात्र से मेरे समस्त पाप नष्ट हो गये और दुर्लभ भक्ति भी अक्लेश मिल गयी। यह केवल रसोक्तिमात्र नहीं, वरन् पक्का शास्त्रार्थ भी है। क्योंकि गीताजी में स्वयं भगवान ही कहते हैं कि, "जन्म कर्म च मे दिव्यम् एवं यो वेत्ति तत्वतः। त्यक्त्वा देहं पुनर्जन्म नैति मामेति सोऽर्जुन॥" संक्षेप से इसका यह भाव है कि भगवान के दिव्य अवतार और चेष्टितों के अनुसंधान करनेवाला पहले भक्ति पाकर, फिर उसके द्वारा मोक्ष भी पाएगा॥ (८)

(गाथा) कडिवार् तण्णन्तुळाय् कण्णन् विण्णवर्पेरुमान् *
पडिवानमिरन्द परमन् पवित्तिरन् शीर् *
शेडियार्नोय्हळ् केड पडिन्दु कुडैन्दाडि *
अडियेन् वाय्मडुत्तु परुहि कळित्तेने ॥ ९ ॥

**सौरभसभृतशिशिरतुलसीविभूषितस्य कृष्णस्य, अनन्तवैनतेयादिनित्यसूरिपरिपन्नि-र्वाहकस्य, दिव्ये धामन्यपि स्वसमदरिद्रस्य परस्य पुंसः पवित्रस्य कल्याणगुणान् दुर्मोचोद्भूटदुरितराशिविनाशनक्षमान् गाढं विगाह्य वाचा सुष्ठु सकीर्त्य ब्रह्मानन्द-शाली बभूव सोऽयं दासः ॥**

संसारमण्डलाद्दिव्यं धाम व्रजतां सतां तत्र संपद्यमानं कार्यं गृणती श्रुतिः * सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता * इति तावदुद्गृणीत। काम्यन्त इति कामाः—भगवतो गुणा इत्यर्थः। तेषामुपभोग एव तत्र कार्यमित्युक्तं भवति। तेषामुपभोग इहैव मम समपद्यतेत्याह मुनिवरो गाथयाऽनया। परिमलप्रचुरदिव्यतुलसीस्रगञ्चितदिव्यगात्रः, तदनुभवनिरतशेषशेषाशनगरुडप्रमुखानेकमुक्तगणनिषेव्यमाणः, * निरञ्जनः परमं साम्यमुपैतीत्याम्नातरीत्या परमसाम्यापन्नेष्वपि तत्र येषु स्वात्मना सर्वथा समा नैव सन्तीति मुक्तियोग्यतया समभ्यधिकरहितः (अथवा) वर्धुरूरघ्रावन्हवेनगात्रः, संसारिजनानपि तादृशगुणानुभवयोग्यान् कर्तुं क्षमेण पावनत्वेन विभूषितो यो भगवान् तस्य गुणामृतसिन्धौ सुगाढमवगाह्य सकलदुरितविततिविलयमवाप्य अमन्दानन्दसन्दोहकन्दलितस्वान्तोऽस्मीति ब्रह्मानन्दसीम्नि स्थितस्य मुनिवरस्य सेयमनर्घा सूक्तिः॥ .... (९)

—* नवमी गाथा—कडिवार् तण्णन्तुळाय् कण्णन् *—

**(हिंदी.) अत्यंत सुगंधि व सुशीतल तुलसी से अलंकृत, श्रीकृष्ण, अनंतगरुडविष्वक्सेनादि नित्यसूरियों के नाथ, और परमपद में भी अपने सदृश दूसरे व्यक्ति से विरहित, परिशुद्ध परमपुरुष के कल्याणगुणों में डूबकर, उससे कंटकगुल्मसदृश क्रूर पापसमूह का विनाश पाकर, दास में वाणी से भी उन गुणों का ही कीर्तन करता हुआ ब्रह्मानंद का भागी बन गया हूँ॥**

उपनिषद् का कहना है कि भक्ति प्रपत्ति इत्यादि चाहे किसी साधन के अनुष्ठान से संसारसागर को पारकर दिव्य धाम पहुंचनेवाला चेतन, वहां भगवान के साथ उनके शुभगुणों का अनुभव करेगा—"सोऽश्नुते सर्वान् कामान् सह, ब्रह्मणा विपश्चिता।" भाष्यकार बताते हैं कि यहां पर काम शब्द का अर्थ है वाञ्छनीय (कल्याण) गुण। अब इस गाथा में आळ्वार कहते हैं कि मुझे यह उत्तमपुरुषार्थ इस धरातल पर ही मिल गया। अपने अनुभूयमान भगवान के चार एक सुंदर विशेषण दिये जाते हैं, सुगंधितुलसी के धारी, नीलमेघश्याम, नित्यसूरियों के नेता, परमपुरुष, अतिपवित्र, अपने सदृश अथवा अधिक दूसरे किसी व्यक्ति से विरहित इत्यादि। यद्यपि "परम साम्यमुपैति" इत्यादि शास्त्रों के अनुसार नित्य व मुक्त स्वरूपगुणों में भगवान के सदृश ही होते हैं। तथापि जगत्कारणत्व, सर्वशेषित्व, लक्ष्मीपतित्व इत्यादि ऐसे अनेक अंशों में भगवान उनसे श्रेष्ठ होते हैं। अतः यह कहना सर्वथा उचित है कि परमपद में भी भगवान अपने सदृश व अधिक दूसरे व्यक्ति से विरहित हैं। भगवान को परमपावन कहने का यह भाव है कि आप अपने कटाक्ष आदियों से संसारियों के अतिक्रूर पाप मिटाकर उन्हें परमपद का भोग दे सकते हैं। अतः आळ्वार की यह वाणी सत्य ही अनर्घ है कि, "ऐसे महामहिम व परमभोग्य भगवान के शुभगुणसागर में डूब कर, अपने पापों का पार कर, अब मैं इस धरातल पर रहता हुआ ही परमपदलभ्य ब्रह्मानंद का अनुभव कर रहा हूँ॥ ....(९)

(गाथा.) कळिप्पुम् कवर्वुमत्तु पिरप्पु प्पिणिमूप्पिरप्पत्तु *
ओळिकोण्ड शोदियमाय् उडन्कूडुवदेन्नु कोलो *
तुळिकिन्न वानिन्निलम् शुडराळि शङ्गेन्दि *
अळिकिन्न मायप्पिरानडियार्हळ् कुळाङ्गळैये ॥ १० ॥

अल्पवस्तुलाभजनितमोदेन तादृशवस्तुविलोपजनितखेदेन च विरहितो भूत्वा, जन्मव्याधिजरामरणादिदवीयाश्च भूत्वा, ज्योतिर्मयदिव्यविग्रहस्सन् जाज्वल्यमानहेतिराजपाञ्चजन्यमुख्त उभयविभूतिरक्षणदक्षिणस्यात्याश्चर्यचेष्टितस्य परमपुरुषस्य किङ्कराणां गोष्ठीभिस्सह कदा सगच्छेय ॥

अधस्तनगाथाया ब्रह्मानन्दकन्दलितस्वान्तमात्मानमनुमदधानो मुनिवर तादृशब्रह्मानन्दद्विभ्रमभारिजनमध्ये निषण्णमात्मानमवलोकयन् * कैङ्कर्यनित्यनिरतैर्भवदेकभोगै नित्यैरनुक्षणनवीनरसार्द्रभावै । नित्याभिवाञ्छितपरस्परनीचभावै मद्दैवतै परिजनैस्तव संगसीय ॥ * इति श्रीवैकुण्ठस्तवगद्यरत्नमूलभूतयाऽनया गाथया स्वनिर्वेदमाविष्करोति । ससारिणा विगेया परिस्थिति प्रथमपादेन प्रतिपाद्यते । यावदिह लीलाविभूतौ निवसाम तावत् अल्पिष्ठवस्तुभोगजेनाल्पमोदेन, तदप्राप्तिजनितेन खेदेन चाभिभूयामहे, न केवलमेतावदेव, * पुनरपि जनन पुनरपि मरण पुनरपि जननीजठरे शयनम् * इत्युक्तरीत्या जननमरणसन्ततीना परिवृत्त्या च परितप्यामहे। व्याधिबाधाभिर्जराक्लेशैश्च परिक्लिश्यामहे । एवंविधपरिक्लेशावकाशाद्दवीयस्त्वमस्माक कदा भवेत्? ज्योतिर्मयदिव्यविग्रहपरिग्रहेण नित्यमुक्तपरिषन्निवेशने सत्येव भवेत्, आ ! कदा सपत्स्यते तत्? इति तदनवाप्तिनिर्वेद प्रकाशितो भवति । श्रीमति वैकुण्ठे भगवदनुभवापेक्षया तदीयगुणानुभवापेक्षयाऽपि च अनुभवरसिकभक्तवृन्दमध्यवर्तित्वमेव परम पुरुषार्थ इति शास्त्रार्थस्सूचितो भवति । मुनिवरस्यास्य सोऽय मनोरथ फलेग्रहिर्बभूव वेति चेत्, तदिदमुपान्त्यदशकचरमगाथायाम् (१०-९-११) मुनिवर स्वयमेवावष्टे "अन्दमिल् पेरिन्बत्तु अडियरोडिरुन्दमै" [अनन्तब्रह्मानन्दानुभवशालिभक्तजनसाहित्यमुक्तम्] इति ॥

प्रतिदशकमेकैको गुणोऽनुभूयत इति हि क्रम , दशकेऽस्मिन्ननुभूत प्रतिपादितो वा गुण क इति चेत्, भक्तजनसहवासकुतूहलाभिवर्धकत्व नाम गुण इति ध्येयम् ॥ (१०)

— *दसवीं गाथा—कळिप्पुम् करवुमत्तु *—

(हिंदी) अल्पवस्तु के लाभ से प्रसन्न होने, और उसके नाश से दुःख पाने से विरहित, जन्म व्याधि जरा मृत्यु इत्यादि दोषों से दूर, ज्योतिर्मयदिव्यविग्रहवान, जाज्वल्यमान शंखचक्रधारी, उभयविभूतिसंरक्षक और अत्याश्चर्यमयचेष्टित परमपुरुष के सेवकों की गोष्ठियों से म कब मिलूंगा?

पिछली गाथा में नेत्र बद करके अपने मन में ही ब्रह्मानद का अनुभव करनेवाले श्री शठकोपसूरी ने जब आंख खोल कर देखा, तब विदित हुआ कि, मै ब्रह्मानदानुभव से बहुत दूर रहनेवाले क्षुद्र ससारियो के बीच में बैठा हू । इससे आप बहुत निर्वेद पाकर, प्रकृत गाथा से उसका प्रकाशन करते हैं । पहले पादसे ससारियों की हेय स्थिति का वर्णन किया जाता है । यहा रहनेवाले जन किसी अल्प वस्तु के लाभ से बहुत प्रसन्न, और उसके अलाभ अथवा दूर होने से दु खी होते हैं । यह इनका स्वभाव है । इतना ही नहीं; ये लोग जनन मरणों के चक्कर में पडे हैं और आधि व्याधि बाधा जरा इत्यादि असह्य क्लेश भी भोग रहे हैं । ये सभी दु ख कब निवृत्त होंगे? तभी होंगे जब कि यह चेतन पाचभौतिक शरीर छोडकर,

संसार का पार कर, परमपद पहुंच कर आत्मन्यमान पंचोपनिषण्मय दिव्य विग्रह प्राप्त कर नित्यसूरियों के समाज में विराजेगा। हाल में तो इस महाभाग्य के अलाभ से समुत्पन्न निर्वेद का प्रकाशन करना पडता है, और उस भाग्य की प्रतीक्षा करनी पडती है। पिछली गाथा में बताया गया कि मुक्तपुरुष परमपद में भगवद्गुणों का अनुभव करेगा। परंतु आळ्वार का एवं तदनुयायी आचार्यों का यह सिद्धांत है कि वहां पर भगवदनुभव करने की अपेक्षा तदनुभवरसिक भक्तवृंदों से मिलना ही श्रेष्ठतर पुरुषार्थ है। आगे आळ्वार कहेंगे कि मैंने यही फल पाया। तथाहि सहस्रगीति के उपान्त्य दशक की चरमगाथा (१०-९-११) में आप गानेवाले हैं कि "अन्दमिल् पेरिन्बत्तु अडियरोडिरुन्दमै" (अर्थात् अनशून्य महानदवाले परमभक्तों से मिलना। श्रीकूरेश स्वामीजी ने भी आळ्वार की प्रकृत गाथा का अनुकरण करते हुए श्रीवैकुण्ठस्तव में गाया कि, "कैङ्कर्यनित्यनिरतैर्भवदेकभोगै नित्यैरनुक्षणनवीनरसार्द्रभावैः। नित्याभिवाञ्छितपरस्परनीचभावैः मद्दैवतैः परिजनैस्सह सङ्गसीय॥" अर्थात्, "मैं आपके परमपदनिवासी उन भक्तों से मिलूं जो सदा आपकी सेवा करने में निरत, दूसरे भोगों से विरक्त, आपके अनुभव में सदा नये नये रस पाते हुए आर्द्रचित्त होते, सदा एक दूसरों के नीचभाव ही रखने और मेरे स्वामी होते हैं।"

यह अर्थ बताया गया कि इस सहस्रगीति के एकैक दशक में भी प्रधानरूप से भगवान के एकैक गुण का अनुभवपूर्वक वर्णन किया जाता है। इस न्यायके अनुसार प्रकृतदशक का लक्ष्य गुण "भक्तजन सहवास करने का कौतूहल बढाना" है। यद्यपि इस दशक के आदि से नहीं वरन् इस दसवी गाथा में ही भक्तों से मिलने की यह आशा बतायी गयी है, तथाच यह शंका होगी कि यह कैसे बता जाता है कि इस सारे दशक का प्रतिपाद्य गुण 'भक्तजन सहवास कौतूहल वर्धन' है। तथापि आचार्यों का सिद्धांत है कि प्रकृत गाथा ही इस दशक में सारभूत है और दूसरी गाथाएं इसका पोषण करती हुई अवतीर्ण हैं; अतः सब को मिलाकर, मथन करने से यही तात्पर्यार्थ निकलेगा॥ .. ... (१०)

(गाथा.) कुलाङ्गोळ् पेरकन् कुलम् वीय मुनिन्दवनै *
कुलाङ्गोळ् तेन्कुरुहूर्शठकोपन् तेरिन्दुरैत्त *
कुलाङ्गोळायिरत्तुळ् इवै पत्तुमुडन्पाडि *
कुलाङ्गळायडियीरुडन् कूडिनिन्राडुमिने ॥ ११ ॥

भो भक्ताः! सघीभूतसेनासमृद्धराक्षसाधिराजसकुटुम्बविनाशौपयिककोपवशंवद भगवन्तमधिकृत्य, श्रीवैष्णवसंघसंभृतश्रीकुरुकापुरीसमवतीर्णेन श्रीशठकोपसूरिणा यथावस्थितज्ञानबलेनानुगृहीते भक्तवृंदानुभाव्ये गाथासहस्रेऽस्मिन् तदेतद्दशक परस्परस्पर्धां विहाय ऐकमत्येनानुभूय नृत्यत ॥

प्रतिदशकमप्यन्तिमगाथायां फलकीर्तनं हि प्रचलति, न तथा दशकस्यास्य किमपि फलमकीर्त्यत। दशकस्यास्य समष्ट्याऽनुभूतिरेव परमं फलमिति सूचितं भवति। दशकेऽस्मिन् न कस्यामपि गाथायां लङ्केश्वर-विध्वंसनचरितं प्रस्तावि, तथाऽप्यन्तिमगाथायामस्य तत्प्रस्तावः, यथा वा जगति श्रीरामायणकथायां अनुभवो

वृन्दशो भवति, तथैव अस्यापि भवितव्यमिति सूचयति । गाथाया अस्याश्चरमचरणसंनिवेशचारुतामवेक्ष्य व्याख्यातार आचार्यवर्या अनुगृह्णन्ति ;—"भगवति निक्षिप्तभरा यूयं त्रिचतुरा विभूत्यामस्यां मत्स्थित्यनुकूलेषु त्रिचतुरेषु दिवसेषु अर्थकामवैयग्र्येण मिथः स्पर्धां विसृज्य दिव्यधामनिवेशनात्पूर्वं एकमत्येनानुभवितुं स्पृहयध्वम्" इति ॥

—* द्रमिडोपनिषत्संगति श्लोकः *—

श्लो. अन्तस्स्थसर्वरसमम्बुजलोचनस्य संयोगरूपमवगाह्य सुधामृताब्धिम् ।
तद्देशिकप्रथमसूरिगणैकदास्यात्सङ्गो ममेत्यकथयत्स मुनिस्तृतीये ॥

—* ग्यारहवीं गाथा—कुलाङ्गल्द् पेररकन् कुलम् वीय मुनिन्दवनै *—

(हिंदी.) हे भक्तजन! अनेक सेनासमूहों से समृद्ध राक्षस राजा रावण का कोप से सकुटुंब संहार करनेवाले भगवान को लक्ष्यकर, श्रीवैष्णवगोष्ठीसमृद्ध श्रीकुरुकापुरी में अवतीर्ण श्रीशठकोपसूरी से विवेचनपूर्वक अनुगृहीत, भक्तसमुदायभोग्य सहस्रगीति के अंतर्गत इस दशक का, परस्पर स्पर्धा छोडकर एकमत से गान करते हुए सहर्ष नर्तन कीजिए। (इस आज्ञापूर्वक यह दशक समाप्त किया गाया ॥)

इस महाग्रंथ के एकैक दशक के अंत में भी फल बताने की रूढि है, जो प्रकृत गाथा में नहीं देखी जाती। इसके बदले में इसमें भक्तों को यह आज्ञा दी गयी है कि तुमलोग जत्था जत्था बनकर इस दशक का गान करते हुए आनंद के मारे नर्तन भी कीजिए। इससे आल्वार का यह अभिप्राय सूचित किया जाता है कि सामूहिकरूप से इसका पाठ करना ही ऐसा परमभोग्य फल है, जिसके फलांतर ढूढना व्यर्थ है। एवं इस दशक की किसी गाथा में रावणवध का वृत्तांत उपवर्णित नहीं हुआ; तथापि प्रकृत गाथा में बताया जा रहा है कि यह दशक रावणहंता श्रीरामचंद्र भगवान का यशोगान है। इसका यह तात्पर्य है कि वास्तव में श्रीरामचंद्र का यशोगान करनेवाला ग्रंथ श्रीरामायण है; उसकी यह महिमा है कि लोग संघशः मिलकर उसका अनुभव करते हैं, इसी प्रकार प्रकृत सहस्रगीति का भी सामूहिक पाठ करना चाहिए। इस गाथा के अंतिमपाद की सुंदरता से आकृष्टचित्त व्याख्याकार आचार्यवर, अतिमनोहर शब्दों से यह आदेश देते हैं कि, "भगवान पर अपने समस्तविध भार छोडकर, तुम दो चार व्यक्ति यदि इस धरातल पर कुछ समयतक रहनेका अवकाश पाते हो, तो परमपद पहुंचने से पहले के इस अत्यल्पकाल में क्षुद्र अर्थकामों में सक्त होकर, उसके निमित्त एक दूसरे से संघर्ष किये विना, एकमत होकर भगवदनुभव करो ॥"

सटीक सहस्रगीति के दूसरे शतक का तीसरा दशक समाप्त हुआ ॥

आल्वार तिरुवडिगळे शरणम् ॥

श्रीमते रामानुजाय नम । श्रीमद्वरवरमुनये नम ॥

# ॥ सहस्रगीत्याम् - द्वितीयशतके - चतुर्थं दशकम्—आडियाडि ॥

अवतारिका—अस्मिन् दशके ब्रह्मानन्दघन इति मपत्रम् । भगवत्संयोगरसो विलक्षणोऽन्वभावि। * संयोगा विप्रयोगान्ता खलु, ब्रह्मानन्दप्रचुरे मुनिवरचेतसि निर्वेदं पदं निधातुमुपाक्रमतपूर्वदशकान्ते । * मच्चित्ता मद्गतप्राणा बोधयन्तः परस्परम् * इति गीतोक्तरीत्या परस्परबोधनेन कालं क्षेप्तुमधिकारिणामिह दौर्लभ्येन नित्यविभूत्यां नित्यसूरिपरिषदि निषद्यानुभोक्तुं कामना ह्यजनि, मुनिवरेणानेन निरतिशय लोकोपकार कारयितुं कृतसुदृढसङ्कल्पो भगवान् त्वपमिव तां सद्य फलेग्रहिणाकरिष्येत । स समयविशेषस्सुदूरे हि वर्तते । ततश्च मुनिवरस्य निर्वेदो वर्णयितुमारेभे, तं स्ववाचोद्घाटयितुमक्षमो मुनिवरो जननीवाचा प्रकाशयति दशकेनानेन । अधस्तात् प्रथमशतकस्य चतुर्थदशकावतारिकायामन्यापदेशवचनभङ्गीमधिकृत्य यद्विपुलमलिखाम, तदत्र स्मर्तव्यम्, तत्तु चतुर्थे दशके जननीगिराऽवतरति । का नाम पुत्री? का नाम जननीति न प्रष्टव्यम्—निर्दिष्टे स्थले सर्वस्यापि सुविशदं निरूपितत्वात् । मातृवाचाऽवतरणं तु समस्तु दशकेषु प्राथमिकमिदम् । इतः परं तृतीयशतकावसानपर्यन्तम् अन्यापदेशतः कथनं नावतरिष्यतीति च मनसि निधातव्यम् ।

पुत्री त्वरापरा, माता अध्यवसायपरा, इति विवेकः, तथा चाध्यवसायप्रकाशनार्थमेव मातृवाचोऽवतारणमित्युक्तं भवति । 'एवमेवमतिप्रवृत्तिपरा मम दुहिता प्रपन्नसन्तानसर्वस्वभूतादध्यवसायात्प्रच्युता भवति हन्तेति बिभेमि, भगवन् दयानिधे! एवं भयावहस्थितिसमुत्पादनं नोचितं तव, तत् क्षिप्रमेव स्वकीयनिरवमहानुग्रहप्रकाशनेन मम भीतिमपनुदतात्' इति तावन्मातृवचस्सर्वस्वम् । निर्वेदाधिक्ये सति स्ववाचा कथनमुपरमतीति, अन्यापदेशतः कथनमाविर्भवतीति च पश्याम । निर्वेदप्रकाशकेषु दशकेषु तृतीयमिदं दशकमिति व्यक्तम् । प्रथमनिर्वेददशकम् (१–४) * अञ्जिरैयमडनाराय् । * इत्येतत् । द्वितीयनिर्वेददशकम् (२–१) * वायुम् तिरैयुहलुम् * इत्येतत् । एतदुभयमपि दुहितृवाचैवावतीर्णम्, स्ववाचैवोदितमिति यावत् । वर्तमानमिदं तु दशकं न स्ववाचा, अपि तु मातृवाचा । स्ववाचा कथयितुमप्यशक्तिमुदपादयदार्त्यतिशय इति व्यज्यते । निरुक्तदशकद्वयगतनिर्वेदापेक्षया अत्रत्यनिर्वेदस्यातिशयितत्वमाचार्या निरूपयन्ति पश्यत,—कस्यचित् काकणिकाप्रणाशोऽभवत्, अपरस्य स्वर्णशकलविनाशोऽभूत्, अन्यस्य रत्नप्रच्युतिरभूत् इति गृह्यताम् । अमी त्रयोऽपि खिद्यन्ते । किमेते खेदास्समानस्कन्धा भवितुमर्हन्ति? प्रच्युतवस्त्वनुरूपो हि खेदः । काकणिकापेक्षया स्वर्णमभ्यधिकम्, सुवर्णापेक्षया रत्नमभ्यर्हिततमम् । अतश्च त्रयाणामपि खेद उत्तरोत्तरमतिरिच्यत इति युक्तमात्पश्याम । अथ प्रकृते विषये प्रवर्तयत मनः । (१–४) * अञ्जिरैयमडनाराय् दशके जातस्य निर्वेदस्य को हेतुरिति विवेचने, तत्पूर्वदशकीयदशमगाथायाम् "लोकविक्रान्तचरणारविन्द संश्लेष्टुकामोऽस्मि" इति प्रकटिताया कामनाया फलेग्रहित्वविरह एव हेतुरिति स्पष्टम् । अथ (२–१) * वायुम्तिरैयुहलुम्दशके जातस्य निर्वेदस्य को हेतुरिति विवेचने, तत्पूर्वदशकीयनवमगाथाया तिरुक्कुरुङ्गुडिनामकदिव्यदेशाधीशविषयकस्पृहाया प्रस्तुतत्वेन तत्साफल्यविरह एव हेतुरभूत । अथ प्रकृततृतीयनिर्वेदहेतुविमर्शे परमभागवतगोष्ठीनिषदनस्पृहाया मोघतैव हेतुरिति सुव्यक्तम् । एवं च उत्तरोत्तरमतिशयो निर्वेदहेतुषु प्रस्फुट इति । भागवतसंश्लेषे प्रमोदातिशय, तदलाभे खेदातिशयश्च भगवतोऽप्यस्तीति स्थिते किं पुन श्रीशठकोपसूरिसधर्मणां भक्तप्रवराणामिति

श्रीरामायणात् श्लोकद्वयमुपादाय व्याख्यान्ति रसिकवरा गुरुचरणा अत्र। संक्षेपरामायणे * गुहेन सहितो रामो लक्ष्मणेन च सीतया * इति श्लोकः प्रथितः। अत्र लक्ष्मणसीतासाहित्यकथनं चर्वितचर्वणम्। सौमित्रिस्सीता च राममनुजग्मतुरिति कथितमेव स्पष्टमधस्तात्। पुनस्तयोस्सहयोगकथनं कविसार्वभौमकवितायां न्यूनतापादकमेव स्यात्। तां परिहरन्त आचार्याः श्रीरामचन्द्रस्वभावानुगुणं च व्याचक्षते। रामो गुहेन सहितो भूत्वा तदनन्तरमेव लक्ष्मणेन सीतया च सहितमात्मानं मेने। ततः पूर्वं स्थितमपि सीतासौमित्रिसाहित्यम् अगणयन्नासीदित्यभिप्रायः इति। * गुहेन सहितो रामः इत्येतद्वाक्यम् न रामस्य, अपि तु कवेः। साक्षाद्रामस्यैव भावितमर्थपुष्कलं प्रदर्शयन्ति च। आरण्यकाण्डे (१६–४०) * कदा न्वहं समेष्यामि भरतेन महात्मना। शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन!॥ * इति सौमित्रिं प्रति रामः प्राह। चित्रकूटपरिसरमागत्य अमृतकल्पानि वचांसि भूयांसि व्याहृत्य प्रतिनिवृत्तं भरतं स्मारस्मारं विलपतो रामस्येदं वचनम्। ननु सौमित्रे! भरतेन शत्रुघ्नेन च पुनः कदाऽहं संगतो भवेयमिति कथनं युक्तरूपम्। हन्त! न तावदेवात्र कथितम्। लक्ष्मण! त्वया च कदा समेष्यामीति तु कथितम्। चकारोऽत्र अनुक्तसमुच्चयपरः। सीतया च कदा समेष्यामीति तदभिसन्धिः। सौमित्रेस्सीतायाश्च सन्निधाने सत्यपि एवं कथनस्याभिप्रायमाचार्या उपवर्णयन्ति—भरतसाहित्याभावेन विद्यमानाभ्यां सीतालक्ष्मणाभ्यामपि विरहितमात्मानं मेने इति। एतादृशो हि भागवतसहयोगमहिमा। ईदृशसहयोगकाङ्क्षणस्य अधस्तनदशकानुसन्धानप्रकाशितस्य अफलप्रहित्वेन संजातो निर्वेदस्सत्य प्राक्तननिर्वेदद्विगुणतोऽप्युत्तुङ्ग। अत एव स्ववाचा कथयितुमशक्तया मातृगिरा वर्णनं प्रवर्ततेऽधुनेति आचार्याणां निर्वाहो रसघनः॥ इत्यवतारिका॥

(हिंदी) दूसरे शतक के चौथे दशक की अवतारिका। पिछला दशक आळ्वार को ब्रह्मानदमय बीता। क्योंकि उसमें उन्होंने भगवन्मश्लेषरसानद का खूब अनुभव किया। परंतु उसके बाद, अब "संयोगा विप्रयोगान्ताः" इत्यादि न्याय के अनुसार, वियोग दुःख उपस्थित हो रहा है। वस्तुतस्तु पूर्वदशक के अंत में ही दुःख की छाया प्रकट हुई थी, जब आळ्वार ने इस संसार में अपने सहयोग देने में समर्थ किसी व्यक्ति के अलाभ से खिन्न होकर, परमपदस्थ नित्य व मुक्तों की गोष्ठी में मिलकर भगवदनुभव करना चाहा, अर्थात् आळ्वार को यह संसारमंडल छोडकर तुरंत परम पद पधारने की उत्कंठा हुई। परंतु भगवान की इच्छा इसके विपरीत ही ठहरी, आळ्वार के श्रीमुख से लोकोपकारार्थ पूरी सहस्रगीति का गान कराने का, उनका दृढ संकल्प रहा। अतः तब तक आळ्वार को परमपद पधारना असंभव बना था। आळ्वार की आर्ति में अथवा अधिकार-पूर्ति में रत्ती भर भी न्यूनता न रही, अतः उनके अपेक्षित समय ही मोक्ष मिल जाना था। परंतु वास्तव में ऐसा संयोग न बना। फलतः उन्हें रोते रोते ही इस संसार में बहुत समय बिताना पड़ा। क्या कारण? यही, भगवान का पूर्वोक्त विलक्षण संकल्प। अस्तु। हाल में इस संकल्प के प्रभाव से आळ्वार की पूर्वोक्त इच्छा सफल न बनी। फलतया आळ्वार दुःखी हुए और यह दुःख क्षणे क्षणे बढने लगा। अंतमें उनकी दशा इतनी शोचनीय हो गयी कि आपको इसका प्रकाशन करने के लिए माता के रूप का धारण करना पड़ा। अर्थात् उनका दुःख इतना अधिक था कि वे स्वयं अपनी वाणी से उसका वर्णन न कर सकते हुए, स्त्रीभावना प्राप्त कर, और उसमें भी नायिकाभावना से भी आगे बढकर मातृभावना प्राप्त कर यह चौथा दशक गाने लगते हैं। आळ्वार की स्त्रीभावनाओं के (पुत्रीभावना, मातृभावना व सखीभावना) स्वरूप प्रयोजन

इत्यादियों का विस्तृत वर्णन पहले शतक के चौथे दशक की अवतारिका में किया गया है, जिसे बाचकर ठीक ठीक समझ लें और इस प्रकरण में याद करें। मातृभावना से अवतीर्ण सात दशकों में यही पहला दशक है। और इसके बाद इस दूसरे शतक में और सारे तीसरे शतक में फिर स्त्रीभावना का उदय नहीं होगा।

पुत्री व माता के बीच में यही अंतर है कि पुत्री भगवान से मिलने को त्वरा करती है और माता दृढाध्यवसाय रखती हैं। माता भगवान से यह विनती करती है कि, "हे प्रभो! मेरी पुत्री आपसे मिलने की त्वरा से अमुक अमुक अतिप्रवृत्ति कर रही है जिसे देख मैं भयग्रस्त हो रही हूं कि यह तो प्रपन्न जनता का सर्वस्वभूत दृढ अध्यवसाय खो बैठेगी। समस्तलोकसंरक्षणदीक्षित दयामूर्ति आपको यह उचित नहीं कि आप इसे ऐसी भयकर स्थिति पर पहुंचा दें। कृपया बता दीजिए कि आप इसके विषय में अततः क्या करना चाह रहे हैं। और शीघ्र इसे अपनी सीमातीत कृपा के लक्ष्य बनाकर मेरा भय दूर कीजिए।" अस्तु। यह अर्थ बताया जा चुका कि जब आळ्वार की आर्ति (दु.ख) बहुत बढ जाती, तब उनका स्वाभाविक आकार तिरोहित होता और दूसरों की भावना आती है; अर्थात् उनके श्रीमुख से अन्यापदेश की वाणी निकलती है। ऐसी वाणियों में अब तक दो दशक, माने "अञ्जिरय मडनाराय्" (१-४) और 'वायुन्तिरैयुकलुम्" (२-१) बीत गये, और प्रकृत "आडियाडि" दशक तीसरा है। इनमे से भी पहले के दो दशक नायिका की (अर्थात आळ्वार की ही) वाणी थी और प्रकृत दशक माता की वाणी (अर्थात् दूसरों की वाणी का आळ्वार-कृत अनुकरण) है। इन तीनों का विवेचन करने पर हम समझ सकते हैं कि इनमें क्रमश आळ्वार का दु ख बढ़ रहा है। तथाहि—पहले दशक में (१-४) स्त्रीभावना प्राप्त करने पर भी आळ्वार स्वस्थचित्त रह कर भगवान को दूत के द्वारा सदेश भेजने में समर्थ थे। दूसरे में (२-१) आळ्वार अपना विवेक खोकर, दूसरों को भी, भ्रमसे, अपनी भाति विरहातुर मान कर उनसे अपनी समवेदना प्रकट करते हुए रोने लगे। इससे स्पष्ट जाना जा सकता है कि उस समय आळ्वार की व्यथा बढ गयी थी। प्रकृत दशक में तो आळ्वार ऐसे दुरवस्थापन्न हो गये हैं कि वे अपना मुख खोलकर कुछ कह भी न सकते और दूसरों को ही उनकी इस दयनीय दुर्दशा का वर्णन करना पडा है। एव उक्त तीनों प्रकरणों म आळ्वार के दु.ख के कारणो का विवेचन करने पर भी हम स्पष्ट समझ सकते हैं कि आळ्वार का वर्तमान दु ख ही अत्यधिक है। तथाहि—उक्त तीनों दशको की अवतारिकाओ म उस उस दु.ख का कारण बताया गया है। उन कारणों की परस्पर तुलना करने से यह अर्थ स्पष्ट होता है कि प्रकृत दु.ख का कारण ही दूसरों से बलवान है; अतः इससे बननेवाला दु ख भी अधिक होगा। अब इस विषय में एक दृष्टात बतायेंगे। मान लीजिए कि तीन व्यक्ति एक जगह बैठ कर, अपनी सपत्ति खो जाने के कारण रो रहे हैं; और इनमें से एक ने एक कौडी खोयी, दूसरे ने सोने का एक टुकडा और तीसरे ने एक मूल्यवान रत्न खोया। यह बात तो सत्य है कि ये तीनों दु खी हैं, परतु क्या सबके दु.ख एक समान हो सकते हैं? नहीं; यह तो कहना ही पडेगा कि जिसकी खोई हुई वस्तु अधिक कीमतवाली हो, उसका दु ख अधिक होगा। अर्थात् कौडीवाले से सोनेवाले

का दुःख अधिक और रखवाले का दुःख उससे भी अधिक होता है। अब आळ्वार के प्रसक्त तीनों दुःखों का, इस दृष्टि से परामर्श करेंगे। (१) "अग्निरैव मडनाराय्" (१-४) में भगवान के श्रीपादों के अलाभ से आळ्वार को दुःख हुआ था; क्योंकि उसके पिछले दशक के अंतमें उनकी यह इच्छा प्रकट की गयी थी, कि "लोक का नाप करनेवाले भगवान के श्रीपादों से मिलूंगा;" अतः हम स्पष्ट समझ सकते हैं कि उसके अलाभप्रयुक्त दुःख का ही वर्णन आगेके दशक में किया गया। (२) प्रथमशतक के अंतमें आळ्वार ने तिरुक्कुरुङ्गुडि नामक दिव्यदेश के स्वामी भगवान के दर्शन करने की आशा प्रकट की; परंतु दर्शन नहीं मिले। फलतः आळ्वार दुःखी हो गये, जिसका वर्णन आगे के दशक में (२-१) प्रकाशित हुआ। (३) हाल में तो आळ्वार परमपदनिवासी नित्यमुक्तों से मिलने की आशा विफल होने के कारण दुःख पा रहे हैं। तथाच यह अर्थ हुआ कि आळ्वार के दुःखों के कारण, त्रिविक्रम भगवान, तिरुक्कुरुङ्गुडि के नाथ और भगवद्भक्तजन हैं। और यह भी स्पष्ट है कि आळ्वार के अभिप्राय में विभवावतार की अपेक्षा अर्चावतार श्रेष्ठतर हैं, और भगवद्भक्त उनसे भी श्रेष्ठ हैं। तथा च जब भगवान को भी भक्तों से मिलने पर अधिक आनंद और उनके विश्लेष में महान् दुःख होता है, तब श्रीशठकोपसूरी जैसे परमभक्तों के विषय में भी यदि यही बात हो, तो इसमें आश्चर्य ही क्या? इस विषय का—कि भक्तों के संश्लेषविश्लेषों से भगवान सुखदुःख पाते हैं—हमारे पूर्वाचार्य श्रीरामायण से एकैक सुंदर दृष्टांत देते हैं।

संक्षेपरामायण का एक पद्यखंड है—"गुहेन सहितो रामो लक्ष्मणेन च सीतया।" इसका अर्थ है कि श्रीरामचंद्रजी गुहदेव, लक्ष्मण व सीता इन तीनों से मिले। यहां पर प्रकरण के अनुसार इतना ही कहना था कि शृंगिबेरपुर पहुंचकर श्रीरामचंद्रजी भक्त गुहदेव से मिले। गुहदेव के साथ सीतालक्ष्मणों को भी मिला देने में किंचित् भी औचित्य दीखता नहीं। क्योंकि भगवान उनके साथ ही अयोध्या छोडकर बाहर पधारे थे, उनका मिलाप कोई नई वस्तु नहीं थी। फिर क्योंकर महाकवि ने इन तीनों को एकवाक्य में मिला दिया? इस पद्य का अत्यद्भुत व श्रीरामचंद्रजी के स्वभावानुसारी यह अर्थ आचार्यानुगृहीत है कि श्रीरामचंद्रजी ने गुहदेव से मिलने के बाद ही अपने को सीतालक्ष्मणों के सहित माना, उसके पूर्व में तो उन्हें उन दोनों के संयोग का ख्याल तक नहीं रहा। इस अर्थ का स्वारस्य समझना साधारण जनों के लिए कुछ कठिन होगा। अस्तु। यह तो कवि का वचन हुआ, अब इससे भी मधुरतर, स्वयं श्रीरामचंद्रजी का यह वचन सुनिए—"कदा न्वहं समेष्यामि भरतेन महात्मना। शत्रुघ्नेन च वीरेण त्वया च रघुनन्दन॥" यह आरण्यकाण्ड की कथा है। एक दिन लक्ष्मणजी ने श्रीरामचंद्रजी के समक्ष भरतजी की खूब प्रशंसा की। इससे उनके शुभगुणों की याद करते हुए और उनके विश्लेष से दुःखी होकर श्रीरामचंद्रजी ने प्रलाप किया कि, "हे लक्ष्मण! मैं महात्मा भरत, शत्रुघ्न और तुमसे कब मिलूंगा?" इत्यादि। अब जरा सोचिए कि स्वयं लक्ष्मणजी से ही, "मैं तुमसे, कब मिलूंगा?" कहनेका अभिप्राय क्या होगा। क्या लक्ष्मणजी भी अनुपस्थित थे? यदि यही बात हो, तो उनसे वार्ता कैसे की जा सकती है? फिर इस वाक्य का भाव क्या होगा? यहां पर भी हमारे पूर्वाचार्यों का व्याख्यान अत्यद्भुत है। तदनुसार, भरतविश्लेष के निमित्त दुःखी

श्रीरामचंद्रजी को यों लगा कि मैं अकेला ही रहता हू, मेरे साथ न तो भरतशत्रुघ्न रहते हैं; न वा सीता लक्ष्मण। अर्थात् भरतविश्लेषदु:ख से विवश बने हुए श्रीरामचंद्रजी अपने पास ही विराजमान सीतालक्ष्मणो को भी भूल गये और रोने लगे कि "हाय! हाय! मेरे सभी भाई और पत्नी मुझे अकेले छोडकर चले गये, अब मै उनसे कब मिलूगा!" (उक्त पद्य के चौथे पादमें विद्यमान चकार को अनुक्तसमुच्चायक मानकर, उससे सीतादेवी का ग्रहण करना चाहिए, अर्थात्, च—सीतया च, ऐसा अर्थ लगाना चाहिए।) अब इन दोनो श्रीरामायणवचनो को मिलाने से यह अर्थ सिद्ध होता है कि भागवतों के संयोगवियोगों से भगवान भी अत्यधिक सुखदु खों का अनुभव करते हैं। अत. ऐसे भागवतो के विरह में आल्वार को भी अत्यंत दु खी होकर, वार्ता करने में भी अशक्त होना, और दूसरों को उनकी दयनीय दशा का वर्णन करने को बाध्य होना, अत्यंत उचित सिद्ध हुआ; और यह अर्थ बतानेवाले हमारे आचार्यों की प्रज्ञा एव रसिकता सत्य ही वाचामगोचर है ॥  ....  . ..  ...  ....  *

(गाथा.) आडियाडि अहङ्कुरैन्दु * इशै पाडिप्पाडि कण्णीर्मल्हि * एङ्गुम्
नाडिनाडि नरशिङ्गावेन्ऱु * वाडिवाडुम् इव्वाणुदले ॥ १ ॥

अतिविलक्षणललाटशालिनी सेय मम दुहिता [पराङ्कुशनायिका] स्थितिगमनशयनादिषु व्यवस्थामन्तरेण स्थिता द्रुतहृदया भगवद्विषयकाणि मधुराणि कीर्तनान्यसकृत्कलयन्ती अश्रुपूर्णनयना भगवन्! सर्वासु दिशासु भवदागमननिरीक्षणपरा, अयि भो नरसिंहेत्याक्रुश्य भृश म्लायति हन्त!॥ (इति दुहितुरवस्थाविशेष माता निवेदयति।)

* आडियाडि * इति गाथोपक्रम परमशोभन:। असकृत नृत्यतीति तदर्थ। रामविश्लेषेण निषीदन्तीं कौसल्यादेवीमधिकृत्य कथनावसरे * नृत्यन्तीमिव मातरम् * इति हि कथितम्। स्थातु गन्तु शयितुमुपवेष्टु च शक्त्यभाव एव नर्तनपदेनादिश्यते। अथ मनस्तत्व द्रवीभूतमिति कथ्यते। तदिद मात्रा कथमवगतमिति चेत्, वचनव्यक्त्या किं न सुगममिदम्? [मधुराणि कीर्तनान्यसकृत्कलयन्ती] * मधुरा मधुरालापा किमाह मम भामिनी। एतेन खलु जीविष्ये भेषजेनातुरो यथा ॥ * इति भगवताऽप्याकर्ण्यकमधुरकीर्तनविचक्षणा खल्वियम्। [अश्रुपूर्णनयना] * किमर्थं तव नेत्राभ्या वारि स्रवति शोकजम्? * इति सीता पप्रच्छ मारुति.; इमामुद्दिश्य किं त्वया तथा न प्रष्टव्यम्? [सर्वासु दिशासु भवदागमननिरीक्षणपरा] * सा तिर्यगूर्ध्वं च तथा ह्यधस्तात् * इत्यशोकवनिकाया सीतेव सर्वतोऽपि निरीक्षते। गजेन्द्रप्रह्लादादिभक्तत्राणार्थं यथा समागत. तथा समागच्छेत्ननु! इति प्रत्याशया सर्वत. प्रेक्षते। [अयि भो नरसिंहेत्याक्रुश्य] असुरबालक एवानुग्राह्य इति किं ते निर्बन्ध? [भृशं म्लायति] आत्यन्तिकविलोपे तु पुनरुद्धारो दुष्कर.; म्लाने. परिहरण सुशकमित्यवेहि। प्रत्याशाबलेन जीवित धारयतीति मन्यस्व ॥  ....  ....  (१)

—※ पहली गाथा—आडियाडि अहङ्करैन्दु ※—

(हिंदी.) उज्वलललाटवाली यह मेरी पुत्री (श्रीपरांकुशनायिका) व्यवस्था के विना बारबार लेटना, बैठना उठना इत्यादि व्यापार करती है; इसका मन भी पिघल गया; यह बारबार भगवन्नामों का ही सुमधुर गान कर रही है; इसकी आँखें आँसू से भरी हैं; चारों ओर (उनके आगमन की प्रतीक्षा करती हुई) दृष्टि फिराती है; और हे नरसिंग भगवन्! पुकारती हुई बहुत म्लान हो रही है॥ (माताजी इस प्रकार अपनी पुत्री की अवस्था का वर्णन करती हैं।)

गाथा के उपक्रम मे [आडियाडि] शब्द बडा मनोहर है। उसका वाच्यार्थ है बारबार नर्तन करती हुई। नर्तन शब्द का अर्थ है अगोपागों को हिलाते रहना। दु.खाक्रात नायिका तो एक अवस्था में स्थिर नहीं रह सकती, किंतु बारबार लेटती है, बैठती है, उठती है और फिर लेटती है। देखनेवालों को ऐसा प्रतीत होता है कि शायद यह नाच रही है। श्रीरामलक्ष्मणसीताओं के वनवास के लिए प्रस्थित होने पर अत्यत दु.खी कौसल्यादेवी के बारे म वाल्मीकि महर्षि कहते हैं कि "नृत्यन्तीमिव मातरम्।" इसके अनन्वित व्यापार व प्रलाप देखने पर प्रतीत होता है कि इसका मन सर्वथा द्रवीभूत हो गया है। [सुमधुर गान कर रही है।] लका से लौटे हुए, सीतासदेशहारक हनुमान जी से श्रीरामचद्रजी ने पूछा कि, "कहो हनुमन्! मधुरवाणी मेरी सीता ने क्या कहा; यही बात मुझ मुमूर्षु को संजीवित करनेवाला औषध है।" अब माताजी कहती है कि इसी प्रकार मेरी पुत्री भगवान को भी अति मधुर लगनेवाली वार्ता करती है। [इसकी आँखें आँसू से भरी हैं] अशोक वन म विराजमान सीतादेवी से हनुमानजी ने पूछा कि, "हे देवि! आपके नेत्रो से क्योकर शोकाश्रु बह रहा है?" प्रभो! मेरी पुत्री से क्या आपको यही प्रश्न न करनेका है? [चारों ओर दृष्टि फिराती है] सर्वदा भगवान की राह देखती हुई, यों मानती हुई कि, "न जाने कब, कौन-सी दिशा से भगवान पधारेंगे; वह समय चूकना अनुचित है," यह आठों दिशाओ में अपनी दृष्टि दौडाती है। यथा अशोकवनिका में शिंशपावृक्ष के ऊपर बैठकर हनुमानजी की कही हुई श्रीरामकथा सुनकर प्रसन्न व चकितचित जानकीजी ने, यों सोचती हुई कि, "यह विलक्षण शब्द किधर से निकला?" समस्त दिशाओ मे आँखें चलायीं। इसकी यह आशा है कि भगवान गजेंद्र के रक्षार्थ जैसे अकस्मात् उसके सामने प्रकट हो गये, इसी प्रकार, वे कहीं से मेरे सामने भी अचानक प्रकट हो जायगे। अत: सर्वत्र देख रही है। [हे नरसिंग भगवन्!] हे प्रभो! क्या आपको ऐसा भी कोई निर्बंध है कि असुरबालक पर ही कृपा करना, न तु अबला पर? [बहुत म्लान हो रही है] थोडी देर में ही यह पूर्णतया सूख जानेवाली है। ऐसा हो जानेपर इसे पुनः जिलाना अशक्य होगा। अब तो आपसे मिलने की एकमात्र आशा से थोडी जीवित रहती है। अतः निराशा से इसके शरीर के छूट जानेसे पहले ही आप इस पर कृपा कीजिएगा॥ .... .... .... - (१)

(गाथा.) वाणुदलिम्मडवरल् * उम्मैकाणुमाशैयुळ् नैहिन्राळ् * विरल्
वाणनायिरम् तोळ्तुणिचीर् * उम्मैकाणनीरिरक्कमिलीरे ॥ २ ॥

विलक्षणफालशालिनी सेयं मम सुता सुन्दरी भवतो दिदृक्षया प्रशिथिलावयवा ताम्यति हन्त!, प्रबलबाणासुरभुजसहस्रविदारणविदग्ध! भवन्तं प्रदर्शयितुं दयाविहीनोऽसि कथम्?

अथस्तनगाथायामिव अस्यामपि गाथायां ललाटशोभाभूमा कीर्त्यते। * रूपमेवास्यैतन्महिमानं व्याचष्टे * इति श्रुतिः स्मार्यते। अस्या मुखशोभा ननु भवतोऽपि प्रेक्षणीयेत्युक्तं भवति। [भवतो दिदृक्षया ....] भवत्स्पृहणीयदर्शना सेयं हन्त! भवन्तं दिदृक्षते। नेयं तव परिष्वङ्गं कामयते, केवलं दर्शनमेव काङ्क्षति। [प्रबलबाणासुरेत्यादि।] बलिचक्रवर्तिनस्सकाशात् जातस्य बाणासुरस्य दुहिता उषानाम्नी कदाचिन्निशीथे केन चिदतिसुन्दरेण पुरुषेण सह स्वस्य सङ्घटनं स्वप्ने मत्वैव स्वप्राणसहर्षं चित्रलेखायै निवेद्य, श्रीकृष्णस्य पौत्रः प्रद्युम्नस्य पुत्रोऽनिरुद्ध एव स पुमानिति तया सख्या मद्गायकया कथितं विज्ञाय महताऽपि वा प्रयासेन सोऽत्रानेतव्य इति तामेव प्रार्थयत। सा च स्वाभ्यस्तयोगविद्यामहिम्ना द्वारकापुरीमधिगत्य तत्र स्थितमनिरुद्धं बलादानीय स्वनीयेशदुषाया अवरोधं। सा च तेन सह रममाणाऽवर्तत। तमिममुदन्तमवगच्छन् बाणासुरः कोपकषायिताक्षो ऽनिरुद्धं नागास्त्रबद्धमचकरत्। एतादृश्यामवस्थायां स्थितायाम्, द्वारकायामनिरुद्धमपश्यन्तश्चिरमन्विष्याप्यलभमाना यादवा वैयाकुलीचित्तहृदया नारदेन महर्षिणा वृत्तान्तं विबोधिता भगवन्तं कृष्णं प्रार्थयन्ते स्म। वासुदेवश्च सद्यो गरुडारूढः प्रस्थाय बाणासुरराजधानीं शोणितपुरीमधिगच्छन् तदाने योद्धुमभिद्रुतान् बाणासुरगृह्यपरिपालनतत्परस्य परमशिवस्य प्रमथगणान्निरस्य * नन्दि यानन्दशून्ये गलति गणपतौ व्याकुले बाहुलेये चण्डे चाकिञ्चकुण्ठे प्रमथपरिषदि प्राप्तवत्यां प्रमाथम्। उत्थितोऽसौ बलिज बलिजभुजवनं यो ददावादिभिश्चोर्मिभिश्चा तं प्राणलं मं भवदकुशलं कृष्णहेतिः क्षिणोतु ॥ * इति श्रीसुदर्शनशतकोक्तरीत्या रुद्रपरिवारदेवतासर्वा अपि कान्दिशीकता प्रापय्य, देवतान्तरभजनप्रवणानामिदमेव हस्तगतं फलमिति प्रथयितुकाम इव हेतिराजेन बाणस्य भुजानुच्छिद्य अथ प्रणतस्य रुद्रस्य प्रार्थनया त्रिचतुरबाहुमात्रावशेषम् अविनष्टप्राणं च तं निधाय विनयश्रिया द्वारकां प्रतिनिववृते—इत्येषा बाणासुरभङ्गकथा। भगवन्! भवदनुप्रवृत्तिविरोधिनिबाहुल्ये सत्यपि बाणासुरदोर्वनलवननिपुणस्य भवतः किमायाससाध्यं तन्निरसनम्? इति प्रश्ने पर्यवस्यति प्रकृतकथाभिधानम्। "परमशक्तियुक्तस्य तस्य मद्रक्षणं किं नु भरः" इति कथयति मम दुहिता—इत्युक्तप्रायम् ॥

—* दूसरी गाथा—वाणुदलिम्मडवरल् *—

(हिंदी) उज्ज्वलललाटवाली, मुग्धा यह मेरी पुत्री आपके दर्शन पाने की उत्कंठा से बहुत शिथिलगात्रा बन रही है। बलवान वाणासुर के हजार भुज काट डालनेवाले हे प्रभो! क्योंकर आप इसे अपने दिव्यदर्शन देने की कृपा नहीं कर रहे हैं?

पिछली गाथा की भांति प्रकृत गाथा में भी नायिका के ललाट का वर्णन करनेवाली माताजी का शायद यह भाव है कि "हे प्रभो! आप यहां पधार कर इस कुमारी के सारे वैभव के प्रकाशक, इसके ललाट के दर्शन तो करीए सही।" [आपके दर्शन पाने की] यद्यपि आपको ही इसके दर्शन करने

चाहिए; इसके बदले में अब यही आपके दर्शन करना चाह रही है। अथवा अब यह आपके दर्शनमात्र चाह रही है, न तु आलिंगनादि; क्या आप यह भी न दे सकते? [बलवान बाणासुर] इत्यादि। बाणासुरभंग की यह प्रसिद्ध कथा है—बलिचक्रवर्ति के वंशज बाणासुर की पुत्री उषा ने एक दिन सपने में अपने से मिलते हुए एक सुंदर पुरुष को देखा और उसे प्राप्त करना चाहा। उसकी सखी चित्रलेखा ने सदुपायों से समझ लिया कि वह पुमान् श्रीकृष्ण के पौत्र अनिरुद्ध था, और योगविद्या के प्रभाव से उसे द्वारका से उठाकर लाया और उषा के अंतःपुर में छोड दिया। दोनों सानंद काल बिताते रहे। कुछ समय के बाद बाणासुर को इसकी खबर मिली, और क्रुद्ध होकर उसने अनिरुद्ध को नागपाश मे बांध कर कारागार में रख दिया। इधर द्वारकाजी में अकस्मात् अनिरुद्ध के अदृश्य हो जानेसे और बहुत ढूंढने पर भी न मिलने से सारी यादव-मंडली चिंताग्रस्त हुई थी। इतने में नारदजी के द्वारा उन्हें अनिरुद्ध का समाचार अवगत हुआ। श्रीकृष्णने तुरंत गरुडारूढ होकर बाणासुर की राजधानी शोणितपुरी पहुंच कर उसे युद्ध करने का आमंत्रण दिया। बाणासुर स्वय बलवान था ही; तदुपरात सपरिवार महादेव उसकी रक्षा करने के लिए सदा उसके गृहद्वार पर विराजमान थे। ये सभी श्रीकृष्ण के साथ लडने आये; परंतु सब के सभी हार कर भाग खडे हुए। फिर श्रीकृष्ण अपने चक्रायुध से बाणासुर के एक हजार भुज काट कर, उसका संहार करने को तैयार हो गये। इतने में महादेव ने अपने भक्त उस असुर के लिए प्राणभिक्षा मागी। उस प्रार्थना का अंगीकार करते हुए श्रीकृष्ण ने चार भुजों के साथ बाणासुर को छोड दिया; फिर अनिरुद्ध व उषा के साथ आप सानंद द्वारका पधारे। अब इस वृत्तांत का स्मरण करनेवाली माताजी का यह अभिप्राय है कि, "प्रभो! यद्यपि मेरी पुत्री के, आपकी प्राप्ति में प्रतिबंध करने वाले बहुत पाप रहते होंगे; तथापि, बाणासुर के हजार भुज काटनेवाले आपको उन पापों के समूल, मिटा देने में कितने आयास और विलब लगते होंगे? अर्थात् मेरी पुत्री कह रही है कि परमशक्तिमान भगवान क्या अकेली मेरी ही रक्षा नहीं कर सकते?" .... .... .... .... .... (२)

(गाथा.) इरक्कमनत्तोडु एरियणै * अरकुमेल्लडुमोकुमिवळ् *
इरक्कमेळीर् इदर्कॆन् शेय्हेन् * अरकनिलङ्गै शेदीरुक्के ॥ ३ ॥

आर्द्रहृदया सेयं मम सुता वह्निसन्निहितजतुमधूच्छिष्टनिर्विशेषा हन्त! दयनीयाया अस्याः कृते निर्दयो हि भवान्। सीतायाः कृते रावणपुरीं लङ्कां भस्मसात्कृतवतो भवतोऽस्या विषये जातामुपेक्षां कथमिव परिहर्तुं क्षमाऽहम्॥

भगवन्! * राजानो बहुवल्लभा * इत्युक्तरीत्या भवान् भूयसीषु वल्लभासु स्पृहयालुः प्रथितः। सर्वासु तासु समरूपवर्तनं हि न्याय्यम्। पुरा सीतावियोगे त्वं कथमासीरिति किं ननु न स्मरसि। * अनिद्रस्सततं रामः सुप्तोऽपि च नरोत्तमः। सीतेति मधुरां वाणीं व्याहरन् प्रतिबुध्यते॥ नैव दंशान् न मशकान् न कीटान् न सरीसृपान्। राघवोऽपनयेद्गात्रात् त्वद्गतेनान्तरात्मना॥ * इति हनुमदुक्तियोग्य. खल्वासीः। तथाविधस्त्वमधुनास्यामुपेक्षणपरो हि वर्तसे। अस्याः कृते लङ्कापुरविध्वंसनसेतुबन्धनादिप्रयासो नानुभाव्यः। ' मद्विरहेण एवं खलु

शोचनीयम्' इति दयार्द्रहृदयप्रकाशनात्ते नात्यतिक्रमप्यपेक्षितम्। प्रेमार्द्रायामस्यां दयार्द्रचित्तत्वं किं नावश्यकं भवतः? सेयमनवरतमिदमेव कथयति "सीतायाः कृते अतिमानुषचेष्टितानि कृतवान्मम पतिः किमित्यधुना मामिवमुपेक्षते?" इति। कथमहं तत्र करुणामुत्पादयितुं प्रभवामि। (इति माता वदति ॥) .... (३)

—* तीसरी गाथा—इरुकमनचोंडेरियणै *—

**(हिंदी.) पिघले हुए मनवाली यह मेरी पुत्री अग्नि से मिली हुई लाह अथवा मोम के सदृश बन गयी है; आप तो अब भी इसके प्रति दया नहीं कर रहे हैं; सीतादेवी के लिए रावण की राजधानी लंकापुरी को जला देनेवाले आपकी इस मेरी पुत्री के बारे में समुत्पन्न उपेक्षा दूर करने के लिए मैं कौन सा उपाय कर सकूंगी?**

इस गाथा में माताजी फिर विनती करती हैं—यद्यपि आपकी प्रियाएँ बहुत रहती हैं; तथापि आपको उन सब से एक प्रकार प्रेम करना आवश्यक है। क्या आप सीताविश्लेष समय की अपनी दुरवस्था भूल गये जिसका बडा रोचक वर्णन हनुमानजी से यों किया गाया, कि "श्रीरामचद्रजी निद्रा नहीं लेते; और कदाचित् लेट कर थोडी नींद आने पर भी मधुर वाणी से 'हे सीते' पुकारते हुए जाग उठते हैं; और अपनी प्रेयसी के ही ध्यान में मग्न होने के कारण, वे अपने शरीर पर आक्रमण करनेवाले मशक, मत्कुण, बिच्छू, साप इत्यादियों का ख्याल तक नहीं करते," इत्यादि। ऐसे महान प्रणयी आप, अब इसकी उपेक्षा कर रहे हैं। इसके लिए आपको लंकाविध्वंसन जैसा क्लेश उठाने की आवश्यकता नहीं रहती; किंतु "मेरे विरह में यह कैसी दु.खी हुई है।" कह कर किंचित् दयाभाव रखना पर्याप्त है। जब आपके प्रति यह प्रेमार्द्रचित्ता बन बैठी है, तब क्या इसके प्रति आपको दयार्द्रचित्त नहीं होना चाहिए? यह तो सर्वदा यही रट रही है कि, सीतादेवी के लिए अतिमानुषकृत्य करनेवाले मेरे स्वामी अब क्योंकर मेरी उपेक्षा कर रहे हैं!" यदि आप स्वयं कृपा न करेंगे, तो मैं कौन-से उपाय से उसे उत्पन्न कर सकूंगी? अर्थात् मेरे पास ऐसा कौन-सा साधन है, जिससे मैं आपको कृपावान बना सकूंगी? कुछ नहीं। .... .... (३)

(गाथा.) इलङ्कै शेत्तवनेयेन्नुम् * पिन्नुम् वलङ्कोळ् पुळ्ळुयर्त्ताय्एन्नुम् * उळ्ळम्
मलङ्ग वेव्वुयिर्क्कुम् * कण्णीर्मिह कलङ्गि कैतोळुम् निन्निवळे ॥ ४ ॥

सैषा मम सुता मत्सपत्न्या मैथिल्याः कृते कृतलङ्कापुरविध्वंस भो! इत्याम्रेडयति। बलाढ्यपतगराजवाहन भो इति चाचष्टे। विश्लथहृदया सती उष्णमुष्णं निःश्वसिति। अश्रुप्रवाहभरिता कलुषितमतिरवतिष्ठते। अस्यामप्यवस्थायां बद्धाञ्जलिपुटैवास्ते ॥

अधस्तनगाथायां लङ्काविध्वंसनकथाप्रस्तावं दुहित्रा कृतमनुवदति स्म जननी। दुहितरं बोधयतिस्म च सा—'अयि बालिशे! त्रेतायुगे खलु लङ्काध्वंसनवार्ता; सा प्रामाणिकी न वेति को नु वेद? तत्कथाविचिन्तनेन मा त्वं विह्वला भूः' इति। "सा प्रामाणिकी न वेति को नु वेद" इति मातुर्वचनमसहमाना

पराङ्कुशनायिका 'अयि! जननि! मत्सविधे मास्म कथयत्त्वमेवंविधां वाचम्; यद्यप्यहमभाग्योपहृता स्याम्; तथाऽपि तत्कथासप्रामाण्यशङ्कनगर्भमपि नाहं सहेय; कृतलङ्काध्वंस एव मम पतिः' इति सुदृढं वक्तीति वदति जननी। 'दवीयसि देशे वर्तमानस्स इदानीं कथमत्रागन्तुं प्रभवति? मनागिव्दम्बस्सह्यतां नाम' इति मयोक्ते, गजेन्द्ररक्षार्थं श्रीवैकुण्ठात् सरसतीरं तमानीतवान् पतगराडिदानीं कुत्र गतः?' * उपस्थित तेन पुरो गरुत्मता खरप्रिसमर्दकिणाङ्कशोभिना * इत्युपश्लोकितस्स तार्क्ष्यस्सदा पुरत एव कुतस्थित्वे, इष्टागमनसमय एवात्रागन्तुं तस्य कः प्रत्यूहः?' इति कथयति दुहितेत्याह। तार्क्ष्यमारुह्य सरभसमागच्छेदिति विलम्बेन खिन्ना सुता तार्क्ष्यपक्षतिध्वनेरश्रवणेन * दहन्तीमिव निश्वासैश्शश्वत् पङ्कजपाणिम् * इत्युक्तरीत्या दीर्घमुष्णं च नि श्वसिति तथा, यथा हि मनसः शैथिल्यमतितरां प्रतीयेत। बाष्पपर्याकुलेक्षणा च प्रेक्ष्यते। भगवन्! अस्याः प्रेक्षणं तव तावदलब्धलाभो ननु; * ददृश्वत्सर्वदेहेभिरिति किं न जानीषे?' एवं नाम मनसि कलुषिते सत्यपि अञ्जलिबन्धं न तावद्विजहाति। स्वभावविपर्यये जातेऽपि स्वरूपविपर्ययो नैव जात इत्युक्तं भवति॥ .. (४)

## —* चौथी गाथा—इलङ्गै शेत्तवने येन्नुम् *—

**(हिंदी) यह मेरी पुत्री वारवार पुकारती है कि, हे (मेरी सपत्नी सीतादेवी के लिए) लंकानगरी का ध्वंस करनेवाले! हे नलिएगरुडध्वज! और बहुत क्षीर्णहृदया होकर गरम श्वास छोडती है; और आँसू बहाती हुई कलुषितबुद्धिवाली होकर हाथ जोडकर वैसी ही स्तब्ध खडी रहती है॥**

पिछली गाथा में माताजी ने नायिकाकथित लंकाध्वसनवृत्तात का अनुवाद मात्र किया था। उसके बाद उन्होंने कहा, कि, "बेटी! लंका का विनाश तो त्रेतायुग की कथा है और यह भी शंका करने की है कि वास्तव में वह सच्ची घटना है, कि नहीं। अतः अब उसका रटन करती क्योंकर दुःख पा रही हो?" यह वचन पराङ्कुशनायिका को असह्य हुआ और वह तुरत बोली, "माँजी। यद्यपि मैं ऐसी निर्भाग्य बन बैठी हूं कि मेरे स्वामी मुझपर कृपा न दिखा करते। तथापि लंकाध्वसवृत्तात कैसे मिथ्या हो सकता है? निश्चय ही मेरे स्वामी ने लंका का विध्वंसन किया था।" फिर माता बोली, "अस्तु, अवश्य ही भगवान तुम पर भी कृपा करेंगे; किंतु थोडी देर का विलंब सहो। उन्हे स्वस्थान से निकल कर इधर पधारने का अवकाश दो तो सही। सीताजी भी महिनों तक उनकी प्रतीक्षा करती हुई अशोकवनिका में शाति से बैठी थी न? तुम क्यों ऐसे छटपटाती हो?" नायिका ने इसका प्रत्युत्तर दिया—"माँजी! वह अवतार का समय था, जब भगवान को तत्कालोचित अनेक निर्बंधों के परवश होने पडे। अब तो ऐसी कोई भी पराधीनता नहीं रहती। आपके वाहन गरुडजी आज्ञाप्रतीक्षी होकर सर्वदा सामने ही विराजते हैं। उन पर चढकर इधर पधारने में उन्हे कितना समय लगेगा? गजेंद्र की रक्षा करने के लिए, उसका आर्तनाद सुनते ही, दूसरे क्षण में क्या आप उनके सामने प्रकट नहीं हुए?" अब माताजी इस संवाद का विवरण करती हुई भगवान से यह विनती कर रही है कि—इसकी यही आशा थी कि आप गरुडारूढ होकर यहा पधारेंगे। परंतु अब, जब गरुडजी की ध्वनि भी सुनने न मिली, यह वर्णनातीत खेद के साथ ऐसे लगे,

लवे और गरम गरम श्वास छोडती है जिससे इसका हृदय सुतरा शिथिल हो गया; आँखें आँसू से भर गयीं। शास्त्र कहता है कि भक्तिबलात्कार से शरीर के ऐसे विकार पानेवाले महात्माओं के दर्शन हमारे अवश्य कर्तव्य है। फिर क्या आप इसके दर्शन नहीं करते? क्या यह आपके लिए महान पुरुषार्थ नहीं? इस प्रकार अत्यंत विषण्ण व शिथिलमनस्क होने पर भी यह हाथ जोडना नहीं छोडती; अर्थात् दुःख से इसका स्वभाव ही कुछ बदल गया; स्वरूप तो जैसे-के-तैसा ही रहता है॥ .... (४)

(गाथा.) इवळ्ळिराप्पहल् वायूवेरी इ * तन कुवळैयोणू कण्णनीकोंण्डाळ् * वण्डु तिवळुम् तण्णन्तुळाय् कोडीर् * एन तवळ्वण्णर् तडवुहळे ॥ ५ ॥

इयं मे दुहिता नक्तंदिवं यद्वा तद्वा प्रजल्पन्ती स्वकीये कुवलयोपमे अक्षिणी अश्रुपूर्णे बिभर्ति। मधुपानलोलुपभ्रमरसंभृता शिशिररुचिरतुलसीस्रजं नानुगृह्णासि भगो। परमकारुणिकस्य तव करुणापरिणाहः अहह! कीदृशः॥

शोकमंतमालामस्ति प्रकारद्वितयम्, केचन समुद्वेलम प्रमुषितचैतन्याः स्तब्धा अवतिष्ठन्ते। अन्ये तु स्तब्धा वर्तितु मशक्नुवन्तो यद्वानद्वा अन्वितमनन्वितं वा प्रलपन्ति, प्रलापस्स तावदन्वितो वा भवत्वनन्वितो वा, सर्वथा कर्णामृत तदेव भक्तानाम्। * अत्यन्तभक्तियुक्तानां न शास्त्रं नैव च क्रमः * इत्युक्तरीत्या शास्त्रमर्यादां क्रमिकपद्धतिं चातिक्रम्य प्रसर्पन्तो वाग्व्यवहारा स्सकलशास्त्रार्थसारसंग्रहभूता एव स्यु। भगवन्! अस्या मम कुमार्या दिवा निशि च मुखत प्रसरन्त प्रलापा अवश्य भवता श्रोतव्या ननु। त एव प्रलापाः सहस्रगीत्यात्मना परिणमन्तीति ध्येयम्। इदमित्थं वक्तव्यमिति सङ्कल्पपूर्वक व्यवह्रियमाणासु वाक्षु न कोऽपि रसो वर्तेत। स्वात्मान विस्मृत्य कथ्यमानेषु वचस्स्वेव रसपरिपोष इति प्रतिपत्तव्यम्। [**स्वकीये कुवलयोपमे अक्षिणी अश्रुपूर्णे बिभर्ति**] इमां ये ये पश्यन्ति, तैर्हि भवितव्यमश्रुपूर्णनयनैः। तादृशी खलु परमभक्ताना परिस्थितिः। भगवन्! यदि त्वमप्यागत्यावेक्षेथा, सद्य त्वमप्यश्रुपूर्णनयनो भवितासि। किं मया कर्तव्यमिति यदि पृच्छसि, नन्विदमेव कर्तव्यम्। मुखरभ्रमरपरिवृतस्वकीयदिव्यतुलसीप्रदानमेव। विरहज्वरेण म्लानामदसीयां मालिकां वक्षस उद्वास्य स्वकीयशिशिरमालिकार्पणेनानुगृहाण। अनया वाचा संक्षेप एवापदिश्यत इति वेदितव्यम्। अन्तत. [परमकारुणिकस्येत्यादि।] कृपालुर्दयालु कारुणिक इति प्रथितस्य तव दया कुत्र निलीना? इति पृच्छति मातेति गोविन्दभट्टारका अभिदधिरे। भवादृशास्त्विचतुरा शिष्टास्सन्ति चेत् अवलाना जीवित सम्यगेव समुल्लसेदहह! इति श्रीपराशरभट्टार्या। भगवत करुणामुपालभते मातेति यावत्॥

—* पांचवी गाथा—इवळ्ळिराप्पहल् वायूवेरीइ *—

(हिंदी.) यह मेरी पुत्री रातदिन जो मुँह में आया सो प्रलाप कर रही है; इसकी कुवलय के सदृश आँखें आँसू से भर गयी हैं। आप तो इसे मधुपानमत्त-भ्रमरपरिवृत सुशीतल व सुमनोहर तुलसीमाला का प्रदान नहीं करते। हाय! आपकी कृपा कैसी होगी?

अत्यंत शोकमग्न जन दो प्रकारके होते हैं; कोई कोई मोह पाकर ऐसे स्तब्ध रह जाते हैं कि मानों उनका चैतन्य ही नष्ट हो गया; दूसरे कोई स्तब्ध रहने में भी अशक्त होकर मन-माना प्रलाप करते हैं। इस प्रलाप का कोई अर्थ होगा कि नहीं, यह बात दूसरी है। जो भी हो; अत्यंत प्रेम का कार्य होने से, वह सुनने में बहुत मधुर रहेगा। शास्त्र भी कहता है कि "अत्यन्तभक्तियुक्ताना न शास्त्र नैव च क्रमः" माने, सीमातीत भक्तिमानो के व्यवहार, समस्तशास्त्र, क्रम इत्यादियों के परे होते हैं। तथापि ऐसी बातों में ही सकल शास्त्रार्थों का सारसर्वस्व गर्भित रहता है। हे प्रभो! क्या आप इस मेरी कुमारी के मुख से रातदिन निकलनेवाले ऐसे प्रलापा सुनना नहीं चाहते? आपको अवश्य ही इन्हें सुनने चाहिए। ये ही प्रलाप सहस्रगीति का रूप धारण करते हैं। जो बात वक्ता के संकल्प व प्रयत्नपूर्वक की जाती है, उसमें प्रायः कोई रस नहीं होता; इसके बदले में, भावावेश में आकर, अपने को भी भूलकर वक्ता जो कुछ कहे वही रसमयवाणी होगी। [इसकी कुवलय के सदृश ऑंखें ऑंसू से भर गयी हैं।] वस्तुतः इसके दर्शन करनेवालों के नेत्रों में ही भक्तिबलात्कृत आँसू निकलना चाहिए। प्रभो! यदि आप अब यहां पधारकर इसकी दशा देखेंगे तो आपके नेत्रो में भी पानी भर जायगा। यदि आप पूछेंगे, कि अब मुझे क्या करना चाहिए, तो समझ लीजिए कि आपको दूसरा कुछ क्लेश उठाने का नहीं; किंतु अपनी तुलसीमाला का प्रदान करना पर्याप्त है। समझ लेना चाहिए कि तुलसीदाम का अर्थ श्लेष ही है। [परमकारुणिक] इत्यादि। लोग आपको कृपावान, दयामय, कारुणिक इत्यादि कह रहे हैं, ऐसे प्रसिद्ध आपकी दया अब किधर चली गयी?—यह श्रीगोविंद स्वामीजी का अर्थवर्णन-प्रकार हुआ। श्री पराशर भट्टार्य स्वामीजी का विवरण यह है—माताजी भगवान से कहती हैं कि 'आपके जैसे दो चार व्यक्ति यदि इस धरातल पर रहा करें तो अवलाओं की बहुत अच्छी हालत होगी!' अर्थात् प्रेयसियों की उपेक्षा करनेवाले आपके विषय में प्रेम करनेवाली अवलाओं को अपने प्रेमके विफल होने के कारण मरना ही पडेगा, जीवित रहने की आशा तक नहीं रहती। तथाच यह तात्पर्य निकला कि माताजी भगवान की कृपा की दिल्लगी उड़ा रही हैं॥ ... (५)

(गाथा.) तह्वुडैयवने एन्नुम् * पिन्नुम् मिहविरुम्बुम् पिरानेन्नुम् * एनदु
अहवुयिर्क्कमुदे एन्नुम् * उळ्ळम् उहवुरुहिनिन्रुळ्ळुळे ॥ ६ ॥

(स.) मम पतिर्दयालुरेवेत्याम्रेडयति मम दुहिता। भावनाप्रकर्षेण समुपस्थित मत्वा प्रकाशयति महान्तमभिनिवेशम्। परमोपकारक खल्वसाविति प्राह। मदन्तरङ्गस्य दिव्यामृतभूत, भो भगवन्नित्याह्वयति। सर्वथान्तरङ्गस्य द्रवीभूततामाविष्करोति। एवमेवमस्या वक्तव्या स्थितिर्वाचामभूमिर्हन्त॥

अधस्तनगाथाया भगवति नैर्घृण्यमाशङ्कित जनन्या। तन्न सोढु शशाक दुहिता। ततस्सा प्राह—उदधावुदक शुष्यति स्मेतिवत्, हन्त! किमेतद्वच.! परितापसीम्नि स्थिता वैदेह्यपि देवी रघुनन्दनं भगवन्तं निरनुक्रोश वक्तुं नोदजिहीत। परन्तु * निरनुक्रोशशङ्के मद्भाग्यसङ्क्षयात् * इत्येव खल्वाह। तथा अस्मदीय दौर्भाग्यमेव ननु शोचनीयम्; आ! कृपाया अकूपारे तस्मिन् मम पत्यौ कथमिव नैर्घृण्य वदसि

मम जननि! इति मामधिक्षिप्य दयालुरेव न इति मुहुर्मनिश्चते मम सुतेति कथयति माता। अस्यामप्यवस्थायां स्वस्मिन्नेव मम मनो व्यासक्तं कुर्वाणो भगवान् कथमिव निर्दयत्वेन दूषणमर्हतीति दुहितुराशयः। अनुपस्थितमपि तमच्युतं भावनाप्रकर्षेण सन्निकृष्टं मन्यमाना, 'दयित! आगतोऽसि वा! आयाहि; तल्पमधिशेष्व' इति कथयन्ती आदरातिशयमाविष्करोति च। भ्रान्ताया मदीयाया मातुः निर्दयत्वोक्तेरवकाशलेशमप्यप्रदाय सहसा मुपसन्निहितोऽसि भगवन्! हन्त कोऽयमुदारभावः! इति तस्योपकारातिशयमावष्टे च। मम प्रत्यगात्मनो दिव्यामृतं त्वमेव नन्वसीति वक्ति च। एवमेवं द्रुतहृदयाया अस्याः परिस्थितिं कथमहं कथयामि! .... (६)

—* छठीं गाथा—तहृवुडैयवने येन्नुम् *—

**(हिंदी.) मेरी पुत्री वारवार कहती है कि 'मेरे पति दयावान ही हैं'; अपनी भावना से उन्हें सामने विराजते हुए मानकर, उनके प्रति अत्यधिक कुतूहल दिखाती है; यों कहती है कि "आप तो वहुत उपकारक हैं"; और यों पुकारती है कि 'हे मेरी आत्मा के अमृतस्वरूपिन्!' इसका हृदय सर्वथा द्रवित हुआ। ऐसी इसकी दशा का वर्णन करना भी अशक्य बना है॥**

पिछली गाथा में माताजी ने भगवान को दयाशून्य कहा। नायिका को यह वचन बहुत बुरा लगा। अतः उसने कहा "मांजी! तुम यह क्या कह रही हो? क्या सागर में कभी पानी सूख जायगा? अशोकवनिका में रहती हुई सीताजी ने भी अत्यंत दुःख से आत्महत्या करने का विचार करती हुई भी इतना ही कहा "निरनुक्रोशशङ्के मद्भाग्यसंक्षयात्" (अर्थात् मेरे दौर्भाग्य की बात है कि अब मैं प्रभु के दयाशून्य होने की शंका कर रही हूं); न तु स्पष्टतया उन्हें निर्दय कहा। अतः अब मैं अपने दौर्भाग्य के फलतया ही दुःख भोग रही हूं। इस लिए कृपासागर भगवान को निर्दय कहना तो सर्वथा अनुचित है।" इस प्रकार मुझे डाँटती हुई, यह उनको दयामय ही बताती है। नायिका का यह अभिप्राय है कि ऐसी दशा में भी (अर्थात् कठोर विरहदुःख देते हुए भी) मेरे मन को अपने में ही संसक्त करनेवाले भगवान कैसे निर्दय कहे जा सकते? परोक्ष रहने पर भी उनको स्वकीय-भावनाप्रकर्ष से सामने विराजमान मानकर उनसे सकुतूहल ऐसी मीठी मीठी वार्ता करती है कि, "हे मेरे प्राणवल्लभ! अंततः आप पधार गये न! विराजिए; इस शय्यापर आराम कीजिए" इत्यादि। उनके कृत महान उपकार की, इस प्रकार प्रशंसा करती है कि, "प्रभो! मेरी माता भ्रांतचित्त होकर आपको निर्दय कहना चाहती थी; परंतु सुदैव की बात है कि आप उसे यह निंदा करने का अवकाश न देते हुए यहां पधार गये। ओह! आप कैसे महोपकारक हैं!" और यह भी कहती है कि प्रभो! आप ही मुझे अमृत के समान परमभोग्य हैं। इस प्रकार रटती हुई, द्रुतहृदया इस मेरी पुत्री के वारे में मैं क्या कह सकती हूं? .... (६)

(गाथा.) उळ्ळुलावि उलर्न्दुलर्न्दु * एन वल्लले कण्णने येन्नुम् * पिन्नुम्
वेळ्ळनीर्किडन्दायेन्नुम् * एन कळ्वि तान्पट्ट वञ्चनैये ॥ ७ ॥

(स.) हा हन्त! अस्या मम दुहितुरन्तरात्मा अत्यन्तमेव शुष्यति स्म। 'परमोदार भगवन्! भो. कृष्णकिशोर!' इत्याह्वयति सेयं मम दुहिता। क्षीरसागरशयनेत्याचष्टे च। एतावता कालेन मत्सकाशे सर्वामपि स्ववृत्तिमपलपितवती स्थिता सेयं हन्त! कथमेवं विप्रलब्धाऽभूत्? [इति ताम्यति जननी।]

ललनाना गुणेषु लज्जा हि प्राधान्यमश्नुते। तया लज्जया इयन्तं कालं मत्सविधेऽपि गूहितस्ववृत्तिरवस्थिता सैषा मम दुहिता सम्प्रति स्वदयितस्य गुणगणानुच्चैराळपति। * अच्छेद्योऽयमदाह्योऽयमक्लेद्योऽशोष्य एव च * इति गीतायामुक्ता आत्मधर्मास्सर्वेऽप्यस्या हन्त! शैथिल्यमापुः। अशोष्यो जीवश्शुष्यति स्म हन्तैतस्याः। कृतपूर्वानुपकारानुक्षण ध्यायन्ती परमोदारः त्वमसि त्वमिति तदीयमौदार्यं प्रशंसति। औदार्यप्रसङ्गे भगवन्तं कृष्णमनुस्मृत्य तन्नाम कथयित्वा कूजति। 'मदार्तिशमनाय खलु कलशजलधिमधिशेषे' इति व्यवहरति। श्रीविष्णुधर्मे प्रोक्तम् (४१ ३०)—"अन्धकारेऽतिर्भामे च नरसिंहमनुस्मरेत्। तस्याखिलदु खानि तापार्तो जलशायिनम्॥ इति। तदनुसन्धानेन जलशायिनमनुस्मृत्य स्वीय मनः प्रशमयितुकामेव क्षीरसागरशयनेत्यामन्त्रयते। हन्तैवमुद्घोषनिरतामिमा मम सुतामाकलयन् भगवान् महान् हि विप्रलम्भकः। तदीयविप्रलम्भवागुरायां सम्यगेव नियन्त्रिताऽभूदेवेति दूयते जननी॥ .... .... (७)

—* आठवीं गाथा—उळ्ळुळावि उलर्न्दुलर्न्दु *—

हा! इस मेरी पुत्री की आत्मा तक सूख गयी; यह पुकारती है कि "हे परमोदार, भगवन्! श्री कृष्णकिशोर!" फिर रटती है कि हे क्षीरसागरशायिन्! अभी तक मुझसे भी अपना आशय छिपाकर रहती हुई यह कुमारी अब कैसे इस कपटजाल में फँस गयी?

स्त्रियों के लिए लज्जा ही बडी सम्पत्ति कही जाती है। ऐसी लज्जा के परवश यह मेरी पुत्री अभी तक अपने प्रेम को मुझसे भी छिपाकर रह गयी। परंतु अब सीमातीत विश्लेष-व्यसन के कारण यह लज्जाशून्य होकर अपने स्वामी के गुणगणों का ही रटन कर रही है। गीताजी में आत्माको छेदने, जलाने, भिगोने व सुखाने अयोग्य बताया गया है। परंतु ये सभी आत्मधर्म इसमें नहीं पाये जा रहे हैं। अशोष्य कहलानेवाली इसकी आत्मा अब सूखी जा रही है। पूर्व में भगवान के किये हुए उपकारों की याद करती हुई यह उनकी उदारता की प्रशंसा करती है। औदार्य के प्रसंग में श्रीकृष्ण का स्मरण कर उनका नाम गाती हुई उन्हें पुकारती है। श्री विष्णुधर्म का वचन है कि गाढ अंधकार में श्री नरसिंग भगवान का स्मरण करना चाहिए, और जलशायी का स्मरण करने पर सभी ताप मिट जाते हैं। शायद इस वचन का अनुसंधान करती, अपना संताप मिटाने के लिए पुकारती है "हे क्षीरसागरशायिन्! हा! मेरी इस पुत्री को, ऐसे प्रलाप करने की दुरवस्था पहुंचानेवाले भगवान बहुत कपटी हैं। बेचारी यह भी उनके कपटजाल में पूर्णतया फँस गयी है। यों कहती हुई माता दु ख पा रही है॥ .... .... (७)

(गाथा.) वञ्जने वेन्नुम् कैतोळुम् * तन नेञम् वेन नेडुतुयिर्कुम् * विरल
कञ्जनै वञ्जनै सेयुदीर् * उम्मै नञ्जमेन्रु इनव पट्टनवे ॥ ८ ॥

(सं.) मम सुता स्वकीयगुणगणवागुरायां मां निपात्य वञ्चितवन् भगवन्निति प्राह। तादृशोपकारानुसन्धानेन बद्धाञ्जलिपुटाऽवतिष्ठते। उष्णोष्णैर्निःश्वसितैर्निज-हृदय संतापमाविष्कुरुते। महाबलाढ्यकंसघातुक भो भगवन्! त्वयि विस्रब्धहृदय-तयाऽवस्थितायाः अस्या एवं नाम विबाधनमपि नाम युज्यते? (इति माता)

सर्वास्वप्यवस्थासु त्वय्येव रक्षकत्वाध्यवसायं दृढीयासमविनिहन्तीं स्थितामिमामेवं नाम व्यथयसि भगवन्! किमेतत्माप्रतमिति पृच्छति माता। हे वञ्चकेति कथयित्वा बद्धाञ्जलिपुटाऽवतिष्ठते मम दुहितेति कथयन्त्या जनन्या अयं भावः—वञ्चकेति कथनं नात्र दूषणधिया; तथा सति बद्धाञ्जलिपुटत्वस्थितेरयोगात्। अपि तु उपकारस्मृत्यैव तदोक्तिः। कंसादीनां मत्सरिणां वञ्चनप्रकारस्तावदन्य; अनन्यशरणानां वञ्चनं न तथाविधम्। विकीर्णतण्डुलकणेन जालेन विहगानामाकर्षणवत् गुणगणजालेन भक्तानामाकर्षणमेवात्र वञ्चनपद-व्यपदेश्यम्। अत एवैतत्कृत्य महोपकारत्वेनानुसन्दधाना पराङ्कुशनायिका तदर्थमञ्जलिबन्धमारचयतीति प्रतिपत्तव्यम्। अशोकवनिकायां स्थिताया वैदेह्याः परिस्थितिमाचक्षाणो भगवान् वाल्मीकिः "उपवासकृशा दीना निःश्वसन्ती पुनः पुनः" इत्याह। तादृशीं हि स्थितिमनुभवतीदानीं मम दुहितेति कथयति माता। **महाबलाढ्यकंसघातुक भो भगवन्!** ईदृशं क्रियमाणं मनोधनम्, प्रतिकूले कंसे कृतस्य प्रतारणस्य अस्यामपि विकीर्णं नोचितमित्यभिसन्धिना। प्रबलेषु सा वृत्तिर्युज्यते भवतः, अबलासु न सा वृत्तिरुपपद्यत इत्युक्तं भवति॥

—* आठवी गाथा—वञ्जने एन्नुम् कैतोळुम् *—

(हिंदी.) यह कहती है, "अपने कल्याणगुणनामक जाल में फँसाकर मुझे कपट से अपनी दासी बनानेवाले हे भगवन्!" फिर उस उपकार का स्मरण करती हुई हाथ जोडती है। अपने हृदय का संताप दिखाती हुई गरम गरम श्वास छोडती है; हे बलवान कंस का वध करने वाले भगवन्! अपने में ही पूर्ण विश्वास रखनेवाली इसे ऐसा दुःख देना क्या आपको उचित है?

माता भगवान से प्रकृत गाथाद्वारा यों पूछती है कि, "हे भगवन्! यह मेरी पुत्री सभी अवस्थाओं में आपको ही अपने रक्षक, सुदृढ मान बैठी है। तो भी आप इसे ऐसा महान संताप दे रहे हैं; यह क्या आपको उचित है?" भगवान को कपटी कहना और हाथ जोडना, यह तो कुछ विरुद्ध-सा दीखेगा। परन्तु वास्तव मे कोई विरोध नहीं। क्योंकि निंदा करने की भावना से यहां पर भगवान को कपटी नहीं कहा गया है, किंतु उपकारस्मृति से। भगवान कंसादि पापियों से जो कपट व्यवहार करते हैं, वह और ही बात है, और भक्तों से किया जानेवाला कपट और बात है। यह तो उनके रक्षणार्थ होता है। जैसे व्याध जाल फैलाकर और उसमें चावल के दाना बिखेर कर कपट से पक्षी पकडता है, इसी प्रकार

भगवान अपने कल्याणगुणरूप जाल में भक्तों को फसाकर अपने वश में कर लेते हैं। अर्थात् शास्त्रोक्त साधनों का अनुष्ठान करके अपनी (माने भगवान की) ओर नहीं झुकनेवाले कितने लोगों को भगवान अपने कल्याणगुण दिखाते हैं और कपट से (माने अबुद्धिपूर्वक) उन्हें अपनी ओर खींच लेते हैं और भक्तशिखामणि बना देते हैं। तथाच गुणप्रदर्शनादि सदुपायद्वारा भक्तों का आकर्षण करना ही, यहां पर कपटव्यापार कहला रहा है। यह तो अवश्य ही भगवान का किया हुआ महान उपकार है। अतः हाल में श्रीपराङ्कुशनायिका इस उपकार का स्मरण करके यों कहती हुई भगवान को लक्ष्य कर हाथ जोड़ती है कि, "प्रभुने मेरी इच्छा के विरुद्ध ही, अपने शुभगुण दिखाकर, कपटपूर्वक मेरे मनको उनमें सक्त बनाकर, मुझे अपने वश में कर लिया॥ "अशोक वनिका में दुःखी सीताजी की दुरवस्था का वर्णन करते हुए वाल्मीकिजी ने कहा कि "निःश्वसन्तीं पुनः पुनः" (सीताजी गरम गरम श्वास लेती थीं)। अब माताजी का कहना है कि "मेरी पुत्री की भी हालमें एसी ही दुरवस्था हो गयी है॥ भगवान को बलाद्यकसमर्दन कहने का यह भाव है कि द्वेषी कंस को दिये हुये दंडको, अपनी भक्ता इस नायिका को भी जो आप दे रहे हैं, यह सर्वथा अनुचित है। अर्थात् भगवान कंस के प्रति आप चाहे जैसे रह जायें; परतु अपनी भक्ता अबला के विषय में वही वृत्ति रखना आपके लिए सर्वथा अनुचित है॥ .... (८)

(गाथा) पट्टपोदु एलुपोदरियाळ् * विरै मट्टलर् तण्डुळायेन्नुम् * शुडर् विट्टवाय् नुदिनेमियीर् * नुमदिङ्गमेन्कोल् इव्वळैक्के॥ ९॥

(स.) सूर्यस्यास्तमयमुदयं च न जानात्येषा। सुरभिमधुस्यन्दिशिशिरतुलसीस्रजं मुहुः प्रस्तौति। ज्योतिष्मत्तीक्ष्णहेतिराजपाणे भगवन्! चापल्यैकनिरूपणीयाया अस्याः कृते त्वच्चिकीर्षितं किं नाम? (इति पृच्छति माता।)

* नन्दत्युदित आदित्ये नन्दन्त्यस्तमिते रवौ * इति हि संसारिणां प्रक्रिया। नेयमस्याः स्थिता हन्त।* प्रातर्मूत्रपुरीषाभ्यां मध्याह्ने क्षुत्पिपासया। सायं कामेन पीड्यन्ते जन्तवो निशि निद्रया॥ * इत्युक्त-प्रक्रियामत्यन्तमतिवर्तमाना सेयं मम दुहिता लोकविसजातीयेति विद्धि, इति भगवन्तमुद्बोधयतीव। अथास्याः प्रलापप्रकारः कीदृगिति चेत्, दिव्यतुलसीप्रस्तावमुद्धृत्य "हा हा! अस्याः सौरभं कीदृग्विधम्? मधुस्यन्दश्च कीदृगहो! पुष्पितत्वशैशिर्ययोश्च भोग्यता कीदृशी!" इत्यालपनमेव सततमनुवर्तते। करतलविलसद्धेतिराज-सौन्दर्यप्रदर्शनेन मम तनयामिमामीदृगवस्थां कृतवतो भवतो हन्त! किमभिसंहितम्? एवमेव व्यथाया अभिवर्धनं चिकीर्षसि किम्? उताहो तत्प्रशमनम्? इति प्रश्नापदेशेन सर्वथा तदेकन्यस्तभरतामात्मनो व्यनक्ति जननी॥ .... .. .... .... (९)

—* नवमी गाथा—पट्टपोदु एलुपोदरियाळ् *—

(हिंदी.) (यह नायिका) सूर्य के अस्त व उदय नहीं जानती; (किंतु) सर्वदा सुगंध व मधुपूर्ण सुशीतल तुलसी का ही नाम रटती है। हे जाज्वल्यमान तीक्ष्णधार सुदर्शन चक्रधारी भगवन्! अत्यंत चपला इस बेचारी के विषय में आप क्या करना चाह रहे हैं?

संसारी जन तो सानद सूर्य के उदयास्तमयों की प्रतीक्षा करते हैं, क्योंकि उदय उनके द्रव्य कमाने का, और अस्त तो विषयभोग करने का समय है। एव रातदिन उनका कालक्षेप भी इस प्रकार चलता है कि, प्रात.काल मलमूत्र छोडना, मध्याह्न के समय क्षुत्पिपासाओं को शमन करना, संध्या में काम से पीडित होकर क्षुद्रविषयोपभोग करना और रातभर निद्रा में विलीन होना। अब माताजी कहती हैं कि मेरी पुत्री इन कृत्यों से सर्वथा दूर है। यह बात सर्वथा सत्य है; चूंकि श्री शठकोपसूरी आहार, निद्रा, मलमूत्रत्याग इत्यादि साधारण लौकिक कामों से भी दूर रह गये। अस्तु। फिर यह क्या करती है? सर्वदा दिव्यतुलसी का ही, ऐसे शब्दों से जप कर रही है—'ओह! इसकी गंध कितनी मनोहर है! इससे बहनेवाली यह मधु की धारा कैसी भोग्य है! इसके पुष्प कितने सुदर होते हैं! यह कितनी सुशीतल है" इत्यादि। अपने श्रीहस्त में विराजमान चक्रराज का सौंदर्य दिखाकर इस मेरी पुत्री को ऐसी दुरवस्था पहुचा देनेवाले आप, अब इसे क्या करना चाहते हैं? इस व्यथा को क्या बढाना ही चाहते; अथवा मिटाना चाहते हैं? इस प्रश्न से माताजी अपना यह दृढ अध्यवसाय प्रकट करती है कि कुछ भी हो, अपना दुःख मिटाने के लिए भगवान की कृपा की ही प्रतीक्षा करनी चाहिए, न तु स्वय कुछ प्रयत्न करना ॥ .... (९)

(गाथा.) एळॆ पेदै इराप्पहलु * तन कॊलिलु ओण् कण्णनीर्कॊण्डाव् * किळर्
वाव्वैवेव इलङ्कै शॆत्तीर् * इवळ् माळै नोक्कु ओन्नुम् वाडेन्मिने ॥ १० ॥

**(स.) वृथा चापलवती बालिशा मम दुहिता दिवारात्र स्वकीये निरुपमे चारुणी विलोचने अश्रुभरिते बिभर्ति हन्त! प्रबलैस्वर्यभरितलङ्कैश्वर्यनिर्मूलननिपुण भगवन्! अस्या मुग्धकटाक्षसपदमेकामपि वा ग्लानिमन्तरा सरक्षतात् तत्रभवान् ॥**

पराङ्कुशनायिका मुग्धमधुरकटाक्षमात्रावशेषा अत्यन्तसर्वाङ्गक्षीणम्या ताम्यति, सोऽपि कटाक्षो यथा न ग्लानिमुपेयात्तथा नाम जागर्तु भवानिति भगवन्तमुद्दिश्य मातुश्चरम वच इदम्। [वृथा चापलवती] श्री कूरनाथो गुरुवर. * लभ्येषु दुर्लभतरेष्वपि वाञ्छितेषु जाता सहस्रगुणतःप्रतिलम्भनेऽपि। विघ्नैर्हतेष्वपि च तेषु समूलघात वर्धिष्णुरेव न तु शाम्यति हन्त तृष्णा ॥ * इति। अय भाव —मसारिणामस्मादृशा जायमाना तृष्णा न कामपि व्यवस्था धत्ते। सुलभेषु वस्तुष्विव दुर्लभेष्वपि हन्त सा समुत्पद्यते। अभिलषितानामर्थानां शतगुणाधिक्येन लाभे सत्यपि विघ्नै प्रतिहते सत्यपि च समरूप सा भृशमभिवर्धेत इति। सेयमस्मादृशा प्रक्रिया केवल प्राकृतवस्तुविषयिणी; मुनिवरस्य तु भगवद्विषयिणी। अर्चारूपिणो भगवत. प्रसादकाङ्क्षण सुलभविषयकमिति प्राप्तमेतत्। श्री वैकुण्ठनाथ-क्षीराब्धिनाथ-रघुनाथ-यदुनाथादि प्रसादकाङ्क्षण दुर्लभविषयकम्। सर्वत्रापि लाभालाभव्यत्ययविरहेण वर्धिष्णुरेव हन्त सा तृष्णा। इदमेव विलक्षण चापलमुद्दिश्य **वृथा चापलवती**त्युक्तवती जननी। स्वकीये हितोपदेशे दत्तावधाना न भवतीति विवक्षया **बालिशेति** वक्ति। विलोचनयोरश्रुभरितत्वमुच्यतेऽत्र। आनन्दाश्रु वा शोकाश्रु वेति न नावगमितम्। प्रकरणवशात् शोकाश्रु भवितुमर्हति। उभयस्मिन्नप्यश्रुणि न कोऽपि विशेषो मुनिवरविषये। सर्वथाऽप्यलङ्काररूपं ह्यश्रु चक्षुर्भ्यामभिक्रमणीनाम्। सर्वेश्वरस्य सकुतूहल दर्शनेषु प्राधान्यमाटीकते ह्येतत्। शोकाश्रुदर्शनवेलासु भगवान् स्वकृयेसर्वथा फलेग्रहित्वमनुसन्दधान. प्रहृष्टहृदय एव भवितुमर्हति। विषयान्तरेषु लाभालाभजहर्षशोकविवशाना ससारिणा मध्ये, विलक्षणोऽय

मुनिसार्वभौमो मदीयानुभवाभावजन्यहर्षशोकौ हि विराजत इति हर्षेणैवानुविन्देत। मातुरिदानीं विनक्षा तु भगवन्! अस्याश्शोकमपनुदतु, मा वा भवान्; न तत्र मे कोऽपि विचारः; त्वदीयचिरन्तनवृत्तिकृतभूतस्यास्य अश्रुपूरस्य प्रेक्षणं ते परमपुरुषार्थः; मा भूदेतदप्युपेक्षा—इति। एवं नाम रमणीयां व्याख्यामवतारितवता-माचार्यवर्याणामनघं मेधाविलसितमनुभोक्तुमर्हा रसिका अतीव विरला इति तावदस्माकं खेदः। तद्वैधर्यनिर्मूलन-निपुणाभिः सनिदि, एतद्गम्भीरशिरोमणिनिरसनमनायाससाध्यं हि भवेन्नत्यभिप्रायगर्भम्॥

[असा मुग्धकटाक्षसंपदमेकमपि वा म्लानिमन्तरा संरक्षताद्धवान्।] लोके कान्त-कामिन्या इतरावयवसौंदर्यापेक्षया नयनसौंदर्यं विशिष्य भवमभिनिविष्ट। अत एव रामचन्द्रो भगवान् * न जीवेय क्षणमपि विना तामसितेक्षणाम * इति प्रलपाप। पराङ्कुशनायिकापि स्वकीयनयनसौन्दर्ययोगादेव कान्तं लक्ष्मीकान्तमावृद्दरती। प्रथमसौभाग्यमेव नयनसौभाग्यत्वेन विवक्षितमिति वेदितव्यम्। अन्यानि सौभाग्यानि नश्यन्तु कामम्, एतदेकं सौभाग्यं भवानभिरक्षत्वादिति प्रार्थनाया अभिमभिव्यक्तारत्—श्रीशठकोपमुनीन्द्रप्रज्ञा-प्रभावेन जगदभिरक्षणं यदस्ति भवता सकलितम्, मा भूत्तत्र तद्विधुर इति। एवं मे दुहितरं चिरजीविनी-माकलय्य जगदिदमभिरक्ष—इत्युक्तं भवति॥ .... .... (१०)

—* दसवीं गाथा—एलै पेदै इगप्पहल् *—

(हिंदी) व्यर्थ चापल्य करनेवाली व बुद्धिहीन यह मेरी पुत्री रातदिन अपने अनुपम सुंदर विशाल नेत्रों से आँसू बहा रही है। लंकानगरी के महान ऐश्वर्य का विनाश करनेवाले हे भगवन्! इसे इस प्रकार संभाल लीजिए कि अंततः इसका यह मुग्ध कटाक्ष सूखा न जाय॥

इस गाथा में माताजी भगवान को चेतावनी देती हुई, उनसे अपनी यह अंतिम विनती करती है कि, अब पराङ्कुशनायिका के सभी अंग व वलनवत्न सूखे गये; परंतु उसका एकमात्र कटाक्ष-वीक्षण बना रहता है, अत आप इसका ख्याल रखकर कृपया इसे सभाल लीजिए। [व्यर्थ चापल्य करनेवाली।] यह तात्पर्य है—श्री कूरेशस्वामीजी श्रीवैकुण्ठस्तव के अन्तर्गत, "लभ्येषु" इत्यादि (९५-वें) पद्य में आशा के स्वभाव का बडा सुंदर वर्णन करते हैं। तथाहि—आशा का यह नियम नहीं रहता कि सुलभ पदार्थ के विषय में ही हो, नतु दुर्लभ वस्तु के, अर्थात् सुलभवस्तु की भांति दुर्लभतया निश्चित वस्तुमें भी मानव की आशा होती ही है। इष्ट वस्तु के, हजार गुना अधिकतया मिल जानेपर भी आशा शांत नहीं होती, किंतु ज्यों की त्यों चालू ही रहती है। इष्टसिद्धि में अनेक विघ्नों के उपस्थित होने पर भी, और कदाचित् उस वस्तु का सर्वथा विनाश होने पर भी उसकी आशा न केवल बनी रहती, किंतु बढती जाती है। अर्थात् आशा ऐसी विचित्रवस्तु है, जो बिना किसी प्रकार की व्यवस्था के सर्वदा बढती जाती है। परंतु इतनी विशेषता है—हमारे जैसे संसारियों की आशा क्षुद्र सांसारिक विषयों पर होती है, आळ्वार की आशा तो भगवद्विषय पर ही स्थिर रहती है। उसमें भी अर्चारूपी भगवान के प्रसाद की आशा करना, सुलभ वस्तु की आशा है, परमपदनाथ, क्षीराब्धिनाथ, अथवा

श्रीरामकृष्णादिरूपी भगवान का प्रसाद माँगना, अलभ्य वस्तु की आशा है। आल्वार की इच्छा तो यह विचार किये विना ही, कि क्या यह वस्तु मुझे मिल सकती है, या नहीं, सर्वत्र एकरूप रहती और बढती है। इसमें दुर्लभवस्तु की इच्छा को लक्ष्य कर अब माताजी कह रही है कि मेरी पुत्री वृथा चापल्य करती है। फिर [बुद्धिहीन] कहने का यह भाव है कि नायिका माताजी के उपदेशवचन भी नहीं सुनती। नायिका के नेत्रों को अश्रुपूर्ण बताया गया है, परन्तु यह नहीं बताया गया कि ये आँसू हर्ष के हैं अथवा शोक के। प्रकरणानुसार हमें समझना पडता है कि ये शोकाश्रु हैं। परन्तु श्री शठकोपसूरी के विषय मे दोनों अश्रुओं में कोई विशेषता नहीं रहती। जो भी हो, भक्तो के आँसू उनके नेत्र के अलंकार ही होते हैं, जिन्हें भगवान भी विशेष कुतूहल के साथ देखना चाहते हैं। क्या भगवान भक्तों के नेत्रों से बहनेवाले शोकाश्रु देखना चाहते है? हाँ जी! यह अर्थ बताया गया कि विरह के समय ही भक्ति बढती है, और यों देखने पर विरह तो सच्ची भक्ति की कसौटी है। अब विरहप्रसंग में रो रो उठनेवाले भक्त के आँसू देख कर भगवान यों समझकर प्रसन्न होते हैं कि "इसे सुधारने के मेरे अनंत प्रयत्न अभी सफल हुए।" क्षुद्रविषयों के लाभालाभोंसे सुखदुःख पानेवाले क्षुद्रमानवो के बीचमें, उन विषयों मे विरक्त होकर भगवद्विषय के लाभ से संतुष्ट होकर और उसके अलाभ से दुःखी होकर रोनेवाले श्री शठकोपसूरी जैसे असाधारण भक्त के आँसू देख कर अवश्य ही भगवान बहुत प्रसन्न होंगे। अस्तु। अब माताजी यह विनती करना चाहती है कि, मैं इस बात की चिंता नहीं करती कि आप इसका दुःख दूर करेंगे कि नहीं, जो भी हो। परन्तु अपने सतत प्रयत्न के फलतया समुत्पन्न इस अश्रुप्रवाह को आप मत खोइए। अर्थात् यदि आप अभी यहां पधारकर इसे अपने दिव्य दर्शन न दगे, तो इसका शरीर छूट जायगा, फिर इस लिए आपको ही बहुत दुःख भोगना पडेगा। चूंकि अश्रुपूर्ण एसे सुंदर नेत्रों के दर्शन आपको फिर मिलेंगे? खेद की बात है कि ऐसा अनमोल व्याख्यान लिखनेवाले रसिक विद्वत्सार्वभौम हमारे पूर्वाचार्यों की दिव्यश्रीसूक्तियो का अनुभव करनेवाले अब आजकाल बहुत विरले हो गये। भर्तृहरि कवि का यह वचन ही हमें याद आता है— बोद्धारो मत्सरग्रस्ता प्रभवः स्मयदूषिता। अबोधोपहताश्चा ये जीर्णमङ्गे सुभाषितम्॥ [विद्वान असूयावान होते हैं, धनवान गर्वी होते है और अन्यलोग तो मूर्ख हैं। तथाच श्रेष्ठ ग्रंथों को कौन बचाए? कोई नहीं। फलतया ये तो अंतर्धान पाते है।] प्रकृतमनुसराम। यहां पर भगवान को लकाध्वंसी कहने का यह तात्पर्य है कि वे भक्तों को सद्गतिप्राप्ति में बाधा डालनेवाले सभी विघ्न दूर कर सकते हैं। तथाच यदि आप चाहे तो क्षणमात्र में नायिका के भी विरोधियों को दूर कर सकते हैं।

[अततः इसका यह मुग्ध कटाक्ष खराब न जाय] यह तो अनुभव की बात है कि नायक अपनी नायिका के दूसरे अंगों की अपेक्षा नेत्र सौंदर्य को ही बहुत प्यार करता है। अत एव श्रीरामचंद्रजी ने भी सीतादेवी के नयनसौंदर्य की याद करते हुए प्रलाप किया कि "न जीवेय क्षणमपि विना तामसितेक्षणाम्।" (अर्थात् सुंदर नेत्रवाली उस सीता को छोडकर मैं कैसे एक क्षणभर के लिए भी जीवित रह सकूंगा?) हाल्में श्रीपराकुशनायिका ने भी अपने नेत्रसौंदर्य से भगवान को आकृष्ट किया था। वस्तुतस्तु यहांपर नयनशब्द आल्वार की विलक्षण प्रज्ञा का ही संकेत करता है। तथाच माताजी की यह

विनती हुई कि दूसरे सौभाग्यों की बात जैसी भी हो, उनकी चिंता नहीं। एकमात्र नेत्र-सौभाग्य की ग्लानि न हो। इसका यह हार्द भाव है कि, "हे भगवन्! आळ्वार की प्रज्ञा के प्रताप से इस जगत का उद्धार करने का आपका जो संकल्प है, वह (अब विरह-व्यथा के कारण, आळ्वार के परमपद पधारने से) व्यर्थ न बन जाय; अर्थात् अभी आप इन्हें अपने दर्शन देकर, और कुछ समयतक इस संसार में विराजमान करके इनके श्रीमुख से अनेक श्रीसूक्ति निकलवा कर जगत का उद्धार कीजिएगा॥ .... (१०)

(गाथा.) वाड्डमिल् पुहळ् वामननै * इशैहूट्टि वण्शठकोपन् शोल् * अमै
पाड्डोडायिरत्तिप्पत्ताल् * अडि शूडलाहुम् अन्दाममे॥ ११॥

(सं.) अम्लानयशस श्रीवामनमूर्ति भगवन्तमुद्दिश्य वदान्येन मुनिसार्वभौमेण मधुरगीतिसनाथमनुगृहीताया सहस्रगीत्यामनेन दशकेन भगवतः पादारविन्दयोः पुष्पादिसमर्पणभाग्यभागिता भवित्री भक्तानाम्॥

अस्यामवस्थाया संश्लेषरसस्समनुभूत इति द्योत्यते अम्लानयशसमिति भगवद्विशेषणेन। अस्यामप्यापदि यदि नोपेयात्स:, तर्हि बहुभक्तवृन्दपरिरक्षणार्जितस्य स्वयशसो ग्लानिमेव हि पश्येदिति हृदयम्। याचनावृत्त्याऽपि स्वकीयवस्तुनः स्वायत्तीकरणे जागरूकस्स भगवान् कथमिदमनर्घं वस्तु विजह्यादिति द्योतयति वामनमूर्तिरिति विशेषणम्॥ .... . .... .... (११)

—* एतद्दशकसारार्थसंग्राहको द्रमिडोपनिषत्सङ्गतिश्लोकः *—

तत्प्रार्थितानधिगमेन समुत्थितार्तिरग्रे हरेः परमुखेन यथा विधेयम्।
आर्तेर्निवेदनमपाकरणार्थनं च मूर्छां तथा मुनिरगान्महतीं चतुर्थे॥

—* ग्यारहवी गाथा—वाड्डमिल् पुहळ्वामननै *—

अम्लानकीर्तिवाले श्रीवामन भगवान को लक्ष्य कर, परमोदार श्रीशठकोपसूरी की गायी हुई मधुरस्वरयुत सहस्रगीति के अंतर्गत इस दशक से, भक्तों को, उन भगवान के पादारविंदों में पुष्पसमर्पण करने का भाग्य मिलेगा॥ [अर्थात् इस दशक के पाठ से पुष्पार्चन का फल मिलेगा।] (इस फलश्रुति के साथ यह दशक समाप्त किया गया।)

भगवान को [अम्लान कीर्तिवाले] कहने से यह अर्थ सूचित किया जाता है कि इस अवस्था में आळ्वार को उनके सश्लेष का रस मिला। यदि आळ्वार की ऐसी दशामें भगवान पधारकर उन्हें नहीं संभालते, तो उनका बहुत समय से उपार्जित, भक्तजनसरक्षणजनित यश मिट्टी में मिल जाता। भगवान इस आपत्ति को, क्यों कर अवकाश देंगे? अतः उन्होंने शीघ्र ही आळ्वार से मिलकर, उनकी एव तद्द्वारा

अपने यशकी रक्षा की। दूसरी बात यह भी है कि वे कुछ भी करके, अर्थात् अनुचित याचना भी करके अपनी वस्तु को अपने वश में कर लेते हैं, जिसकी सूचना करने के लिए यहां पर श्रीवामन भगवान का नाम लिया गया। तथा च वे आल्वार जैसे महान पदार्थ की कैसे उपेक्षा करेंगे! .... (११)

सटीक सहस्रगीति के दूसरे शतक का चौथा दशक समाप्त हुआ॥

आल्वार तिरुवडिगळे शरणम्॥



॥ श्रीरस्तु ॥

श्रीपराङ्कुश-परकाल-यतिवर-वरवरमुनीन्द्रेभ्यो नमः

## ॥ सहस्रगीत्याम् द्वितीयशतके—पञ्चमं दशकम्—अन्दामत्तन्बु ॥

**अवतारिका**—अधस्तान्मुनिवरस्य मनसि संजाता व्यथा स्वबाधा समुद्घाटयितुमशक्या जननीबाधा समुद्घाटनीया समभूत्। तदनु किं वृत्तमिति विमर्शे * गज आकर्षते तीरे ग्राह आकर्षते जले * इति स्थितायामवस्थिलया यद्धि मरणम्, ननु तदेव सम्पन्नम्। गजस्य तावत् स्थले शक्तिः; ग्राहस्य तावज्जले शक्तिः। स जले प्रत्याकर्षति हस्तिनम्; एष तु स्थले प्रत्याकर्षति मकरम्। एवं नाम व्यपगतो बहुविधः कालः। अन्ततो गजराजः * परमापदमापन्नः * इति वक्तव्यामवस्थामवजगाहे हन्त। सर्वात्मनाऽपि स्वप्रवृत्तिरस्य विरराम। तादृशीमेव हि दशामपेक्षते स्वसंरक्षादीक्षासमधिकसमिन्धानयशाः स भगवान्। आर्तत्राणपरायणस्स सपदि कीदृशस्संवृत्तः? देवीहस्ताम्बुजेभ्य श्चरणकिसलये सेवद्भ्योऽपहृतवान्; प्रत्यास्थदनन्तभोगम्; झटिति चलपुटे चक्षुषी व्यस्तृणीत; लक्ष्म्यास्तनकलशकलितकुङ्कुमस्तोमसङ्क्रान्ताविक्षेप च वक्ष। किं बहुना! गजपतिदुःखिते दिव्ये धाम्नि स्थातुमशक्तो महतीं वैयाकुल्यं विजगाहे। अतन्द्रितचमूपतिप्रहितहस्तः अस्वीकृतप्रणीतमणिपादुकः प्रस्थातुमुपचक्रम उत्थाय। 'किमेतदहह! किमिदं नाम बत!' इत्यन्तःपुरे च महती समुदभूदाकुलता। अवाहनपरिष्क्रिय पतगराजमारुरोह। भगवदङ्घ्रिसंमर्दकिणाङ्कशोभी स च धन्यजन्मा विहगराजो भगवतस्संकल्पवेगमप्यतिशयानः छटछटायितपतत्रमूलस्सन्नध्वानमतिलङ्घयति। भगवतो मनसि समुदिता त्वरा किमुपवर्ण्यताम् कथमुपवर्ण्यताम्! 'हे वैनतेय! मम मानसीं व्यथामजानन् किमित्येवं मन्दजवो व्रजसी' त्याक्रोशन् हुङ्कारशतमुपबृंहयति; आस्फालनसहस्रमातनुते; अङ्घ्रिप्रहतिनतीं स्वतारयति; अथाप्यनतिरिच्यमानरभसं तं तार्क्ष्यं कक्षे निक्षिपन् वात्याव्यालोलत्कमलतटाक ताण्डवभाजा चक्षुषा विहायसस्तल मुत्फुल्लपङ्कजवनमिवोपकल्पयन् स्वभूषाम्बरमयथायथं दधानो विभ्राम्! विभ्रामित्यात्मानमतितरां गर्हमाणो ग्राहगजयोः स्पर्धास्पदं तटाकमुपससर्प क्षणेन। अवसन्नस्य गजपतेस्सौन्दर्यमप्रमेयमनिमेषमवेक्षमाणः पयःपूरं प्रवाहयति पुण्डरीकविशालाभ्यां स्वविलोचनाभ्याम्। परामृशति व्रणकिणकर्कशं वेतण्डपादम्। क्षणार्धे तस्य व्यथां व्यपोहतोऽप्यच्युतस्य जलधितोऽप्यतिवेलमुज्जृम्भमाणा मानसी वेदना हन्त! वेद कः? को वा साक्षाचक्रे।

इस गाथा के व्याख्याकार यह भी अर्थ बताते हैं कि, भगवान ने ब्रह्माजी को अपने नाभी कमल मात्र से संबंधित नहीं किया, किंतु श्रीमहालक्ष्मीजी और शिवजी के साथ उन्हे भी अपने शरीर के एक कोने मे स्थान दिया। उनका यह विलक्षण प्रकार सर्वत्र प्रसिद्ध है ॥ .... .... (३)

(गाथा.) पुलनैन्दु मेयुम् पोरियैन्दु नीङ्गि * नलमन्द मिल्लदोर् नाडु पुहुवीर् *
अलमन्दु वीय असुररै चेचान् * पलमुन्दु शीरिल् पडिमि नोवादे ॥ ४ ॥

शब्दादिविषयपञ्चकविसृत्वरपञ्चेन्द्रियवश्यतां विधूय निरवधिकानन्दसंदोहमयं दिव्यधाम प्रवेष्टुकामा भो मुमुक्षवः! असुराणां सर्वगात्रशैथिल्यप्रजननपूर्वकं चित्रवधं कृतवतो भगवतः सर्वथा फलोपधानसामर्थ्यशालिदिव्यगुणानुभवेऽनवरतं व्याप्रियध्वम् ॥

भगवन्निष्ठमोक्षप्रदत्वोपदेशो न खलु काश्चन पान्थान् पामरान्प्रति कर्तुं योग्यः; वस्तुतो ये मुक्तिलिप्सवः तान्प्रत्येव खलु कर्तव्यः। अत एव मुमुक्षून् कण्ठरवेण संबोधयति। विषयग्रामसंचरिष्णुपञ्चेन्द्रियवशंवदत्वावस्थाया गर्हणं प्रथमत आवश्यकम्; अथच "तेजोमयं परमसत्त्वमयं ध्रुवं यदानन्दकन्दमतिसुन्दरमद्भुतं यत्" इत्युपश्लोकिते ब्रह्मानन्दप्रचुरे दिव्ये धाम्नि प्रविविक्षया भवितव्यम्। तादृशानां मुमुक्षूणां नित्यं भगवद्गुणानुभव एव कर्तव्यं कृत्यम्। गुणानुभवे कृते फलमवश्यं भवेदेति सशयापनोदनाय **सर्वथा फलोपधानसामर्थ्यशालित्व** विशेषणं दत्तम्। गुणानुभवेच्छाप्रागभावकाल एव फलमुदेतीति मूलगाथासंनिवेशः। तेन फलाव्यभिचारः प्रोक्तो भवति ॥ .... .... .... (४)

—* चौथी गाथा—पुलनैन्दु मेयुम् पोरियैन्दु नीङ्गि *—

(हिंदी.) शब्दादि पांच विषयों में व्यासंग करनेवाली पांच इंद्रियों के वश न होते हुए, सीमातीत आनंदवाले दिव्य धाम पहुंचना चाहनेवाले हे मुमुक्षुजनो! असुरों के शरीर छेद छेद कर उनका चित्रवध करनेवाले भगवान के फल देने में समर्थ शुभगुणों का ही सर्वदा अनुभव करने में निरत हो जाइए ॥

अब आळ्वार भगवान के मोक्षप्रदत्व का जो उपदेश दे रहे हैं, यह उनके सामने से निकलनेवाले चाहे जो व्यक्ति को नहीं दिया जा सकता; परंतु जिनकी वस्तुगत्या मोक्ष पाने की इच्छा हो, उन्हीको देने योग्य है। अतः इस गाथा में आप स्पष्ट शब्दों से उनका संबोधन करते हैं। पहले पांचों इंद्रियों के शब्दादिविषयों में सक्त होने की सांसारिक अवस्था से विरक्ति होनी चाहिए। उसके बाद असीम आनंद के धाम दिव्य धाम में प्रवेश करने की इच्छा होनी चाहिए। ऐसे मुमुक्षुओं का कर्तव्य काम तो (आळ्वार के प्रकृत उपदेश के अनुसार) भगवान के शुभगुणों का अनुभव है। ऐसे करने पर उनका अपेक्षित फल अवश्य ही मिलेगा। इस विषय में किसीकि शंका न हो, अतः कहा गया—[फल देने में समर्थ]। मूल गाथा में कहा गया है कि गुणानुभव करने से पहले ही फल मिल जायगा। इसका भाव यही है कि यह गुणानुभव अवश्य ही फल देगा, नतु कभी व्यर्थ होगा ॥ .... .... .... (४)

(गाथा.) ओवा तुयर्प्पिरवि उट्टपड मत्तेन्वैवैयुम् * मूवा त्तनिमुदलाय् मूवुलहुम् कावलोन् *
मावाहि यामैयाय् मीनाहि मानिडमाम् * तेवादि देवपेरुमा नेन् तीर्त्तने ॥ ५ ॥

अविच्छिन्नदु:खसन्तानहेतुभूतजन्मसवन्धरूप सर्गम् अन्यच्च स्थितिसंहारादिरूपं व्यापारवर्गं सहायान्तरनिरपेक्षस्सन् अतन्द्रालुश्च सन् यो निर्वहति, विशिष्य त्रैलोक्य-पालननिरतश्च यः, स एव देवाधिदेवः परमपावनः परमः पुमान् वेदप्रवर्तकहयग्रीव-रूपी पुराणप्रवर्तककूर्ममत्स्यरूपी गीतोपनिषत्प्रवर्तकमानुषरूपी चावततार ॥

दशकेऽस्मिन् प्रथमगाथाया प्रस्तुतं सर्वजन्तुजातसजातीयत्वमनया गाथया विवृतं भवति । :"संसार-चक्रप्रवर्तकत्वात् ब्रह्मेशानादिदेवाधिदेवत्वात् नित्यसूरिनियामकत्वात् अशेषदोषप्रत्यनीकत्वात् देवमनुष्यादिव्या-पारकरणेन सर्वजगद्रक्षकत्वाच्च स एव सर्वेश्वर इत्युक्तं भवति" इति षट्सहस्रिकायामनुगृहीतस्साराशः ॥ ५ ॥

—* पाँचवी गाथा—ओवात्तुयर्प्पिरवि उट्टपड *—

(हिंदी.) निरंतर दुःखपरंपरा का हेतु जन्मसंबंधरूपी सृष्टि, और स्थितिसंहारादिरूप दूसरे सभी व्यापारों को जो किसीकी सहायता के बिना स्वयमेव, आलस्य छोड कर संभालते हैं, और मुख्यतया तीनों लोकों की जो रक्षा करते हैं, ऐसे देवाधिदेव, परम-पुरुष ने वेदों का प्रवर्तन करानेवाले हयग्रीव, पुराणों के प्रवर्तक कूर्म, मत्स्य, और गीतोपनिषत् के प्रवर्तक मानवरूपों में अवतार किया ॥

इस दशक की पहली गाथा में भगवान का जो समस्तप्राणिसजातीयत्व बताया गया, उसका विवरण प्रकृत गाथा में किया जा रहा है। षट्सहस्रीव्याख्यान मे इसका साराश इस प्रकार बताया गया है—संसारचक्र के प्रवर्तक, ब्रह्मरुद्रादि देवो के भी देव, नित्यसूरियों के नियामक, समस्त दोषप्रतिभट और देव-मनुष्यादियों के व्यापार करते हुए समस्त जगत के रक्षक होने से आप ही सर्वेश्वर है ॥ .... (५)

(गाथा.) तीर्त्त, तुलहळन्द शेवडिमेल् पून्दामम् * शेर्त्ति, यवैये शिवन्मुडिमेल् तान्कण्डु *
पार्त्तन् तेळिन्दोळिन्द पैन्दुळायान् पेरुमै * पेर्त्तु मोरुवराल् पेश क्किडन्ददे ॥ ६ ॥

परमपावनस्य श्रीकृष्णमूर्तेर्लोकविक्रान्तचरणपरिसरे स्वेन समर्पितानि पुष्पमाल्यानि गङ्गाधरजटाजूटे दृष्टवता पार्थेन विशुद्धमनसाऽवधारित तुलसीधारिण. परमपुरुषस्य वैभव किमहो! अन्येषा गिरो गोचरः?

महाभारते "पार्थो विजेता मधुसूदनस्य पादारविन्दार्पितचित्रपुष्पम । ददर्श गङ्गाधरमौलिमध्ये बभूव वीरः कृतनिश्चितार्थ. ॥" इत्येष श्लोक एव एतद्गाथात्मना विवर्तत इति ध्येयम् । भारतयुद्धप्रकरणे पाशुपतास्त्रलिप्सुः पार्थ. पुष्पाद्युपकरणसनाथस्सन् पशुपते. स्समाराधने यदा प्रवृत्तः तदा भगवता कृष्णेन

प्रोक्तम् 'अर्जुन ! तानि पुष्पाणि मम पादे समर्पय' इति । स च तथा समार्पिपत् । तान्येव पुष्पाणि शिरसा बिभ्राणशिव काङ्क्षितमस्त्रं प्रदाय प्रयात इति तावत्कथा । पुनरपि मनाक् विस्त्रियते सेय कथा । अर्जुनस्तावदभिमन्युविनाशमाकर्ण्य 'व्यूहद्वारे जयद्रथेन रुद्रप्रसादलब्धमालाप्रक्षेपत खलु भीमसेनादीना व्यूहप्रवेशाशक्तिरजायत, तत एव ह्यभिम युरनश्यत्, तस्मादभिमन्युविनाशक जयद्रथ श्वस्सायकालादर्वागेव न हन्मि चेत् ध्रुवमहमग्निं प्रविशानि' इति प्रतिजज्ञे । 'जयद्रथश्च पाशुपतास्त्रेण विना न विनश्येत, किं त्व तद्विजानासि ?' इति कृष्णेन पृष्ट किरीटी 'विस्मृतवानहम्' इत्युत्तरमूचे, रुद्रात्पाशुपतास्त्रलिप्सया तत्समाराधने प्रवृत्ते च । तदात्वे प्रवृत्तं यत्तदस्या गाथायामभ्यधाहि ॥

अत्रेदमेकं वक्तव्य भवति । अधस्तादिहोदाहृत श्लोक * पार्थो विजेता मधुसूदनस्येत्यादि प्रकृतगाथाव्याख्यासूदाहर्तव्योऽपि नैवोदाहृत । आचार्यहृदयचतुर्थप्रकरणे द्वितीयचूर्णिकाव्याख्यायामेतां कथां विवृण्वद्भि श्रीवरवरमुनीन्द्रैस्तूदाहृत इति ॥ (६)

## —* छठी गाथा—तीर्थनुलहलन्द शेवडिमेल् पून्दामम् *—

**(हिंदी) परमपावन श्रीकृष्ण भगवान के लोक नापनेवाले पादारविंदों में अपने अर्पण किये हुए पुष्पमाला को शिवजी के सिर पर देख कर प्रसन्नमानस अर्जुन ने तुलसी मालाधारी परमपुरुष का जो वैभव ठीक ठीक समझ लिया, उसका वर्णन दूसरा कौन कर सकेगा ?**

यह गाथा, महाभारतस्थ "पार्थो विजेता मधुसूदनस्य" इत्यादि पद्य का अनुवाद सा है। पद्य का यह तात्पर्य है—जयशील अर्जुन ने श्रीकृष्ण के पादारविंदों में अपने अर्पण किये गये पुष्पों को शिवजी के सिर पर देखकर तत्त्वनिर्णय कर लिया। यह कथा अवश्यज्ञातव्य है—महाभारत युद्ध के बीच में एक दिन अर्जुन की अनुपस्थिति में अभिमन्यु मारा गया। प्रसग यह बना कि उस दिन कौरवसेना का व्यूह तोडकर लडने में समर्थ वीर पाडवों की सेना में दूसरा कोई न रहा, अत वीर अभिमन्यु को ही यह काम करना पडा। वह बालक आगे पीछे देखे विना ही व्यूह में घुसकर लडने लगा। उसकी सहायता के लिए भीमादि वीरों ने साथ ही चलना चाहा। परतु द्वार पर जयद्रथ खडा था, जिसने शिवजी के द्वारा प्राप्त एक वरके बल से उन सबको रोक दिया। फलत अभिमन्यु अकेला ही शत्रुसैन्य के बीचमें रह गया और युद्ध करते मारा गया। शाम को अर्जुन ने सुना कि द्वार पर खडे हुए जयद्रथ से रोके जाने के कारण भीमादि वीर अभिमन्यु के सहायक न हो सके। तब दु खसतप्त उसने यह प्रतिज्ञा की कि अभिमन्यु की मृत्यु के निमित्त जयद्रथ को कल सन्ध्या से पहले मैं मार डालूगा, यदि एसा न करूगा तो अग्नि में कूद कर स्वय मर जाऊगा। श्रीकृष्ण जानते थे कि पाशुपतास्त्र के सिवा दूसरे किसी अस्त्र से जयद्रथ का वध करना है। अत उन्होंने अर्जुन से पूछा कि "क्या तुम पाशुपतास्त्र-मत्र जानते हो ?" अर्जुन ने उत्तर दिया कि, "हाँ ! मैं तो जानता ही था, परतु हाल में ही उसे भूल गया हू। तो भी चिंता नहीं। मैं अभी शिवजी की पूजा कर प्रसन्न उनसे यह मत्र प्राप्त करूगा। फिर पूजासामग्री तैयार हो गयी। तब

श्रीकृष्ण बोले—भैया! इस प्रकार तुम शिवजी को प्रसन्न नहीं करा सकोगे; इन पुष्पादियों से मेरे चरणों की पूजा करो।" अर्जुन ने वैसा ही किया। फिर शिवजी उधर प्रकट हो अर्जुन को वह अस्त्र देकर चले गये। उनके सिरपर वे पुष्प शोभायमान थे जिन्हें अर्जुन ने श्रीकृष्ण के पदकमलों में चढाया था।

उक्त महाभारत का पद्य सहस्रगीति के किसी व्याख्यानमें उदाहृत नहीं किया गया; तथापि श्री वरवरमुनिस्वामीजी के आचार्यहृदयव्याख्यान में वह लिखा गया है॥.... .... (६)

(गाथा.) किडन्दिरुन्दु निन्ऱलन्दु केळ्लाग् क्कीन्ऱ् पुक्किडन्दिडुम् * तन्नुळ् करक्कु मुमिळुम् * तडम्बेरु न्दोळार त्तळुवुम् पारेन्नुम् मडन्दैये * माल्शेयुहिन्ऱ माल् आर् काण्बारे॥७॥

शयनोपवेशनस्थितिविक्रमणैः, वराहरूपेणावतीर्य प्रलयार्णवान्तः प्रविश्य भूम्युद्धरणेन च, बाहुभ्यां परिरम्भणेन च भूदेव्यां श्रियः पत्या प्रदर्श्यमानं व्यामोहं को नु वेद? ॥

सेयं जगती भगवदिष्टसर्वचेष्टाविषयत्वेन तेनैव सनाथेत्यभिधीयते गाथयाऽनया। शयनोपवेशनस्थितीनामर्चावतारविषयत्वम् विभवावतारविषयत्वं च व्याचक्षत आचार्याः। दिव्यदेशेष्वर्चा (मूल)मूर्तीनां कचिच्छयनम् क्वचिदुपवेशनम् क्वचित् स्थितिं चानुभवामः खलु। विभवावतारे चैव समयभेदतः। भगवान् रामचन्द्रः * अञ्जलिं प्राङ्मुखः कृत्वा प्रतिशिश्ये महोदधेः * इत्युक्तरीत्या प्रतिशयनभूमिकया भूषितवान् पयोधिपुलिनम्। चित्रकूटे ददर्श हि भरतः * उटजे राममासीनम्। किष्किन्धाद्वारे ददर्श हि तारा * धनुरूर्जितमवष्टभ्य तिष्ठन्तं राघवम्। अर्चायां वा भवतु, विभवे वा भवतु; एताः शयनोपवेशनस्थितिक्रियाः प्रेम्णा सह प्रेक्षकाणां मनसि परत्वं प्रत्याययन्तीति हेतुना एतासामत्रोक्तिः। अथ विक्रमणोद्धरणनिगरणोद्गरणादिकथनं च भगवतः परत्वानुभवे पर्यवस्यति। अत एव भगवद्यामुनाचार्याः * क्रान्त्वा निगीर्य पुनरुद्गिरति त्वदन्यः कः, केन वैष परवानिति शक्यशङ्कः * इत्यनुजगृहुः। श्रीकूरनाथगुरुवराश्च सुन्दरबाहुस्तवे * क्षितिरियं जनिसंहतिपालनैर्निगरणोद्गरणोद्धरणैरपि। वनगिरीश! तवैव सती * इत्यन्वगृह्णन्। .... (७)

—* सातवी गाथा—किडन्दिरुन्दु निन्ऱलन्दु *—

(हिंदी.) लेटने, बैठने तथा खडे रहने से, वाहरूप से, अवतीर्ण होकर प्रलयसागर के अंदर प्रवेशकर (भूमि का) उद्धार करने से, निगलकर पेट में लेने और फिर बाहर निकालने से तथा अपने भुजों से आलिंगन करने से श्रीलक्ष्मीनाथ भूदेवी पर जो व्यामोह बता रहे हैं, उसे कौन बराबर समझ सकेंगे।

इस गाथा में यह अर्थ बताया जा रहा है कि चूंकि भगवान् इस भूमिको अपने इष्ट समस्तविध चेष्टितों का लक्ष्य बना रहे हैं, इससे यह अर्थ स्पष्ट होता है कि आप ही इसके नाथ हैं। लेटना, बैठना इत्यादि अर्चावतार अथवा विभवावतार के व्यापार हो सकते हैं। यह तो प्रत्यक्ष है कि अर्चावतारों में कहीं कहीं भगवान (मूल अथवा ध्रुवमूर्ति) लेट रहे हैं, कहीं खडे हैं और अन्यत्र क्वचित् विराजमान हैं। एवं

रामकृष्णादि विभवावतारो में भगवान ने ये तीनों व्यापार किये, इसमें किसीकी शका नहीं होगी। क्वचित् इनका सुदर वर्णन भी किया गया है। तथाहि समुद्रशरणागतिप्रकरण में श्री रामचद्रजी अपने सर्पसदृश भुज को ही तकिया बनाकर सागर तट पर, उस सागर की उपासना करते हुए सो गये। उन्हींको ढूंढते हुए अयोध्याजी से निकलनेवाले भरतजी ने चित्रकूट पहुचकर, वहा पर्णशाला में विराजमान, जटामंडलविभूषित उनके दर्शन किये। एवं तारा ने भी अपने पति वाली को मार कर श्रीश्री से विभूषित होकर किष्किधा के बाहर खडे रहनेवाले उन्हींके दर्शन किये। अर्चावतार में हो अथवा विभवावतार में; भगवान की ये अवस्थाए प्रेमी व सहृदय अपने दर्शकों को स्पष्टतया यह बताती हैं कि इन अवस्थाओ से युत भगवान ही परात्पर देवता हैं। इस अभिप्राय से अब ये कीर्तित हुई हैं। एव भूमि को नापना, निगलना इत्यादि भी स्पष्टतया ही भगवान के परत्व के सूचक होते हैं। अत एव श्री यामुनाचार्य-स्वामीजी ने स्तोत्ररत्न में गाया, "कस्त्वा निगीर्य" इत्यादि। (हे प्रभो! मालिक आपको छोडकर दूसरा कौन इस जगत को नापना, निगलना, बाहर निकालना इत्यादि प्रकार संभालता है?) श्री कूरेशस्वामीजी ने भी सुदरबाहुस्तव में "क्षितिरियम्" इत्यादि पद्य में भगवान से विनती की, कि हे प्रभो! चूंकि आप इस जागत की सृष्टि, रक्षा, सहार, निगलना, बाहर निकालना, उद्धार करना इत्यादि प्रकारों से सभाल रहे है, अतः यह निश्चय ही आपकी संपत्ति है। इत्यादि॥ .... .... . . (७)

(गाथा.) काण्वारा रेम्मीशन् कण्णनै येन्काणुमारु * ऊण्पेशिल् एल्लावुलहुमोर् तुत्तात्ता *
शेण्वाल वीडो उयिरो मत्तेप्पोरुट्कुम् * एण्बालुम् शोरान् परन्दुलना मेङ्गमे ॥ ८॥

सर्वस्वामिन भगवन्त कृष्ण को वा द्रष्टु प्रभवति? दर्शनप्रकारश्च को नाम?
तस्याशन किमिति चेत्, कृत्स्नाऽपि जगती एककवलपर्याप्ता न भवति हन्त!
तस्यावसथ तु रजसस्तमसश्च परस्तात् परम खम्। सोऽपि च स्वय सर्व-
वस्त्वन्तरात्मा। अणुमात्रमप्यविहाय दश दिशो व्याप्यावतिष्ठते।

सर्वजगन्निगरणनियमनसमर्थस्य भगवतस्सर्वेश्वरत्व सर्वथाऽप्यपरिच्छेद्यमित्याह [कृष्णं को वा द्रष्टुं प्रभवति?] गीताया * पश्य मे योगमैश्वरम् * इत्युक्त्वा स एव स्वय प्रदर्शयामास यतस्तत एव पार्थो ददर्श। तथा मह्यमपि प्रदर्शितवान् केवल स्वकृपया। अथान्य को वा द्रष्टा? इति कथनेन स्वरूपैकदृश्यत्व तस्योक्त भवति। [दर्शनप्रकारश्च को नाम?] अपरिच्छिन्नस्य वस्तुन परिच्छिन्नैर्दर्शन कथमिव घटेतेति पृच्छतीव मुनिवर। * यस्य ब्रह्म च क्षत्रच उभे भवत ओदनः। मृत्युर्यस्योपसेचन क इत्था वेद यत्र स ॥ * इति श्रुत्यर्थमनुसन्धत्ते कृत्स्नाऽपि जगतीत्यादिना। सर्वव्यापकवस्तुनो व्याप्यपदार्थैकदेशपरिच्छेद्यत्व चासभवनीति गाथाशेषेण कथितम्॥ .... .... .... . .. (८)

—* आठवी गाथा—काण्वारारेम्मीशन् *—

(हिंदी.) हमारे स्वामी श्रीकृष्ण को कौन दर्शन कर सकता है? दर्शन किस प्रकार मिलेंगे? उनके आहार के बारे में कहेंगे तो, तीनों लोक एक कवल के लिए पर्याप्त

नहीं होते। उनका निवासस्थान भी रज व तमोगुणों से बहुत दूर रहनेवाला परम धाम है। आप स्वयं समस्त पदार्थों के अंतर्यामी हैं और परमाणु को भी छोड़े विना सभी दिशाओं में व्याप्त होकर विराज रहे हैं।

इस गाथा में आळ्वार कहते हैं कि समस्त जगत को निगलनेवाले भगवान का सर्वैश्वर्य सत्य ही अपरिच्छेद्य है। [श्रीकृष्ण को कौन दर्शन कर सकता है?] गीताजी के विश्वरूपाध्याय में, चूंकि स्वयं भगवान ने ही "पश्य मे योगमैश्वरम्" कहते हुए अपना ऐश्वर्य दिखाया, अत एव अर्जुन देख सका। इसी प्रकार हाल में वे अपनी सीमातीत कृपासे दिखा रहे हैं, अत आळ्वार भी उसे दर्शन कर रहे हैं। इस प्रकार भगवत्कृपापात्र किसी व्यक्ति के सिवा, दूसरा कोई भी उनके दर्शन नहीं कर सकता। [दर्शन किस प्रकार मिलेंगे?] परिच्छिन्न वस्तुओं के द्वारा अपरिच्छिन्न भगवान के दर्शन कैसे किये जा सकते? [तीनों लोक] इत्यादि से "यस्य ब्रह्म च क्षत्रं च" इत्यादि कठोपनिषन्मंत्र का अर्थविवरण किया जाता है। मंत्र का यह तात्पर्य है—संहारकर्ता मृत्युदेव के साथ ब्राह्मण क्षत्रियादिरूप यह सारी जगत जिनका आहार होता है, ऐसे सर्वसंहर्ता महामहिम भगवान को कौन ठीक ठीक समझ सकता है? गाथा के अवशिष्ट भाग का यह तात्पर्य है कि सर्वव्यापक भगवान को, उनके व्याप्य किसी पदार्थ से परिच्छेद होना अशक्य है॥ (८)

(गाथा.) एङ्गुमुळन् कण्णनेन्न महनै क्कायृन्दु * इङ्गिल्लैया लेन्नु इरणियन् तूणपुडैप्प * -
अङ्गप्पोळुदे अवन्वीय त्तोन्निय * एन्सिङ्ग प्पिरान् पेरुमै आरायुम् शीर्मैत्ते ॥ ९॥

सर्वेश्वरस्सर्वत्र सन्निहित इत्युक्तवते पुत्राय [प्रह्लादाय] कुपितवति हिरण्ये नात्रा- स्ति स इति स्थूणां प्रहृतवति सति तत्रैव तदानीमेव प्रादुर्भूय तं दैत्येन्द्रं विदा- रितवतो भगवतो नृसिंहस्य प्रभावः कस्य ध्यानार्हः?॥

कृत्स्नया गाथयाऽनया नृसिंहावतारचरितमनुसन्धीयते। अधस्ताच्चतुर्थ्यां गाथायाम् "तस्य गुणानुभवेऽवगाहध्वम्" इति लोण्मध्यमपुरुषबहुवचनक्रियाप्रयोगत एव दशकस्य परोपदेशपरत्वं निर्व्यूढमाचार्यैः। अन्यास्वपि गाथासु तदनुषञ्जनमेव युक्तमित्याचार्याणां हृदयम्। यास्विह गाथासु महिमानमुदीरितम्, तासु 'तत्तादृशस्य भगवतो गुणानुभवेऽवगाहध्वम्' इति शेषपूरणेन भवितव्यमिति यावत्॥ श्रीनृसिंहभगवदवतारस्य प्रधानं प्रयोजनं प्रह्लादानुग्रह एव, आनुषङ्गिकं तु हिरण्यहननम्। तदिदमनुगृणीत श्रीकूरेशमिश्रगुरुवर्यैः— * यदपराधसहस्रमसह्यं त्वयि शरण्य! हिरण्य उपाहरत्। वरद! तेन चिरं त्वमविक्रियो विकृतिमर्भकनिर्भजनादगाः॥ * इति। भगवान् स्वस्मिन्ननवधिकापराधकारिणोऽपि न जिघांसति, स्वभक्तापराधिनां विषये कृतापराधान् प्रति क्षमामीषदपि प्रदर्शयितुं न प्रभवतीति परमार्थः उदाहृतकूरेशश्लोकस्थलेनोद्घाटितः। 'प्रह्लादो न हिरण्यकशिपोः पुत्रः, अपि तु भगवत एवेति तत्रतत्र दिव्यसूरयोऽनुसन्दधते, तदनुसृत्यैव कूरेशमिश्रा अपि अर्भकनिर्भजनात् इत्यनुजगृहुः। प्रह्लादो हि कयाधुगर्भवासकाल एव नारदमहर्ष्युपदिष्टश्रीमदष्टाक्षरमहामन्त्रो गर्भश्रीमानिति प्रशस्यते। अत एव स आजानजश्रीमन्नारायणभक्तिभूमा विललास। 'प्राप्ते वयसि विद्यालयं प्रापितः उपाध्यायेन शुक्राचार्येण "नमो हिरण्यकशिपवे" इत्युच्चैरुद्घोषणं शिक्षितैः इतरैर्विद्यार्थिभिः कृतं तथो-

द्घोषण कर्णेऽपि कलयितुमक्षमस्सन् सद्यः पिहितकर्णकुहरः ओं नमो नारायणायेति गभीरमधुरमुच्चारयन् शुक्रेण बहुधा खण्डितोऽपि तमपि खण्डयन् अन्ततः पितृसकाशं प्रापितस्तेन च अनुनयभीषणादिभिर्बहुधा समुद्वेजितोऽपि मनागप्यप्रचलितभगवद्भक्तिरवतस्थे ; तदात्वे 'आः पापिन् कुमारक ! त्वयोच्यमानो नारायणः कुत्रास्ते कथये' त्यनुयुक्तः * उर्व्यामस्त्युदकेषु, चास्त्युडुपतावग्न्यस्ति चोष्णद्युतौ वह्नौ दिक्षु विदिक्षु वायुनभसोस्तिर्यक्ष्वतिर्यक्षु च। अस्त्यन्तर्बहिरस्ति सत्यसति वा सारेष्वसारेषु वा सर्वत्रास्ति सदाऽस्ति किं बहुगिरा ? त्वय्यस्ति मय्यस्ति च ॥ * इत्युदतरत्प्रह्लादः। तदाकर्ण्य सन्निहितजीवितावसानसमयो हिरण्य. स्वगृहे स्थितां कामपि स्थूणां प्रदर्श्य, 'अरे ! किमत्रास्ति स. ?' इत्याक्रन्दन् स्तम्भे प्रददौ च मुष्टिप्रहारम्। तस्मिन्नेव क्षणे सत्वरमुदित्वरो नृसिंहमूर्तिर्भगवान् दैत्यप्रवरस्य तस्य वक्षो विदार्य वधमप्यकरोदिति संक्षिप्ता कथा। भगवान्नारायणः स्वकीयगुणविशेषेष्वेकैकम् एकैकभक्तद्वारा प्रकाशयन् सर्वव्यापकत्वात्मकं गुणविशेषं प्रह्लादमुखतः प्राचीकशदिति प्रतिपत्तव्यम्। इममवतारमनुसंदधानाः श्रीमद्वेदान्ताचार्यास्सचमत्कारमभिदधति—* भक्तस्य दानवशिशोः परिपालनाय भद्रां नृसिंहकुहनामधिजग्मुषस्ते । स्तम्भैकवर्जमधुनाऽपि करीश ! नूनं त्रैलोक्यमेतदखिलं नरसिंहगर्भम् ॥ * इति । अयं भावः—सर्वत्रास्ति स भगवानिति प्रतिज्ञातवन्तं प्रह्लादमभिभवितुकामे सति हिरण्ये, सर्वत्रास्तीति प्रह्लादवाणी कथमपि मास्म भून्मोघा ; स दैत्यो यत्रकुत्र वाऽपि परीक्षताम् इति मन्यमानो भगवान् त्रिलोक्या सर्वमपि वस्तुजातं नरहरिरूपेणाविवेश ; हिरण्यकशिपुनिमित्तमेकस्मादेव तद्गृहस्तम्भात्प्रादुरभूत् ; तद्व्यतिरिक्तमन्यदशेषमपि स्थलम् अद्यापि नरसिंहगर्भमेवावतिष्ठते इति । हिरण्यसदृशो यः कोऽपि वा यदाकदाऽपि वा यत्रकुत्र वाऽपि अत्र नास्तीति कथयेद्यदि सद्यस्समुद्भूय तमभिभवेदेवेति ॥ * अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणस्स्थित ॥ * इति श्रुतिरुपबृंहिता भवत्येतेन ॥ .... .... .... .... (९)

## —* नवमी गाथा—एङ्गुमुळन् कण्णनेत्र *—

(हिंदी.) यह कहनेवाले कि "भगवान् सर्वत्र विद्यमान हैं," पुत्र (प्रह्लाद) से नाराज होकर, यों कहते हुए कि, "यहां वह नहीं है" जब कि हिरण्य ने एक स्तंभ को ठोंका, तब उसी क्षण और उसी स्तंभ से प्रकट होकर उस असुर का संहार करनेवाले श्रीनरसिंह भगवान् का वैभव, किसके ध्यान का ठीक ठीक विषय हो सकता है ?

इस पूरी गाथा में नरसिंहावतार-चरित्र का ही अनुसंधान किया जाता है। पिछली चौथी गाथा में कहा गया कि "भगवान का गुणानुभव कीजिए।" इस पर ध्यान देनेवाले आचार्यों का यह अभिप्राय हुआ कि यह सारा दशक ही परोपदेश करने के लिए अवतीर्ण है। जिन गाथाओं में ऐसे उपदेश का स्पष्ट शब्द सुना नहीं जाता, किंतु भगवान का वैभवमात्र उपवर्णित है, वहां भी इस प्रकार के उपदेशवाक्यों को मिला देना चाहिए कि, "ऐसे महामहिम भगवान का गुणानुभव करो" इत्यादि। अस्तु। श्रीनरसिंहावतार का प्रधान प्रयोजन प्रह्लाद पर अनुग्रह करना ही है; हिरण्य को मारना गौणमात्र है। यह श्रीकूरेश स्वामीजी से अपने श्रीवरदराजस्तव में "यदपराधसहस्रमजस्रजम्" इत्यादि पद्य में बड़े सुंदर ढंग से बताया गया है, जिसका यह तात्पर्य होता है—हे प्रभो! हिरण्य अपने जन्म भर सर्वदा आपके बारे में अपराध ही अपराध

करता रहा.। तथापि उन दिनों आप निर्विकार रह गये, और बाल प्रह्लाद के पुकारने पर आप तुरत विकृत हो गये (विकृत नरसिंह के रूप में प्रकट हो गये)। इससे यह शास्त्रार्थ बताया जाता है कि भगवान अपने विषय में हजारों अपराध करनेवालों को भी दंड नहीं देते, किंतु अपने भक्त के विषय में अत्यल्प अपराध करनेवालों को भी कठिन दंड देते, नतु किसी कारण इनकी क्षमा कर सकते हैं। मूल गाथा में, तथा उक्त श्रीकूरेशस्वामीजी के पद्य में प्रह्लाद का यह विशेषण दिया गया है कि 'बालक,' नतु 'अमुक का बालक'। आल्वारों और आचार्यों के अभिप्राय में प्रह्लाद, भगवान का पुत्र ठहरा, नतु हिरण्य का। यह सर्वथा उचित है। पुराण में कहा गया है कि माता के गर्भ में रहते हुए ही नारदमहर्षि के द्वारा उसे अष्टाक्षर महामंत्र मिला था, जिसके फलतया वह 'आगर्भश्रीमान,' अर्थात् जन्म से ही विलक्षण नारायणभक्त बन गया। ठीक समय पर वह अपने समवय दूसरे असुर बालकों के साथ पाठशाला भेजा गया। वहां गुरू ने यह आज्ञा दी कि शुरू में सब मिल कर यह जयघोष करो कि "हिरण्यकशिपवे नमः।" दूसरे सभी बालकों ने ऐसा ही किया। परंतु प्रह्लाद को यह शब्द सुनना भी असह्य हुआ, और उसने अपने कान बंदकर ऊंचे स्वर से कहा कि, "ॐ नमो नारायणाय"। यह सुनते ही गुरु खेद व आश्चर्य के साथ चौंक उठा; उसने प्रह्लाद को बहुत समझाया कि यह घोषणा करना अनुचित व आपत्कारक है। परंतु प्रह्लाद कुछ माननेवाला नहीं था। अंततः वह पिता के पास लिया गया। पिता ने उसे बहुत समझाया; मीठी मीठी बातें की; दंड देने की धमकी दी; परंतु ये सभी प्रयत्न बेकार हो गये; प्रह्लाद भगवद्भक्ति में अचल रह गया। अंत में हिरण्य ने पूछा कि, "अरे! तुम्हारा भगवान किधर है? बताव।" प्रह्लाद ने झट उत्तर दिया कि, "उर्व्यामस्युदकेऽस्ति" इत्यादि; अर्थात् भगवान भूमि में हैं; पानी में हैं; चंद्रमा में हैं; सूर्य में हैं; अग्नि में हैं दिशाओं तथा दिशाकोणों में हैं; वायु व आकाश में हैं; जानवरों में और अन्यत्र हैं; सब के अंदर व बाहर हैं; नित्य व अनित्य वस्तुओं में हैं; सार वस्तु व असार वस्तुओं में हैं; सभी वस्तुओं में हैं और सर्वदा विराजमान हैं; कहां तक इसका वर्णन करूं? वे तुम्हारे में हैं और मुझमे भी हैं। हिरण्य का मृत्युकाल सन्निहित हो गया; अत. उसने प्रह्लाद का वचन सुनते ही क्रोध से लाल लाल होकर सामने दीखनेवाले एक स्तंभ पर ठोंक मारते हुए पूछा कि, "अरे दुष्ट! तुम्हारा भगवान क्या इसमें है?" उसी क्षण भगवान ने परमविलक्षण नरसिंह के रूप में प्रकट होकर उस दुष्ट दानव का संहार कर डाला। यह है संक्षेपतः श्रीनरसिंहावतार की कथा। एकैक भक्त के द्वारा अपने एकैक गुण को प्रकाशित करनेवाले भगवान ने प्रह्लाद के द्वारा अपनी सर्वव्यापकता को प्रकट किया। श्रीवेदांतदेशिक स्वामीजी वरदराजपंचाशत्-स्तोत्र में बड़े चमत्कार से इस अर्थ का वर्णन करते हैं "भक्तस्य दानवशिशोः" इत्यादि पद्य के द्वारा; जिसका यह अर्थ है—हे प्रभो! जब आपने भक्त प्रह्लाद की रक्षा करने के लिए नरसिंहरूप को धारण किया, तब उस एक स्तंभ के सिवा, त्रैलोक्यवर्ति सभी पदार्थ नरसिंहगर्भ बन गये। इसका यह भाव है—जब प्रह्लाद ने यह प्रतिज्ञा की कि,,भगवान सर्वत्र विराजमान हैं, तब भगवान यह सोचकर कि, "अब हिरण्य तो इस बात की परीक्षा करनेवाला ही है; परंतु न जाने वह किधर से अपनी परीक्षा शुरू करेगा। कैसे भी हो; हमें तो सावधान रहकर उसमें उत्तीर्ण होने ही चाहिए," त्रिलोक के अंतर्गत सभी पदार्थों में नरसिंह रूप से

विराजमान हुए। इनमें से उक्त प्रकार हिरण्य के लक्ष्य में आये हुए एक स्तंभ से भगवान बाहर निकल कर प्रकट हो गये। दूसरी सभी वस्तुओं में तो अभी भी नरसिंग भगवान विराजमान ही हैं। उनका यह अभिप्राय होगा कि यदि आगे कभी, हिरण्य जैसा दूसरा कोई नास्तिक कह दें कि "अमुक स्थल में भगवान नहीं हैं," तो उसी क्षण में वहां से प्रकट होकर उस दुष्टको समाप्त कर देना चाहिए। इस उपाख्यान से इस वेदवाक्य का अर्थ स्पष्ट बताया जाता है कि "अन्तर्बहिश्च तत्सर्वं व्याप्य नारायणः स्थितः" (इस विशाल जगत में जो कोई भी पदार्थ देखा अथवा सुना जाता है उन सब के अंदर और बाहर भगवान श्रीमन्नारायण की व्याप्ति रहती है।) ... .... .... .... (९)

(गाथा.) शीमॅकोव्ळ् वीडु सुवर्क्कम् नरहीरा * ईमॅकोव्ळ् तेवर् नडुवा मत्तॅप्पोल्ट्कुम् *
वेपुॅदलाय् विताय् परन्दु तनिनिन्ऱ * कार्मुहिल्ल् वण्णनेन् कण्णनैनान् कण्डेने ॥ १० ॥

सर्वोत्तुङ्गमोक्षपदवीनिवासिनाम् स्वर्गस्थानाम् नरकनिलयानाम् कर्मनिष्ठाब्रह्मनिष्ठात्मकोभयभावनानिरतानां त्रिविधकारणभूतं सर्वव्यापकं परमविलक्षणकालमेघवपुषं भगवन्तमनुभोक्तुमहं भाग्यवानभूवम्।

अथस्तन्यो नव गाथाः परोपदेशप्रचुराः। गाथायामस्यां परोपदेशं विसृज्य स्वात्मलाभप्रयुक्तसंतोषमाविष्करोति मुनिवरः। संसारिणोऽमी सफलोपदेशा भवन्तु मा वा; अहं तु धन्योऽभूवम् इति कथ्यते। एवं स्वप्रबन्धेषु द्वित्रि, कथयति तत्रतत्र मुनिवरोऽसौ। दवीयसाऽध्वना विदेशं गच्छन्तो बहवो मध्येमार्गं तस्करापहृतसर्वस्वाः परितप्यन्ते स्म। तस्मिन्नेवाध्वनि गतवन्तः कतिपये सर्वथाऽपि सुखिनः कुशलिनः क्लेशलेशरहिताश्च गताश्चेत् तेषां संतोषातिशयः किं नु वाचो विषयः? एवमेव संसारमहाकान्तारेऽस्मिन् जनेषु प्रायो विषयान्तराभिमुखेषु भगवद्विषयविमुखेषु च सत्सु अहमेकाकी भगवन्तमनुभवामि खलु, एतदर्थं मया संतोष्टव्यमेव खलु इति तावन्मुनिवरस्य हृदयम्॥ स्वर्गमोक्षादि सकलपुरुषार्थानाम् नरकाद्यपुरुषार्थानाम् एतदनुभोक्तृदेवादिस्थावरान्तसकलवस्तुबृन्दानां धारकं कारणभूतं नियामकं वपुस्त्वजाहकामदिव्यगात्रं च कृष्णं भगवन्तमहमनुभुञ्जे इत्युक्तवान् भवति। त्रिविधकारणत्वं च निमित्तोपादानसहकारिकारणत्वम्॥ .... (१०)

—* दसवीं गाथा—शीमॅकोव्ळ्वीडु सुवर्ग नरकीरा *—

(हिंदी) सबसे श्रेष्ठ मोक्षपदवी, स्वर्ग व नरक के निवासियों, कर्मनिष्ठा ब्रह्मनिष्ठा नामक उभयनिष्ठावाले देवों और दूसरे सभी पदार्थों के त्रिविधकारण, सर्वव्यापक एवं परमविलक्षण कालमेघसदृश विग्रहवाले भगवान का अनुभव करने का भाग्य मुझे मिला है॥

पूर्वोक्त प्रकार नौ गाथाओं में परोपदेश करने के बाद, अब आळ्वार इस दसवीं गाथा में वह काम छोडकर अपने प्राप्त लाभ का इस प्रकार सहर्ष वर्णन करते हैं कि, संसारियों के विषय में दिया हुआ मेरा उपदेश सफल हो या न हो, उसकी चिंता करनेसे क्या लाभ होगा। मैं तो विलक्षण भगवदनुभव करके धन्य हो गया। आळ्वार की ऐसी विचारधारा, न केवल इस गाथा में, किंतु और भी दो तीन जगह हुई है।

मान लीजिए कि लंबे मार्ग से देशांतर जानेके लिए कई जन प्रस्थित हुए, और रास्ते में चोरों से लूटे गये; परंतु उनमें से भाग्यवान कोई एक व्यक्ति इस विपत्ति में न पडकर आराम से अपने इष्ट स्थान पहुंच गया। अब कहिए कि उसके आनंद का कौन ठीक ठीक वर्णन कर सकेगा। इसी प्रकार इस संसारकांतार में यात्रा करनेवाले प्राय सभी मानव क्षुद्र विषयों का अनुभव करने में सक्त होकर जब भगवान से दूर दूर ही भटक रहे हैं; तब एकमात्र आळ्वार इस आपत्ति से बचकर निर्विघ्न भगवान का अनुभव करते हैं। अतः उन्हें इस विषय पर बहुत आनंद हुआ, जिसका वर्णन प्रकृत गाथा में किया जा रहा है। गाथा का यह तात्पर्य है कि, स्वर्गमोक्षादि समस्त पुरुषार्थों, नरकादि सभी अपुरुषार्थों और इनका अनुभव करनेवाले देव-मनुष्यादि समस्त पदार्थों के धारक, कारण, और नियामक, नीलमेघश्याम श्रीकृष्ण भगवान का मैं अनुभव कर रहा हूं। निमित्त, उपादान व सहकारि, ये तीन प्रकार के कारण कहलाते हैं॥ .... (१०)

(गाथा.) कण्डलङ्गळ् शेय्य करुमेनि यम्मानै *
यण्डलम्बुम् शोलै वळुदि वळनाडन् *
पण्डलैयिल् शोन्न तमिळ् आयिरत्तिप्पत्तुम् वल्लार् *
विण्डलैयिल् वीत्तिरुन्दाळ्वर् एम्मानीडे ॥ ११ ॥

अरुणनलिनोपमविलोचनम् असितदिव्यविग्रहं परमपुरुषमधिकृत्य मुखरभ्रमर-भरितमहोद्यानपरिवृतकुरुकापुरावतीर्णेन श्रीशठवैरिसूरिणा मधुरगानार्हतयाऽनुगृहीते द्राविडवाङ्मये सहस्रे दशकमिदमधीयाना दिव्यं धाम विगाह्यानन्दानुभवशालिनो भवितार इति फलकीर्तनेन समापितमिदं दशकम् ॥ .... (११)

—* एतद्दशकार्थसारसंग्राहको द्रमिडोपनिषत्संगतिश्लोकः *—

आत्मान्वयिष्वपि हरेः प्रियतामवेक्ष्य सर्वात्मनस्स्वजनयन् मुनिरष्टमेन ।
मोक्षप्रदत्वमुपदिश्य तदाभिमुख्यालाभात् स्वलाभमधिकं बहुमन्यते स्म ॥

—* ग्यारहवी गाथा—कण्डलङ्गळ् शेय्य करुमेनियम्मानै *—

(हिंदी) रक्तकमल-सदृश नेत्रवाले, श्यामसुंदर परमपुरुष को लक्ष्यकर झंकार करनेवाले भ्रमरों से परिपूर्ण महोद्यानपरिवृत श्रीकुरुकापुरी में अवतीर्ण श्रीशठकोपसूरी की गायी हुई, मधुर गान करने योग्य हजार गाथाओं के अंतर्गत इस दशक का अध्ययन करनेवाले दिव्यधाम पहुंचकर सीमातीत ब्रह्मानंद के भागी बनेंगे। (इस फलश्रुति के साथ यह दशक समाप्त किया गया॥) .... .... (११)

आळ्वार तिरुवडिगळे शरणम्॥

सहस्रगीति में दूसरे दशक का आठवा दशक समाप्त हुआ॥

श्रीपराङ्कुश-परकाल-यतिवर-वरवरमुनीन्द्रेभ्यो नमः

## ॥ सहस्रगीत्याम् - द्वितीयशतके - नवमं दशकम्—एम्मावीडु ॥

(सं.) अवतारिका—अधस्तनदशके परमात्मस्वरूपशोधनमकारि मोक्षप्रदत्वप्रपञ्चनेन। तत्प्रसङ्गेनास्मिन् दशके जीवात्मस्वरूपशोधनं क्रियते पारतन्त्र्यपरिष्करणेन। रामानुजपदच्छायेति प्रसिद्धाः श्रीगोविन्दभट्टारका एतद्दशकार्थप्रवचनावसरे स्थितानां श्रोतृजनानामधिकारं परिशोध्य पिधाय च कवाटिकामुपदिदेशुरिति प्रसिद्धम्। एतद्दशकप्रतिपाद्यार्थविशेषस्यानुष्ठानदौष्कर्यमुक्तं भवति। श्रीमदष्टाक्षरमहामन्त्रे प्रणवनारायणयोर्मध्ये विराजमानस्य नमःपदस्य प्राशस्त्यमत्यधिकं प्रतिपद्यन्तेऽस्मदाचार्याः। अधीतसांप्रदायिकबहुग्रन्था अपि नमसोऽर्थं यथावदवगच्छन्ति वा न वेति सन्देग्धव्यमेव भवति। भगवान् लोकाचार्यो मुमुक्षुप्पडि नाम्नि रहस्यत्रयार्थविवरणपरे रहस्यग्रन्थे नमसोऽर्थं तत्प्रभावं च विपुलेन वचोराशिना विस्तृणीते। नमःपदार्थज्ञानतः पूर्वं कीदृशी प्रतिपत्तिः, अथ ततः परं कीदृशी प्रतिपत्तिरिति विविच्य प्रतिपादनमुखेन नमःपदार्थप्रभावमवगमयति मुमुक्षुप्पडिग्रन्थे। तत्रैकनवतितमचूर्णिकायामिदमनुगृह्यते;—चिदचिदीश्वरभेदेन भिदुरं हि तत्वत्रयम्। चित्स्वरूपम् अचित्स्वरूपम् ईश्वरस्वरूपं चावबुध्यमानाः ईश्वरस्य स्वातन्त्र्यम् अचितः पारतन्त्र्यम् चितः स्वातन्त्र्यपारतन्त्र्योभयशालितां चावबुध्यन्ते नमःपदार्थज्ञानतः प्राक्; ज्ञानात्परतस्तु पारतन्त्र्ये चिदचितोरविशेषमवधारयन्ति—इति। इदमत्र विवरणम्। अवतारेषु भगवान् * इमौ स्म मुनिशार्दूल! किङ्करौ समुपस्थितौ। आज्ञापय यथेष्टं वै शासनं करवाव किम् ॥ * इत्याद्युक्तप्रकारेण प्रकाशितपारतन्त्र्योऽपि सन् * स्वरूपं स्वातन्त्र्यं भगवत इदं चन्द्रवदने! * इति श्रीगुणरत्नकोशोदितप्रकारेण स्वातन्त्र्यैकनिरूपणीयः स्वार्थपर एव भवति। चन्दनपवनकुसुमचन्द्रिकादीन्यचिद्वस्तूनि चैतन्यराहित्येन स्वार्थपरत्वप्रसक्त्यभावात् पारार्थ्यैकवेषाणि भवन्ति। (प्रणवे) अकारोपरि लुप्तया चतुर्थ्याऽवगमितं शेषत्वम्, मकारेणावबोधितं ज्ञातृत्वं च बिभ्राणो जीवात्मा तु ज्ञातृत्वबलेन स्वार्थतायाः शेषत्वबलेन परार्थतायाश्च साधारणो भवतीति गृह्णन्ति नमःपदार्थविवेचनतः प्राक्। परतस्तु पारार्थ्यैकवेषमचिद्वस्त्विव जीवोऽपि पारार्थ्यैकनिरूपणीयो भूत्वा शेषिण इष्टविनियोगार्हत्वमेव स्वस्वरूपं मन्वानः तादृशविनियोगाशंसां मा स्वीकुर्विति शेषिणस्सविधे प्रार्थनां कारयति नमःपदमिति प्रतिपद्यन्ते। इति।

प्रायो विद्वांसोऽपि शेषत्वपारतन्त्र्ययोः पर्यायतां मन्यन्ते। नैवम्। शेषत्वादतितरामभ्यर्हितं पारतन्त्र्यमिति वस्तुस्थितिः। श्रीरामायणपुरुषेषु सौमित्रिः शेषत्वं प्रदर्शितवान्; तत उत्तुङ्गं पारतन्त्र्यं भरतः प्रदर्शितवान् स्वानुष्ठानतः। वनप्रस्थानकाले अयोध्यायामेव वर्तस्वेति, ततश्चायोध्यां प्रतिनिवर्तस्वेति च भगवता रामेण निर्बद्धोऽपि सौमित्रिर्नान्वमन्यत। भरतस्तु * स काममनवाप्यैवेति उक्तियोग्योऽपि सन् * आरुरोह रथं हृष्ट इत्युक्तेरपि योग्यतामुवाह। पारतन्त्र्यं प्राणिति स्मेति हि तस्य हृष्टमनस्कता। अन्ततो मकुटाभिषेकसमयेऽपि * सर्वात्मना पर्यनुनीयमानो यदा न सौमित्रिरुपैति योगम्। नियुज्यमानोऽपि च यौवराज्ये तदाऽभ्यषिञ्चद्भरतं महात्मा ॥ इत्युक्तरीत्या लक्ष्मणे पारतन्त्र्यविधूननम् भरते तत्प्रख्यापनं च हि दृष्टम्। किं बहुना? पारतन्त्र्यस्य प्रभावं भरत एव श्रीरामायणेऽत्यद्भुतप्रक्रियया प्रख्यापितवान्। तथाहि। पितुर्दशरथस्य चरम-

क्रियामनसाध्य महता खेदेनाभिभूतः शेते भरतः; तदानीं कैकेयी समुपसृत्य "उत्तिष्ठोत्तिष्ठ किं शेषे राजन्" इत्याह; पुरोधा वसिष्ठो महर्षिरप्यत्र सहयोगमदर्शयत्। अथ किमासीत्? [विललाप सभामध्ये जगर्हे च पुरोहितम्] महदसाधारणमैश्वर्यम् संभूय द्वावेतेऽपहरन्तीति मांसापहारसमयेष्विव लुठित्वा रुरोद। 'सभामध्ये' इत्येतत् काकाक्षिन्यायेन पूर्वतः परतश्चान्वेति—[सभामध्ये विललाप, सभामध्ये पुरोहितं जगर्हे च] "प्रमादादाचार्यस्य बुद्धिपूर्वं वा नियमातिक्रमं रहसि बोधयेत्" इत्यापस्तम्बशासनमप्यतिलङ्घ्य महासभामध्ये वसिष्ठगर्हणमकार्षीत्। पुरो हितं पश्यतीति पुरोहितः; मम अहितमेव पश्यसि हन्त! कथमिव पुरोहितो व्यपदिश्यसे? इति तावज्जगर्हे। 'नाहं ते किमप्यहितं पश्यामि, हितमेव तु पश्यामि' इत्युक्तवति पुरोधसि, [राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि] इत्याह भरतः। अस्मिन्नेव वाक्ये रहस्यार्थः प्रतिष्ठितः। द्वे वस्तुनी एकस्य प्रभोः शेषभूते यदि, ते उभे अपि शेषी प्रभुरेवहि स्वार्थं विनियोक्तुमर्हति; अन्यतरस्य वस्तुनोऽन्यतरवस्तुविनियोग्यत्वं यदि युज्येत, तर्हि राज्यं मया पालनीयमिति को निर्बन्धः? राज्यमेव मां पालयतु कामम् शेषत्वाविशेषात्, इत्युक्तवान् भवति। अथ प्रसङ्गोऽभवत्; राज्य तावदचेतनम्; त्वं तु चेतनोऽसि; अचेतनस्यैव चेतनपाल्यत्वं योग्यम्; चेतनस्याचेतनपाल्यत्वमसंभवीति। तदाकर्ण्य पुनरपि विललाप भरतः—हन्ताहमचेतनजन्म विहाय धिक्कारार्हचेतनजन्म लब्धवानस्मि इति॥ 'अहं राज्यं च रामस्य' त्वनभिप्राय * राज्यं चाहं च रामस्येति राज्यस्य प्रथमताम्बूलप्रदानतो लम्भितोऽयमर्थः। राज्यस्य प्रजावर्गानतिरेकितया प्रजानां च चेतनत्वेन ता एव मां पालयन्तु; अहं तु सर्वथाऽप्यचिद्वत्परतन्त्र एवास्मीति सुदृढमभिधायैव श्रीरामसन्निधिं प्रतस्थे। [कथं दशरथाज्जातो भवेद्राज्यापहारकः] इति च सुरुचिरमभिदधे। द्वेधाऽत्र निर्वाहः—दशरथाज्जातः कथं राज्यापहारको भवेदिति तु सर्वविदितम्। राज्यापहारकः कथं दशरथाज्जातो भवेदित्यपि विवक्षा।

एतादृश पारतन्त्र्य लक्ष्मणेऽपि च कश्चिदपेक्षितुमर्हमासीत्। पञ्चवटीप्राप्तिसमनन्तरं रामो लक्ष्मणमुद्दिश्य "आश्रमः कतरस्मिन्नो देशे भवति सम्मतः। रमते यत्र वैदेही त्वमहं चैव लक्ष्मण॥ तादृशो दृश्यतां देशः सन्निकृष्टजलाशयः। वनरामण्यकं यत्र जलरामण्यकं तथा। सन्निकृष्टं च यस्मिंस्तु समित्पुष्पकुशोदकम्॥" इत्यादिशत्। न्याय्य एव ह्ययमादेश इति सर्वेऽपि मन्येरन्। लक्ष्मणस्य धिया न न्याय्यः प्रतिभौ। अन्याय्य एवायमादेश इति प्रतियन् "परवानस्मि काकुत्स्थ। त्वयि वर्षशतं स्थिते। स्वयं तु रुचिरे देशे क्रियतामिति मां वद॥" इतीदं वचनमब्रवीत्सीतासमक्षं काकुत्स्थम्। अत्र रस्य रहस्यमर्थं पूर्वाचार्येभ्य इतरे के वा विज्ञातुमीशते? मनाग्विवृणुमः। सन्निकृष्टजलाशयो देशो दृश्यतामिति लक्ष्मणमुक्तवतो रामस्य कोऽभिसन्धिः? विप्रकृष्टजलाशयो देशश्चेत् लक्ष्मणः परितप्येत। रामो वा सीता वा जलाशयाज्जलं नाहरिष्यतः; * अहं सर्वं करिष्यामीति सोत्साहं प्रतिज्ञातवता सौमित्रिणैव ह्याहर्तव्यं स्यात्। सुदूरत आहरणकाले, हन्त! वनवाससुखं सुरुचिरम्! धिगीदृशं मे दुर्भगजीवितम्! इति परितप्तहृदा भूयेत सौमित्रिणा; सन्निकृष्टजलाशयत्वे तु नैवंविधपरितापावकाशः इति मत्वैव रामः सन्निकृष्टजलाशयो देशो दृश्यतामित्यादिशतीति मन्यमानो लक्ष्मणो विकृतमना बभूव। अथ च प्राह [परवानस्मि काकुत्स्थ! त्वयि वर्षशतं स्थिते] कैकेयीवरयाच्ञापूरणार्थं चतुर्दशहायनमात्रमेव मा भूद्राघव ते वनवासः; वर्षाणां शतमपि वासो भवतु कामं वने। यन्त्रादीन्यचेतनवस्तूनि यथा विकृतिलेशं विनैव कर्म कुर्युः, तथा कर्तुं ह्यहमुत्कण्ठितः। अतश्च [स्वयं तु रुचिरे देशे क्रियतामिति मां वद] अचिद्वत्परतन्त्रस्य मे रुचिर्नावेक्षणीया; स्वकीया रुचिः केवलमादिश्यताम् इति तावद्विवक्षा लक्ष्मणस्य।

एतादृग्वैभवशालि पारतन्त्र्य प्रार्थ्यते मुनिवरेण दशकेऽस्मिन्। ननु अविद्वत्पारतन्त्र्यं यदि काङ्क्ष्यते तर्हि प्रार्थना कथ युज्यते? न खलु प्रार्थ्यते किमप्यविद्वस्तु, स्व पारार्थ्यं क्रियैव हि प्रदर्शयति तत्, तथा मुनिवरोऽप्येष स्वया क्रियया पर प्रदर्शयतु तत्, इति चोद्य मा भूत्, पुरुषार्थत्वाय प्रार्थना क्रियते। पुरुषैरर्थ्यत इति हि पुरुषार्थः। किंच, चैतन्य व्यपोहनानर्हं भवतिष्ठत एव खलु, तेन च फलत्वेन भवितव्यम्, प्रार्थनामात्रमेव फल तत् इत्यपि ग्राह्यम्। ज्ञातृत्वादपि शेषत्वमभ्यर्हितमित्युच्यते, तावता ज्ञातृत्व नापोह्यते, शेषत्वज्ञानमेव तत्फलमिति यथा निरूह्यते तथा ह्येतत्। स्वाभिमतपुरुषार्थनिष्कर्षपूर्वक तत्प्रार्थना क्रियत इति तात्पर्य दिक्सारम्॥

**दूसरे शतक के नवें दशक की अवतारिका**—पिछले दशक में भगवान का मोक्षप्रदत्व और उसके द्वारा उनका परत्व बताया गया। इस प्रसग से प्रकृत दशक में जीवात्मा का स्वरूप, जो भगवत्परतंत्रतारूप है, बताया जाता है। यह अर्थ समझने में, तथा अनुष्ठान करने में बडा कठिन है। अत एव पूर्वाचार्यों ने इसे परमरहस्यार्थ मान कर योग्य अधिकारियों को ही इसका उपदेश दिया। सुना जाता है कि श्रीरामानुजस्वामीजी के प्रधानशिष्य, 'रामानुजपदच्छाया' बिरुदविभूषित श्री गोविंद (एम्बार) स्वामीजी ने, अपने श्रोताओं में एकैक के भी अधिकार की परीक्षा कर लेने के बाद उनमें से योग्य अधिकारियों को बिठाकर (दूसरों को बाहर भेजकर) कवाट बद कर ही इस दशक का उपदेश दिया। हमारे आचार्यों के सिद्धात के अनुसार, अष्टाक्षर महामत्र के बीच में रहनेवाला नम पद दूसरे पदों से अधिक माहात्म्यवाला होता है। इस बात की शका ही करनी पडती है कि अनेक साप्रदायिक ग्रंथों का अध्ययन करके ज्ञानी कहलानेवाले बडे बडे विद्वान भी ठीक ठीक नमश्शब्दार्थ जानते हैं कि नहीं। भगवान लोकाचार्य स्वामीजी अपने विरचित 'मुमुक्षुप्पडि' नामक मत्रार्थग्रथ में नमश्शब्दार्थ का बहुत विस्तृत वर्णन करते हैं। इस अर्थ को हमारे मन में ठीक बिठाने के लिए आप यह विवेचन कर बताते हैं कि नमश्शब्द का अर्थ जानने से पहले हमारा क्या विचार रहा और यह जानने के बाद यह विचार कैसे पलट गया। उस प्रकरण के एकानवें सूत्र में आप कहते हैं कि—तत्व तो तीन होते हैं—चेतन, अचेतन व ईश्वर। साधारणतया शास्त्राभ्यास करनेवालों का यह विचार होता है कि सर्वथा स्वतत्र रहना ईश्वर का स्वरूप, परतत्र रहना अचेतन का स्वरूप और कदाचित् स्वतत्र एव कदाचित् परतत्र रहना चेतन का स्वरूप है। नमश्शब्दार्थ जाननेवालों का यह सिद्धात होता है कि अचेतन की भाँति परतत्र रहना ही चेतन का भी स्वरूप है।" इसका यह भाव है—अवतारों में भगवान् कदाचित् विश्वामित्र, अर्जुन इत्यादियों के परतत्र जैसे दीख पडते हैं, तथापि निरकुशस्वतत्र रहना ही उनका स्वरूप है, उक्त पारतन्त्र्य भी स्वतत्रता का ही एक रूपांतर होता है। चदन, पुष्प, पवन, चांदनी इत्यादि तो चैतन्यशून्य होने के कारण अपने किसी स्वार्थ से विरहित होते हुए सर्वथा परतत्र ही रह जाते हैं। मत्र के पहले पद, प्रणव में अकार के ऊपर लग कर बाद में लुप्त चतुर्थी विभक्ति से जीव भगवान का शेष, और मकार से वही ज्ञाता बताया जाता है। अत सामान्यत हमें कहना पडता है कि यह चेतन, भगवान का शेष होने से परतत्र, और ज्ञाता होने से स्वतत्र, दोनों होता है। परतु नमश्शब्द, प्रभु के पास चेतन की यह प्रार्थना बताता है कि, "हे देव! मैं सर्वथा अपना स्वातत्र्य छोड कर अचेतन की भाँति आपका परतत्र रहता हुआ, आपके अपनी इच्छा के अनुसार काम में उपयुक्त होने योग्य हो जाऊं।"

संप्रदाय में शेषत्व व पारतंत्र्य, ये दो शब्द ऐसे निगूढ अर्थवाले होते हैं जिन्हें कितने ही विद्वान पर्याय मानते हैं। परंतु यह उनकी भूल है; क्योंकि इन दोनों के अर्थ में बहुत अंतर रहता है। तथाहि—शेषत्व की परिपक्व अवस्था ही पारतंत्र्य कहलाती है। अब इसका दृष्टांतपूर्वक विवरण करेंगे। श्रीरामायण पुरुषों में लक्ष्मणजी ने शेषत्व का, और भरतजी ने उससे भी श्रेष्ठ पारतंत्र्य का अनुष्ठान किया। तथाहि—लक्ष्मणजी श्रीरामचंद्रजी की बहुत सेवा की तो सही; परंतु वे कदाचित् उनकी स्पष्ट आज्ञा को टाल भी देते थे। अपने साथ वनप्रस्थान करने को तैयार हुए उनको श्रीरामचंद्रजी ने बहुत रोक दिया; अयोध्या में रहकर माताजी की सेवा करने का आग्रह किया; वनप्रस्थान करने के बाद भी उन्हें अयोध्या लौट जाने का बहुत आग्रह किया; परंतु लक्ष्मणजी ने उनका एक न सुना; किंतु आग्रहपूर्वक प्रभु के साथ ही रह गये। अब भरतजी का विचार लीजिए। उन्होंने चित्रकूट पधार कर प्रभु से बहुत प्रार्थना की कि "आप कृपया अयोध्या पधार कर राजगद्दी को अलंकृत कीजिए; आपके रहते हुए मैं राजा बन कर अपना स्वरूप खोना नहीं चाहता; अथवा लक्ष्मणजी की भाँति दास को भी अपने साथ ले जाइए" इत्यादि। परंतु प्रभु की इच्छा दूसरी ही हुई। उन्होंने अपनी पादुका देकर भरतजी को अयोध्या लौटने की आज्ञा दी। तब भरतजी ने क्या किया? उन्होंने लक्ष्मणजी की भाँति प्रभु की आज्ञा उड़ा देने का विचार नहीं किया; परंतु उसीके अनुसार "आरुरोह रथं हृष्टः"—सानंद रथ पर चढ गया—अयोध्या जाने के लिए। यह तो स्पष्ट है कि भरतजी की इच्छा सफल नहीं बनी। अत एव संक्षेपरामायण में कहा गया कि—"कामम‍नवाप्यैव... नन्दिग्रामेऽकरोद्राज्यम्" (माने भरतजी की कामना विफल हुई; वे नंदिग्राम में रामपादुका के आसरे राज करने लगे। फिर भरतजी संतुष्ट कैसे हुए? बात यह कि भरतजी इस बात पर प्रसन्न हुए कि कुछ भी हो, मैं तो स्वतंत्र राजा न बना, (किंतु पादुका का आज्ञाधारक,) और प्रभु की आज्ञा पालने से मेरा पारतंत्र्य भी सुरक्षित हुआ। दूसरे भी एक ऐसे प्रकरण में इन दो भाइयों की यह विशेषता दीख पडती है। रावण-संहार के बाद श्रीरामचंद्रजी ने अयोध्या पधारकर राजगद्दी पर विराजमान होकर किसीको युवराज बनाना चाहा। तब उन्होंने लक्ष्मणजी को कहा कि तुम युवराज बन कर मेरा सहायक हो। मालूम पडता है कि प्रभु ने इस विषय में बहुत समझाया, और मीठी मीठी बातों से विनती की; आज्ञा की; शपथ भी किया। वाल्मीकीजी कहते हैं कि "सर्वात्मना पर्यनुनीयमानः सौमित्रिः।" यहां पर ये दो उपसर्ग परि व अनु, और सर्वात्मना शब्द, ये सभी बताते हैं कि प्रभु ने लक्ष्मणजी को युवराज बनाने का बहुत प्रयत्न किया। परंतु प्रभु के ये सभी प्रयास बेकार हुए; लक्ष्मणजी ने स्पष्ट शब्दों से उसका निषेध कर दिया। (उनका यह भय था कि राजगद्दी पर बैठने से मुझे प्रभु की सेवा करने का अवकाश शायद नहीं मिलेगा; यह बात दूसरी है।) फिर लक्ष्मणजी से निराश होकर प्रभु ने भरतजी को युवराज बना दिया। भरतजी ने क्या किया? "जो आपकी मरजी" कहते हुए चुप चाप गद्दीपर वे बैठ गये। उनका यह विचार था कि, "मैं तो भगवान की संपत्ति हूं। संपत्ति तो वही है जिसे मालिक अपनी इच्छा के अनुसार काम में ले सकता है। उसमें विघ्न करने से हम अपने (परतंत्रतारूप) स्वरूप से भ्रष्ट होते हैं। अतः उनकी इच्छा के अनुगुण चलना ही हमारे योग्य काम है।" अतः इन दोनों प्रकरणों में यह स्पष्ट है कि शेष होते हुए ही लक्ष्मणजी ने भगवान के परतन्त्र होकर उनकी इच्छा के

अनुसार चलना नहीं चाहा; परंतु भरतजी ने अपनी निजी इच्छानिच्छाओं का ख्याल तक नहीं करते हुए प्रभु की आज्ञा पाली। और एक प्रकरण में उनका यह पारतंत्र्य अतिस्पष्ट देखा जाता है। अयोध्याकांड की कथा है। मातुलगृह से अयोध्या पधार कर भरतजी वहां के सभी दुःखद वृत्तांत सुनकर शोकाविष्ट होकर रोते रोते भूतल पर सो गये। तब कैकेयी ने कहा—"उत्तिष्ठोत्तिष्ठ किं शेषे राजन्!" (हे राजन्! उठो, क्यों कर सो रहे हो) इत्यादि। वसिष्ठजी ने उनसे राजा बनने का आग्रह किया। दूसरे मंत्रि पुरोहित नागरिक आदि ने भी वसिष्ठजी से अपने स्वर मिला दिये। तब भरतजी ने क्या किया? विललाप सभामध्ये जगर्हे च पुरोहितम्। वे उस सभा में ही ऊंचे स्वर से रोने और अपने कुलपुरोहित वसिष्ठजी की निंदा करने लगे। भरतजी को यों लगा कि ये सब मिलकर मेरे अमूल्य धन, पारतंत्र्य को लूट रहे हैं। अतः लुटेरों के द्वारा पीड़ित किसी यात्रीकी भाँति वे उस सभा के मध्यमें रहते ही रोने लगे। जब इतनेमें से भी काम न चला, तब वे उस सभामध्य में वसिष्ठजी का भी खूब तिरस्कार किया। महर्षि आपस्तंब कहते हैं कि "गुरु का तिरस्कार करना अनुचित है; और यदि कदाचित् गुरु शास्त्रमर्यादा का उल्लंघन करें, तो उनसे रहस्य में ही उस अतिक्रम की विनती करनी चाहिए।" परंतु भरतजी ने इस धर्मशास्त्र को भी हवा में उड़ा दिया और कहा कि वही पुरोहित कहलावेगा जो आगे का हित जानेगा और करेगा। वसिष्ठजी ने कहा कि मैं ने तुम्हारा कोई अहित नहीं किया; तब भरतजी ने इसका प्रत्युत्तर दिया कि "राज्यं चाहं च रामस्य धर्मं वक्तुमिहार्हसि।" इसी मानस में अत्यद्भुत रहस्यार्थ गर्भित है। इसका यह भाव है—यह राज्य और मैं (भरत), दोनों श्रीरामचंद्रजी की संपत्ति हैं। यदि एक मालिक की दो संपत्तियां हों, तो उनमें से एक दूसरी पर अधिकार नहीं चला सकती। एकमात्र मालिक दोनों को अपनी इच्छा के अनुसार काम में ले सकता है। अतः यदि आप मुझे इस राज्य पर अधिकार करने की बात करते, तो इस राज्य को ही आप क्यों आज्ञा नहीं करते कि तुम भरत को संभालो। इस पर किसीने कहा, कि, "तुम्हारी बात ठीक है। परंतु राज्य, अचेतन होने से दूसरों का पालन नहीं कर सकेगा, चेतन होने से तुम राज्य का पालन कर सकोगे।" यह सुनकर भरतजी फिर रोने लगे—"चेतन होने के कारण ही अब मेरे सिर पर यह राज करने की आपत्ति आ पड़ी; यदि राज्य की भाँति मैं भी अचेतन ही रह जाता तो कितना अच्छा होता!" उपदर्शित भरतवचन में "अहं च राज्यं च" कहने की जगह, "राज्यं चाहं च रामस्य" कहते हुए उन्होंने राज्य का जो प्राधान्य दिया, उसका यह तात्पर्य है। इसके उपरांत श्री भरतजी ने "कथं दशरथाज्जातो भवेद्राज्यापहारकः?" इत्यादि बहुत प्रलाप किया। इस वाक्य के दो अर्थ होते हैं—दशरथ का पुत्र होकर मैं कैसे (श्रीरामचंदजी की संपत्ति) राज्य का अपहार कर सकूंगा? अथवा, राज्य का अपहार करनेवाला मैं कैसे दशरथ का पुत्र हो सकूंगा? ऐसी अनेक बातें करते हुए महात्मा भरतजी प्रभु को अयोध्या लौटाने के उद्देश से चित्रकूट पधारे।

एक समय पर स्वयं लक्ष्मणजी ने भी ऐसे पारतंत्र्य का प्रदर्शन किया। (आरण्यकांड में) पंचवटी पहुंचते ही श्रीरामचंदजी ने अपने भाई से कहा कि, "लक्ष्मण! ऐसा एक अच्छी जगह ढूंढ निकालो, जो सुंदर हो; मुझे, सीता को और तुझे भी अच्छी लगे; और जहां पानी, लकड़ी, समिध, पुष्प इत्यादि आराम से मिलें; और उधर पर्णशाला बनावो।" हमारे अभिप्राय में इस बात में कोई दोष नहीं दीखता। परंतु

लक्ष्मणजी को यह बहुत बुरी लगी। अतः उन्होंने तुरंत हाथ जोडकर सीताजी के सामने प्रभु से विनती की कि, "परवानस्मि काकुत्स्थ! त्वयि वर्षशतं स्थिते। स्वयं तु रुचिरे देशे क्रियतामिति मां वद।" इस पद्य में जो रहस्यार्थ निगूढ है, उसे हमारे पूर्वाचार्यों के सिवा दूसरा कौन समझ सकेगा? लक्ष्मणजी का यह विचार हुआ—अब प्रभु पर्णशाला के लिए योग्य स्थान ढूंढनेका काम मेरे सिर पर लाद रहे हैं, और स्पष्ट कह रहे हैं कि जहां तुम्हें पानी, लकडी इत्यादि वस्तु आसानी से मिलें, ऐसा स्थान ढूंढ निकालो। शायद उनका यह विचार होगा कि मैं उनकी सेवा करता करता थक गया हूं और बहुत दूरसे पानी भरना, फूल चुनना, लकडी लाना इत्यादि पसंद नहीं करूंगा। मैं तो सर्वदेश-सर्वकाल-सर्वावस्थोचित उनकी सर्वविध सेवा करने के उद्देश्य से आया हूं; इसमें मुझे दूसरा कोई स्वार्थ नहीं रहता। ऐसे होते हुए भी क्योंकर प्रभु के मन में मेरे विषय में यह शंका हुई? शायद वे मेरी परीक्षा लेना चाहते होंगे। यों सोचकर उन्होंने उत्तर दिया—"परवानस्मि" इत्यादि। इसका यह भाव है—प्रभो! कैकेयी की वरयाचना के अनुसार आप केवल चौदह वर्ष नहीं, किंतु सेकडों वर्ष वनविहार कीजिए; इसमें चिंता नहीं; मैं तो सर्वदा आपका परतंत्र ही रहनेवाला हूं, अर्थात् आपकी इच्छा के अनुसार ही सेवा करनेवाला हूं। अतः आप मेरे सौकर्यासौकर्यों की चिंता दूर कर अपना इष्ट स्थल चुन कर मुझे आज्ञा दीजिए कि अमुक स्थल पर पर्णशाला रचो। उसी प्रकार मैं करूंगा। अर्थात् यत्रादि अचेतन वस्तु की भांति ही आप मुझसे योग्य सेवा लीजिए; मेरी इच्छा की परीक्षा करने का कष्ट मत उठाइए। तथाच लक्ष्णजी ने इस सिद्धांत को प्रकाशित किया कि, प्रभु की सेवा करते हुए हमें, अपनी इच्छा, अनुकूलता इत्यादि किसी स्वार्थ का ख्याल किये विना, इस प्रकार सेवा करनी चाहिए, जिसे वे विना किसी संकोच के और सानंद स्वीकार कर सके। इसीका नाम पारतंत्र्य है, जो हमारे स्वातंत्र्य का विरोधी है।

हाल में आळ्वार ऐसे विलक्षण पारतंत्र्य की माँग कर रहे हैं। इस पर कोई पूछेगा कि "यदि अचेतनवत् परतंत्र रहना ही आळ्वार का इष्ट हो, तो उन्हे अचेतन-से पडे रहने चाहिए; आप इस विषय की प्रार्थना कैसे कर सकते हैं? क्या अचेतनवस्तु कभी प्रार्थना भी करती है? नहीं; किंतु अपने व्यापार से ही पारतंत्र्य का ख्याल कराती है। अतः आळ्वार को भी अचेतनवत् चुप रहते हुए ही अपना पारतन्त्र्य बताना चाहिए।" चैतन्यविरहित होने के कारण अचेतन वस्तु कोई प्रार्थना नहीं कर सकती; जीवात्मा तो सर्वदा चैतन्यवान ही होता है; अतः उसके चैतन्य का भी कुछ उपयोग होना आवश्यक है। उक्त प्रार्थना ही यह उपयोग है। अर्थात् चेतन होने से इस जीवात्मा के भी इष्ट व अनिष्ट हो सकते हैं। अब भगवान यह जानना चाहते हैं कि मेरा परतंत्र रहना इसका इष्ट है कि नहीं? अतः भगवान से यह विनती करनी ही पडती है कि मैं सर्वदा आपका परतंत्र ही रह जाऊँ। जैसे कि ज्ञातृत्व व शेषत्व नामक दो धर्मों में आत्मा के शेषत्व को ज्ञातृत्व से श्रेष्ठ कहने से ज्ञातृत्व का अपलाप अथवा तिरस्कार नहीं किया जाता, किंतु शेषत्वज्ञान ही उसका फल बताया जाता है, इसी प्रकार यह पारतंत्र्यज्ञान (व प्रार्थना) भी उसी ज्ञातृत्व (माने चैतन्य) का फल होता है। तथाच यह तात्पर्य हुआ कि अब आळ्वार अपने इष्ट पुरुषार्थ का वर्णन करते हुए भगवान से उसे माँग भी करते हैं॥ .... .... (*)

(गाथा.) एम्मावीट्टु चिरमुम् शेप्पम् * निन् शेम्मा पादपर्पुं चलैशेर्त्तोंह्लै *
कैम्मा तुन्बम् कडिन्द पिराने * अम्मा अडियेन् वेण्डुवदीदे ॥ १ ॥

सत्वरमुपेत्य हस्तिराजस्यार्तिमपहृतवन् भगवन् ! परमविलक्षणो मोक्षोऽपि हन्त ! न मयाऽपेक्ष्यते ; माभून्नाम तत्प्रसङ्गोऽपि । त्वदीयं दिव्यपादपद्मं मम शिरसि झटिति निधेयम् ; प्रभो ! दासेन मयाऽपेक्ष्यमाणमेतावदेव ॥

अवतारिकायां सुविपुलमुपपादित. परमपुरुषार्थ उपरिष्टाच्चतुर्थ्यामेव गाथायां प्रस्तोष्यते । उपक्रम एवं तत्प्रार्थनमरसिककृत्यं हि स्यात् । लोकेऽपि कस्यचिन्महात्मनस्सविधे किमप्युत्तुङ्गं वस्तु याचितुं प्रयातो जनो न खलु प्रथमपदे तद्याचते, लोकाभिरामयोगक्षेमविचारादि कृत्वा क्रमेण ह्युद्देश्यं वस्तु याचते । तथैव मुनिवरोऽपि ह्रित्रासु गाथासु सामान्यपुरुषार्थाभ्यर्थनामाकलय्य अथ विशिष्टपुरुषार्थमभ्यर्थयिष्यते । मुनिवरस्यास्य मोक्षकामना बलीयसी वर्तत इति गृह्णन् भगवान् 'भो मुनिसार्वभौम ! मोक्षो दीयते, गृह्यताम्' इत्याह । मुनिराह 'नाहं त कामये' इति । अथ भगवानाह 'विलक्षणमोक्षोऽसौ ; निषेधो नोचित: ; गृह्यताम्' इति । नैवाहं कामये इत्येव पुनरपि मुनिराह । अथ च भगवान् 'आः किमित्थमात्थ ! परमविलक्षणमोक्षस्तावदसौ ; * भोगा इमे विधिशिवादिपद च किं च स्वात्मानुभूतिरिति या किल मुक्तिरुक्ता * इत्यभिधीयमानेभ्य. पुरुषार्थेभ्योऽपि परमविलक्षणमिमं मोक्षं किमित्येवमन्यसे मुनिवर !' इति पप्रच्छ । "सीमातीतवैलक्षण्यशाली मोक्षोऽपि वा भवतु कामम् ; नैवाहं रोचये' इत्येव पुनरप्याह मुनिः । मोक्षप्रस्तावमात्रमपि मा भूत् ; प्रस्तावनिषेधयो रवकाशोऽपि मा स्म भूदित्याह । तर्हि किं नु कामयसे ? इति भगवता पृष्टो मुनिवरो ब्रवीति [त्वदीयं दिव्यपादपद्मं मम शिरसि झटिति निधेयम्] इति । * यावन्न चरणौ भ्रातुः पार्थिवव्यञ्जनान्वितौ । शिरसा धारयिष्यामि न मे शान्तिर्भविष्यति ॥ * इति ह्याह भरतश्चित्रकूटपरिसरे सेना निवेश्य रामाश्रममन्विष्यन् शत्रुघ्नं प्रति । एवमाचक्षाण मुनिवरं प्रति भगवानाह—ओम्, करवाणि तथेति । करवाणीति न वक्तव्यम् ; कृतवानस्मीति वदेत्युवाच मुनिवर, [झटितीत्यनेन ।] अथ किमर्थमेवं निर्बन्ध इति पृष्टवति भगवति, प्रत्याह मुनिः श्रीगजेन्द्रकथां स्मारयन् । * स तु नागवर. श्रीमन्नारायणपरायण । परमापदमापन्न. * इत्युक्तियोग्यायां स्थित्यां स्थितवति गजराजे, * भगवन्स्त्वरायै नमः * इत्युक्तियोग्या त्वरा हि भगवन् ! भवतस्समजनि ; स तावद्गजेन्द्र एकेन ग्राहेण ग्रस्त. ; अहं तु विषयसशब्दितैः पञ्चभिर्ग्राहैरभिभूये । गजस्य विपत्कालः परिच्छिन्न, मम तु विपत्तिरनादे. कालात् । स तु कस्मिंश्चिदल्पे ह्रदे विपन्न, अहं तु * विषयविषधरव्रजव्याकुले जननमरणनक्रचक्रसपदे भवाब्धौ ; तस्य शरीरनाश. केवलम्, मम त्वात्मान्तविनाशः । तस्य पाद एव ग्राहेण ग्रस्त. ; मम विषयग्रामग्राहबाधा तु देहेन्द्रियमन.प्राणबुद्ध्यात्मना सर्वेषामपि हन्त । एतावता वैषम्याणां विलोकने सति किं त्वया न त्वरितव्यम्' इयती परं मम कामना ॥ ... .... (१)

—* पहली गाथा—एम्मावीट्टु चिरमुम् शेप्पम् *—

(हिंदी.) शीघ्र पधारकर गजराज का दुःख दूर करनेवाले हे, प्रभो ! मैं परमविलक्षण मोक्ष नहीं माँगता ; उसका नाम तक नहीं लेता । परंतु आप अपने सुंदर पादपद्म को मेरे सिर पर शीघ्र रख दीजिए ; प्रभो ! दास तो इतना ही माँगता है ॥

अवतारिका में जिसका सुविशद वर्णन किया गया, उस पुरुषार्थ का प्रस्ताव आगे चौथी गाथा में किये जानेवाला है। दशक के प्रारंभ में ही वह प्रार्थना करना, अरसिकता का द्योतक होगा। लोक-व्यवहार में भी हम देखते हैं कि किसीसे कुछ माँगना चाहनेवाला जन, शुरू में ही सीधी अपनी प्रार्थना पेश नहीं करता; किंतु कुशलप्रश्न इत्यादि साधारण वार्ता करता, क्रमशः अपनी इच्छा प्रकट करता है। इस प्रकार आळ्वार भी दो तीन गाथाओं में साधारण पुरुषार्थ माँगते हुए, क्रमशः मुख्यपुरुषार्थ की माँग पेश करते हैं। अस्तु। यों मान कर कि आळ्वार मोक्ष माँग रहे हैं, भगवान ने उनसे कहा कि, "हे मुनिवर! यह लीजिए आपके लिए मोक्ष दे रहा हूं।" परंतु आळ्वार ने कहा, "मुझे मोक्ष नहीं चाहिए।" फिर भगवान ने कहा, "यह बडा सुंदर मोक्ष है, जिसका निषेध करना अनुचित है।" तो भी आळ्वार ने कहा, "रहने दीजिए; मुझे उसकी आवश्यकता नहीं।" और एक बार भगवान ने कहा, "मुनिवर! आप यह क्या कह रहे हैं? यह तो भूलोक, स्वर्गादि लोकों तथा अंततः कैवल्य के भोग से भी बडा विलक्षण भोग है। क्योंकर आप इसका निषेध कर रहे हैं?" इसका भी आळ्वार ने पूर्वोक्त प्रत्युत्तर ही दिया, "वह चाहे जैसा विलक्षण पुरुषार्थ हो; मैं उसे पाना नहीं चाहता। इतना ही नहीं; मुझसे उसका प्रस्ताव तक मत किया जायँ।" तब भगवान ने पूछा, "तो अंततः आप क्या माँग रहे हैं?" आळ्वार ने तब विनती की कि, [आप अपने सुंदर पादपद्मों को मेरे सिर पर शीघ्र रख दीजिए।] चित्रकूट पर्वत पहुंचने पर, सेना को वहीं खडी रख कर श्रीरामचंद्रजी का आश्रम ढूंढते हुए भरतजी ने यह उद्गार किया कि, 'जब तक मैं समस्तराजलक्षणों से सुशोभित बडे भाई के पादारविंदों का अपने सिर से धारण नहीं करूंगा, तब तक मेरे हृदय में शांति नहीं मिलेगी," इत्यादि। [शीघ्र रख दीजिए] कहने का यह भाव है कि बात करते हुए व्यर्थ ही कालक्षेप नहीं करना; किंतु शीघ्र ही यह काम कर देना। इस पर भगवान ने पूछा कि इतनी उतावली करनेका क्या कारण है। तब आळ्वार ने प्रत्युत्तर दिया, "प्रभो! यह तो आपको याद है न कि जब मगर से पीडित और अत्यंत दुःखी होकर गजराज ने आपको पुकारा, तब त्वरा के कारण आपकी कैसी दुरवस्था हो गयी? गजेंद्र एक मगर से पीडित था; मैं तो इंद्रियरूपी पांच मगरों से पीडित हूं। उसकी पीडा थोडे समय की थी; मैं तो अनादिकाल से पीडित रहता हूं। एवं वह एक छोटे से झील में मग्न था; मैं तो शब्दादि विषय व जन्ममरणादि रूप क्रूर प्राणियों के भरे हुए विशाल संसारसागर में डूब गया हूं। उसका केवल शरीर छूट जाने का भय था; मेरा तो आत्मनाश होनेवाला है। मगर ने उसका पादमात्र पकड लिया था; क्षुद्रविषयरूपी मगरों ने शरीर इंद्रिय मन प्राण बुद्धि और आत्मा नामक मेरे सर्वस्व को भी पकड लिया है। बस! ऐसी मेरी दुरवस्था देख कर क्या आप विलंब भी कर सकते हैं? अतः शीघ्र ही मेरी कामना सफल बना दीजिए॥ (१)

(गाथा) ईंदे यानुन्नै कोळ्ळ देऱ्ऱातुम् ※ एनु मैतोय्शोदि मणिवण्ण वेन्दाय् ※
एयुदा निन्कळल् यानेय्द ※ ञान क्कै ता कालक्कळिवु शेय्येले॥२॥

नीलमाणिक्यनिभशुभविग्रहविशिष्ट महाप्रभो! भवतस्सकाशे मयाऽभ्यर्थ्यमानमिदमेकमेव, तान्यत्कदाऽपि। यथाऽहं दुर्लभं भवत्पादयुग्ममवाप्नुयाम् तथा प्रयच्छ ज्ञानपाणिम्; मास्म कार्षीविलम्बम्॥

शास्त्रों में ये दो क्रूर पातक बताये गये हैं—स्वयं नास्तिक होकर दूसरे आस्तिकों को भी कुयुक्तियों से नास्तिक ही बनाने का प्रयत्न करना और भगवान के शेषभूत इस जीवात्मा को स्वतंत्र इत्यादि बताते हुए आत्मापहार नामक चोरी करना। अतः इन दोनों को छोड देनेका उपदेश यहां पर किया जाता है। (वेदों को प्रकाशित करनेवाले) कहने का यह भाव है कि भगवान ने आदिकाल में चतुर्मुख ब्रह्मा की सृष्टि कर, उसे समस्त वेदों का उपदेश दिया; अथवा भगवद्गीता में समस्तवेदों को अपने प्रतिपादक बताया; "वेदैश्च सर्वैरहमेव वेद्यः॥" .... .... .... (१०)

(गाथा.) पोरुळ्ळेन्रिव्वुलहम् पडैत्तवन् पुहळ्मेल् *
मरुळिल् वण्कुरुहूर् वण्शठकोपन् *
तेरुव्व् कोल्लचोन्न ओरायिरत्तु इप्पत्तु *
अरुळुडैयवन् ताळ् अणैविक्कुम् मुडित्ते ॥ ११ ॥

सृष्टिः कदाऽपि सफला स्यादिति प्रत्याशया जगत्सृजतो भगवतः कल्याणगुणेषु अयथाप्रतिपत्तिविरहितेन श्रीशठकोपसूरिणा समीचीनज्ञानसमृद्धये विज्ञापिते सहस्रे दशकमेतत् सांसारिकानुपप्लवान् विनिवर्त्य कृपानिधेर्भगवतः पादाब्जेन संश्लेषयेदनुसन्धातृजनम् ॥ इति फलकीर्तनेन समापितमिदं दशकम् ॥

भगवतो विशेषणानि विलक्षणानि हि भवन्ति तत्र तत्र। अत्र तु स्वसृष्टेस्साफल्यप्रत्याशया पुनः पुनस्सृष्टिकर्तृत्वरूपं विशेषणं भगवतो विन्यस्तम्। * अचिदविशेषितान् प्रलयसीमनि संसरतः करणकलेवरैर्घटयितुं दयमानमनाः * इति श्रीपराशरभट्टार्योक्तरीत्या, * अचिदनिशिष्टान् प्रलये जन्तूनवलोक्य जातनिर्वेदा। करणकलेवरयोगं वितरसि वृषशैलनाथकरुणे। त्वम् ॥ * इति वेदान्तार्योक्तरीत्या च दयाया जगत्सृष्टिहेतुत्वावगमेऽपि प्रत्याशाया अपि तद्धेतुत्वप्रतिपत्तिर्युज्यत इति मुनिवरस्य हृदयम्। द्वित्रिः कृतं किमपि कार्यं यदि विफलं भवति, अथ तस्य पुनः पुनः करणे प्रवृत्तिर्नोदियाद्विवेकिनः; एवं पुनःपुनस्सृष्टिं कुर्वतो भगवतस्तस्याः फलेग्रहित्वादर्शनेन सृष्टौ वैराग्यमेवोचितम्; तथाऽपि यदाकदाऽपि वा फलेग्रहिता स्यादेवेति प्रत्याशया पुनःपुनस्सृष्टौ प्रवृत्तिरुदेति। सहस्रनामाध्याये अनिर्विण्ण इति नाम द्विः श्रूयते; 'अनिर्विण्णस्स्थविष्ठः' इत्यत्र श्रीपराशरभट्टार्यभाष्यसूक्तिः—"सृष्ट्यादेः तत्तदिष्टदानस्य च असकृत्प्रयुक्तस्यापि संसारिषु विषयोन्मादादसंमुखीनेषु वैफल्येऽपि पुनस्तत्तदार्जनदुराशया अनिर्विण्णः—अनलसः; अत एव ह्यस्य अनाद्यन्तो जगद्व्यापारः" इति इमामेव गाथामनुसृत्यावतीर्णा। अत्र अनलस इति भाषणं चावधेयम्। अनलसः—तन्द्रारहितः। पुनः पुनरपि विफलेषु कृत्येषु पुनः प्रवृत्तिं तन्द्रैव हि रुणद्धि; तादृशी तन्द्रा नास्यास्तीति इदमपि श्रीशठकोपमुनीन्द्रसूक्तिमेवानुसृत्यानुगृहीतम्; पेरियतिरुवन्दादिदिव्यप्रबन्धे (१८) * शोम्बादिप्पल्लुरुवैयेल्लाम् पडर्विच वित्ता * इति हि शठकोपदिव्यसूक्तिः॥ 'अलसतामुत्सृज्य जगत्सृष्टिं कुर्वाण भगवन्!' इति तदर्थः॥ "आप्तकामत्वात् निर्वेदोऽस्य न विद्यत इत्यनिर्विण्ण." इति शाङ्करभाष्यं तु न दुष्यति; दिव्यप्रबन्धार्णवावगाहनभाग्यविरहादेव तैस्तथा भाषितमित्यास्थेयम्॥ .... .... .... .... (११)

—※ एतद्दशकसारार्थसंग्राहकमिदं द्रमिडोपनिषत्संगतिपद्यम् ※—

(श्लो.) एतन्निजार्थितमिहैव हरिः प्रदातुमासेदिवान्वनमहीधरमित्यवेक्ष्य ।
प्राप्यं तमेव च वदन्वयिनं च सर्वे प्राचीकशत्स दशमे दशके मुनीन्द्रः ॥

—※ ग्यारहवीं गाथा—पोरुळ्केन्ड्रुलहम् पडैत्तवन् ※—

(हिंदी.) यों सोचकर कि मेरा काम कभी फल देगा ही, इस जगत की सृष्टि करनेवाले भगवान के कल्याणगुणों में भ्रमरहित श्रीकुरुकापुरी के नाथ श्रीशठकोपसूरी के द्वारा विज्ञापित, अकल्मषज्ञानजनक सहस्रगीति के अंतर्गत यह दशक, (अपना अध्ययन करनेवालों को) समस्तसांसारिक क्लेश दूरकर भगवान के पादारविंदों के साथ मिला देगा। इस फलश्रुति के साथ यह दशक समाप्त किया गया ॥)

तत्र तत्र भगवान को दिये जानेवाले नाम बहुत विलक्षण होते हैं। प्रकृत गाथा में, "सृष्टि के सफल होने की आशा से आलस्य छोड कर पुनः पुनः जगत की सृष्टि करनेवाले," ऐसा एक विलक्षण नाम दिया गया है। यह भाव है—प्रलय काल में यह चेतनवर्ग अपने शरीर व इंद्रिय खोकर, लौकिक सुख भोगने की एवं साधनानुष्ठानद्वारा मोक्ष कमाने की शक्ति से विरहित होकर पंखों से विरहित पक्षि की भाँति निश्चेष्ट, अचेतन-सा पडा रहता है। इसकी यह दुरवस्था देखकर भगवान बडी दया से फिर सृष्टि करते हैं, माने इसे शरीर और इंद्रिय देते हैं। उनकी आशा है कि उन शरीरेंद्रियों से यह चेतन अपनी (भगवान की) सेवा कर ससारसागर को पार कर परमधाम पहुंचेगा। परतु यह काम बनता नहीं; क्योंकि यह चेतन उन शरीरेंद्रियों को पाप काम करने में विनियुक्त करता हुआ पूर्व से भी अधिक मात्रा में संसार में ही डूब जाता है। ऐसे ही कुछ समय के बीत जाने पर भगवान को यों लगता है कि अब यह सृष्टि बेकार हो गयी; क्योंकि इन जीवों को सुधारना अशक्य हो गया है; अत इन्हें और भी इसी मार्ग में बढाने से रोक देना चाहिए। तब वे इस जगत का सहार कर डालते हैं। कुछ समय तक यह प्रलयावस्था ही चलती है। फिर भगवान का यह विचार होता है कि, अब और एक बार जगत की सृष्टि कर इन चेतनों का उद्धार करूंगा। उन्हें यह निराशा कभी न होती कि अबतक कई सृष्टि की गयीं, जो सब के सभी व्यर्थ हो गयीं; अतः फिर यह व्यर्थ प्रयत्न करना अनुचित है। किंतु उनका सदा यही उत्साह स्थिर रहता है कि, किसी कारण से पिछली सृष्टि व्यर्थ हुई; अबकी सृष्टि तो सफल होगी ही। श्रीविष्णु सहस्रनाम में भगवान का यह एक विल[illegible] नाम दो बार सुना जाता है कि 'अनिर्विण्णः'। भगवद्गुणदर्पणाख्य भाष्य [illegible]ाले श्रीपराशरभट्टा[illegible]ोजी इसका यह [illegible] लिखते हैं—अनिर्विण्णः—वारवार सृष्ट्यादि तथा उनके [illegible] पुरुषार्थ का [illegible] पर भी विफ[illegible] से उन्मत्त बने हुए संसारियों के, अपने (भगवान के)

अभिमुख न होने के कारण अपने प्रयत्नों के विफल होने पर भी भगवान और एक बारी में उनको अपने वश में करने की दुराशा से आलस्यशून्य रहते हैं। अत एव आप सर्वदा सृष्ट्यादि जगद्व्यापार करते ही रहते हैं।" समझना चाहिए कि प्रकृत गाथा के आधार से ही श्रीस्वामीजी ने यह अर्थ लिखा। यहां पर ध्यान देने योग्य मुख्य वार्ता यह है कि अनिर्विण्ण शब्द का अर्थ आलस्यशून्य बताया गया है। लोक में हम देखते हैं कि बारबार बेकार होनेवाले कार्य में किसीकी प्रवृत्ति आलस्य के मारे ही नहीं होती, परन्तु भगवान् इस आलस्य का अवकाश नहीं देते हुए, पुन. पुन सृष्ट्यादि काम में तत्पर होते हैं। इन्हीं आल्वार का 'पेरियतिरुवदादि' नामक प्रबंधगत यह वाक्य इस प्रकरण में स्मरण करने योग्य है कि, "शोम्बादिप्पल्लुरुवै येल्लाम् पडर्वित्त वित्ता!" इसका अर्थ यह कि, "आलस्य छोड कर इस विशाल जगत की सृष्टि करनेवाले हे *भगवन्!*" उक्त अनिर्विण्ण नाम पर यह शकर भाष्य है कि, "*अवाप्तसमस्त*-काम होने के कारण भगवान् सर्वथा दु खशून्य हैं।" इस अर्थ में कोई दोष नहीं रहता, निर्वेदशब्द का प्रसिद्ध अर्थ दु ख है। तथापि पूर्वोक्त अर्थ के सामने यह बहुत फीका पड जाता है। कहना पडता है कि दिव्यप्रबंधों का अध्ययन नहीं करने के कारण ही, श्रीशकराचार्यस्वामीजी के ध्यान में यह सुदर अर्थ नहीं आया, और वे साधारण शास्त्रार्थ ही बता कर कृतार्थ हुए॥ .... ... (११)

दूसरे शतक के दसवाँ दशक समाप्त हुआ॥

दूसरा शतक भी समाप्त हुआ॥

आल्वार तिरुवडिगळे शरणम्॥

श्रीसहस्रगीत्यां द्वितीयशतकं

सटीकं समाप्तम्॥

## ॥ सहस्रगीति - द्वितीयशतक - सारार्थसंग्रहसूची ॥

दशभिर्दशकैर्भरिते द्वितीयशतके प्रतिदशकं प्रतिपाद्यमाना अर्था अमी ॥

१. * वायुमुतिरैयुहल्लम् दशके—भगवतो विश्लेषेण भृशं विषीदन् पराङ्कुशमुनिवरः कारणमेदैरवसीदत इतरानपि वीक्ष्य तेषामप्यवसादः स्वस्येव भगवद्विश्लेषमूलक एवेत्यवधार्य तैस्तैस्सह मिलित्वा स्वयं विलपति ॥

२. * तिण्णन्वीडु दशके—विध्वस्तविश्लेषव्यसनो मुनिवरो भगवतः परत्वम् इतिहासपुराणच्छायया परान्प्रत्युपदिशति ॥

३. ऊनिल्वाळुयिरे दशके—मधुरकविमात्रसहायो मुनिवरः प्रियजनसमवायं काङ्क्षन् अशनाच्छादन लाभजमोदखेदैकनिरतेषु संसारिषु विमुखस्सन् दिव्ये धाम्नि वलसता नित्यमुक्तानां सहयोगं कामयते॥

४. * आडियाडि दशके—अधस्तनदशकप्रकाशितस्याभिनिवेशस्य अफलेप्रदित्वेन संजातो निर्वेदो जननीगिराऽवतरति ॥

५. अन्दामत्तन्पुशेयुदु दशके—प्राहमस्तगजराजदशापन्नस्य मुनिवरस्यार्तिमपाचिकीर्षुर्भगवान् यथाभ्यर्थनं सह च सूरिभिस्सन्निधाय परमानन्दमुपबृंहयति ॥

६. वैहुन्दामणिवण्णने दशके—भक्तजीवातुः परमरसिकश्च भगवान् मुनिवरेण सह संश्लिष्य स्वयमपि भृशमानन्दन् कदाचिन्मुनिवरो नैच्यानुसन्धानेन विश्लिष्येत्किमु ! इति चकितो माभूत्ते भीतिरिति दर्शीति मुनिवरेण समाश्वास्यते ॥

७. केशवन्तमर् दशके—भगवतोऽनुग्रहः (मुनिवरे) स्वस्मिन्नेवाविश्राम्यन् पूर्वापरेषु स्वसम्बन्धिसंबन्धिष्वपि प्रसमरोऽभूदिति विस्तरेण व्याहरति मुनिवरः—केशवादिद्वादशनामानुक्रमणिकया ॥

८. अणैवदरवणै दशके—पूर्वदशकोक्तार्थप्रसङ्गवशात् भगवतो मोक्षप्रदत्वरूपं पारम्यं प्रतिपादयति मुनिवरः।

९. एम्मावीडु दशके—जीवात्मनः पारतन्त्र्यपरमकाष्ठारूपस्य स्वरूपविशेषस्य भगवत्सविधे प्रार्थनापदेशेन तदाशयं प्रख्यापयति मुनिवरः ॥

१०. * किळरोळियिळमै दशके वनगिरि नामकतिरुमालिरुञ्जोलैक्षेत्रसिरिविषं प्ररोचयति मुनिवरः ॥

# सहस्रगीति (हिंदी) टीका में दूसरे शतकके अंतर्गत विशेष अर्थों की सूची (संख्या—पृष्ठसंख्या)

328. भगवत्कथाओं पर आळ्वार का दृढविश्वास।

340. पांचवें दशक की अवतारिका। आळ्वार की आर्ति देखकर भगवान नित्यसूरियों के साथ पधार कर उनसे मिलकर उन्हें परमविलक्षण ब्रह्मानंद का प्रदान करते हैं। दृष्टांततया गजेंद्रमोक्षण कथा का वर्णन।

346. श्री वेदान्ति स्वामीजी की एक विलक्षण वार्ता।

349 वस्तुतः भगवान का कोई उपमान नहीं हो सकता; तथापि कभी कभी उन्हें उपमान देना पडता है।

395. छठे दशक की अवतारिका। आळ्वार भगवान को यह आश्वासन देते हैं कि मैं नैच्यानुसंधान इत्यादि किसी कारण आपको नहीं छोडूंगा; आप निश्चित रहिए।

358. पुण्यपापों का स्वरूपविवेचन।

360. श्रीयामुनाचार्यस्वामीजी का एक ऐतिह्य।

366. भगवान हृदय से भी द्रोह करनेवालों को ही दंड देते हैं; नतु अहृदय द्रोहचेष्टा करनेवाले को।

368. आळ्वार के अवताररहस्य की सूचना।

374. सातवें दशक की अवतारिका। केशवादिद्वादशनामस्तुति। आळ्वार सविस्तर गाते हैं कि मेरे प्रति भगवान की कृपा, बहुत बढ जानेके कारण मेरे संबंधिसंबंधियों तक बहती हैं। "मरणान्तानि वैराणि" इत्यादि श्रीरामायण पद्य की टीका। भगवान चेतन पर कब और कैसे प्रसन्न होते हैं?

383. भगवान का असाधारणस्वरूप आश्रितपरतंत्रता है।

385. भगवान ही हमारे उपाय व उपेय, दोनों हैं।

392. अर्थिकल्पक शब्द का अर्थवर्णन।

394. आठवें दशक की अवतारिका। भगवान के मोक्षप्रदत्व और उसके द्वारा परत्व वर्णन करना

400. अर्जुन की पाशुपतास्त्रप्राप्ति का प्रकार; भगवान की महिमा।

401. भगवान के विभव व अर्चा अवतारों में लेटने, विराजने ओरे खडे रहने की अवस्थाएं।

404. नरसिंहावतारवर्णन ।

410. नवें दशक की अवतारिका । आळ्वार भगवान से अचेतनवत् पारतंत्र्य माँगते हैं। यह दशक श्रीमंत्र में नमश्शब्दार्थ का विवरण करता है। लक्ष्मणजी व भरतजी के दृष्टांत द्वारा शेषत्व व पारतत्र्य का स्वरूपविवरण करना। "परवानास्मि" इत्यादि पद्य का भाव।

415. गजेंद्र से आळ्वार की तुलना।

417. ज्ञानहस्तप्रदान के बारे में श्री गोविंद व श्री दाशरथि स्वामीजियों का संवाद।

419. आळ्वार के स्वर्ग मोक्षादि की चिंता न करने का कारण; "वपुरादिषु" इत्यादि पद्य का अर्थविवरण।

422. भगवानको "निर्दय" कहने का कारण।

423. भगवान को "अकारकनि" कहने का भाव।

424. अहङ्कारममकारों की क्रूरता।

427. दसवें दशक की अवतारिका। आळ्वार संसारियों को श्री वनादि का सेवन करने का उपदेश देते हैं। श्री वेंकटाद्रि व वनाद्रि में आळ्वार का विशेष अभिमान।

429. भगवान की कृपा से सर्वज्ञ बने हुए आळ्वार, अप्तविषयों की भांति लौकिक क्षुद्रविषय भी जानते हैं।

437. भगवान आलस्य छोड, क्योंकर वारवार जगत की सृष्टि करते हैं? "अनिर्विण्ण" नाम पर श्री पराशर भट्टार्य स्वामीजी का भाष्य।

॥ द्वितीयशतकटीकाविशेषार्थसूची समाप्त ॥

---

'लिबर्टी' मुद्रणालये मुद्रितम् चेन्नपुरी-१।